श्रीः

अध्वरमीमांसा-

# कुतूहलवृत्तिः

( प्रथमाध्यायस्य प्रथमचतुर्थपादात्मकस्तृतीयो भागः )





सम्पादकः

आचार्यः-श्रीपट्टाभिरामशास्त्री

श्रीलालबहादुरशास्त्रिकेन्द्रियसंस्कृतविद्यापीठम्

दिल्ली

१९७२

श्रीः

संस्कृतविद्यापीठग्रन्थमालाया अष्टमं पुष्पम्

अध्वरमीमांसा-

# कुतूहलवृत्तिः




प्रस्तावनालेखकः

**श्री बलराम उपाध्यायः**

उपकुलपतिः

वाराणसेय संस्कृत विश्वविद्यालयस्य

प्रधानसम्पादकः

**डॉ० श्रीमण्डनमिश्रः**

प्राचार्यः

श्री लालबहादुरशास्त्रिकेन्द्रियसंस्कृतविद्यापीठस्य

सम्पादकः

**श्री पट्टाभिरामशास्त्री**

मीमांसाप्राध्यापकः

वा० सं० वि० विद्यालयः, वाराणसी

**श्री लालबहादुरशास्त्रिकेन्द्रियसंस्कृतविद्यापीठम्**

दिल्ली

१९७२

❀ श्रीः ❀

# प्रस्तावना

भारतीय संस्कृति के मूल उद्गम स्रोत वेद हैं। प्राचीन भारतीय दार्शनिक वेद को अपौरुषेय अथवा ईश्वर की कृति मानकर सर्वोच्च सम्मान देते हैं। संसार के आधुनिक समालोचकों ने भी वेद को सृष्टि की सर्व प्रथम उत्कृष्ट रचना के रूप में स्वीकार किया है। वेदों की रक्षा के लिए ही हमारे महर्षियों ने विराट संस्कृत वाङ्मय का सर्जन किया है। वेदों के अङ्ग और अन्य विद्यायें भी इसी उद्देश्य से प्रवर्तित हुई हैं। इनमें वेदों के तथ्य अर्थ के निर्णय में मीमांसा-शास्त्र का प्रथम स्थान है। इसके विना वेदों के वास्तविक अर्थ का निर्णय करना सम्भव नहीं है।

मीमांसा शब्द का अर्थ ही है 'पूजित विचार'। इसी लिए इसे विचार-शास्त्र भी कहा जाता है। महर्षि जैमिनि इस शास्त्र के प्रवर्तक हैं। उन्हीं के सूत्रों के आधार पर इस शास्त्र का भूरि विकास हुआ। आचार्य श्री शबरस्वामी ने इन सूत्रों पर भाष्य लिखा है और इसके अनन्तर इस शास्त्र में अनेक ग्रन्थ स्वतन्त्र रूप से लिखे गये हैं। किन्तु समस्त जैमिनि सूत्रों पर वृत्ति के रूप में केवल दो ही ग्रन्थ मिलते हैं। एक सुवोधिनी वृत्ति दूसरा कुतूहल वृत्ति। सुवोधिनी वृत्ति अत्यन्त संक्षिप्त है। लेकिन कुतूहल वृत्ति एक पूर्ण और विशाल वृत्ति ग्रन्थ है। इसके लेखक आचार्य श्री वासुदेव दिक्षित जो कि वेद वेदाङ्ग, विशेषतः व्याकरण और श्रौत सूत्रों में प्राप्त वैदुष्य ने दक्षिण के तंजौर महाराजा के आश्रय में रह कर १८ वीं शताब्दी में इस ग्रन्थ की रचना की। यह ग्रन्थ प्रायः तीन शताब्दियों तक अप्रकाशित था।

पं० पट्टाभिरामशास्त्री ने तालपत्रों में ग्रन्थ लिपि से लिखा हुआ इस ग्रन्थ को देवनागरी लिपि में लिखकर पांच छः और तालपत्र पुस्तकों से पाठ भेदों का उद्धरण करते हुए इस ग्रन्थ का संपादन किया। श्री लालबहादुरशास्त्रिकेन्द्रियसंस्कृत विद्यापीठ, दिल्ली इस ग्रन्थ का प्रकाशन कर रहा है। यह कार्य विद्यापीठ के लिये अत्युत्तम है ! इसके प्रथम भाग की प्रस्तावना डॉ. वी. गोपाल रेड्डी एवं द्वितीय भाग की प्रस्तावना श्री भक्त दर्शन ने लिखा है। उसी शृंखला में इस तीसरे भाग की प्रस्तावना के द्वारा यह महत्वपूर्ण ग्रन्थ संस्कृत समाज को समर्पित करते हुए मुझे परम हर्ष हो रहा है।

इस विश्वविद्यालय का गौरव है कि मीमांसा शास्त्र के प्रख्यात विद्वान् म. म. पं. चिन्नस्वामी शास्त्री जी के शिष्य आचार्य श्री पट्टाभिराम शास्त्री की सेवायें उपलब्ध हो रही हैं। और शास्त्री जी अपने असाधारण वैदुष्य और साधना के माध्यम से इस महान् कार्य के पूर्ति में लगे हुए हैं। लगभग १५०० पृष्ठ का ग्रन्थ तीन भागों में निकला है। इसका चौथा भाग भी लगभग ६०० पृष्ठ का शीघ्र ही निकलेगा। मैं इस उपलक्ष में श्री पं० पट्टाभिराम शास्त्री का अभिनन्दन करता हूं। और विद्यापीठ जिसका संबन्ध इस विश्वविद्यालय से है बधाई का पात्र है कि उसने इतने विशाल और उत्तम ग्रन्थ का प्रकाशन किया।

वाराणसेय संस्कृत विश्वविद्यालय,
वाराणसी
१७ मार्च १९७२ ई०

**बलराम उपाध्याय**
उपकुलपति

श्रीः

## प्रधानसम्पादकीयम्

अयं कुतूहलवृत्तेस्तृतीयो भागः। अत्र नवमाध्यायः दशमाध्यायस्य चत्वारः पादाश्च प्रकाशिताः। अचिरेणैव चतुर्थभागोऽपि प्रकाशमेष्यति। अस्मिन्नेव हायने समग्रस्य ग्रन्थस्यास्य प्रकाशनमभिमतमासीत्, किन्त्वनिवार्यैः कैश्चन प्रत्यूहैरभिमतं न संसिद्धमिति नितरां खिद्ये। महत्सु प्रत्यूहेषूपस्थितेष्वपि तानपाकृत्य विशालकायस्यास्य ग्रन्थस्य सम्पादनकार्ये निरन्तरं संलग्नेभ्यः पूज्यपादेभ्यः श्री पट्टाभिरामशास्त्रिचरणेभ्यस्सश्रद्धं मदीयां कृतज्ञतामाविष्करोमि।

तृतीयभागस्यास्य प्रस्तावनालेखनेन वाराणसेयसंस्कृतविश्वविद्यालयस्योपकुलपतयः श्रद्धेयाः श्री बलराम-उपाध्याया नितरामस्माननुगृह्णन्निति तेषां विद्यापीठपरिवारस्सर्वथाधमर्णः।

चतुर्थमपि भागं शीघ्रमेव यथायथं सम्पाद्यास्मभ्यं दातुं श्रीगुरुचरणानभ्यर्थये।

**मण्डनमिश्रः**
प्राचार्यः

श्री लालबहादुर शास्त्रि केन्द्रिय
संस्कृत विद्यापीठस्य
दिल्ली ६-३-७२

श्रीः

# किञ्चिन्निवेदनम्

अयमिदानीं श्रीवासुदेवदीक्षितविरचितायाः कुतूहलवृत्तेस्तृतीयो भागो नवमदशमचतुर्थपादान्तः प्रकाशपथमानीयते। तृतीयभाग एव सर्वो ग्रन्थः प्रकाशनीय इति पूर्वं निरचैषम्। किन्तु कतिपयैः प्रबलैः प्रत्यूहैः तथा कर्तुं न समर्थोऽभूवमिति विद्वत्तल्लजान्मर्षयितुं मां प्रार्थये। अद्य-यावद्विशेषेण कृतेऽपि यत्ने द्वादशाध्यायभागो न क्वापि लब्धः। तेन विना ग्रन्थस्य पूर्णता न सम्पद्यत इति तल्लाभायाधुनापि यतमानोऽस्मि। परमेष्ठिनः कृपया क्वचित्तावान् भागः प्राप्नुयादेवेति विश्वसिमि। अतश्चतुर्थभागेन ग्रन्थोऽयं पूरणीय इत्यधुना निरणैषम्। यदि द्वादशाध्याय-भागो लभ्येत तर्हि सफलो मे मनोरथः। यदि वा कदाचिन्न लभ्येत तर्हि चतुर्थभागस्य कृते दशमपञ्चमपादप्रभृत्येकादशाध्यायान्तग्रन्थावशेषण-मुचितमित्यवधार्य तृतीयभागमिमं दशमस्य चतुर्थपादान्तं प्राकाशयम्। तदिदमागो मदीयं मर्षयेयुरेव विद्वन्मणय इति सम्भावयामि।

ग्रन्थकृता तत्र तत्र सञ्चारितानां न्यायानां विवरणं मदीयं समाप्तमेव, भूमिकापि मदीया बृहती समाप्तैव, विषयवाक्यानामाकरसूच्यप्यवसित-प्रायैव, तथाप्यस्मिन् भागे तत्प्रकाशनं न सङ्गतमिति केवलं पूर्ववत् सूत्रसूचीमधिकरणसूचीश्च सन्न्यवेशयम्। यद्यपि दशमाध्यायान्तभागस्य प्रकाशनं समुचितम्, तथापि मुद्रणालयकर्मचारिणां 'धर्मघटेन' मध्ये कार्यस्यावरुद्धत्वात् वित्तीयवर्षग्रहनिगडनिगडितत्वाच्च समुचितमपि कार्यं न सम्पन्नमिति नितरां खिद्ये।

अस्मिन् भागे नवमाध्यायस्य विषय ऊहः, दशमस्य च बाधः। दशमस्याष्टौ पादाः, तेषु चत्वारः पादा अत्र प्रकाशिताः। मीमांसायामूहो बाधश्च मुख्यौ विषयौ। अतिदेशषट्के विषयाविमौ प्राधान्यमावहतः।

प्रकृतितो विकृतावतिदिष्टान् पदार्थानवलम्ब्यैवोहस्य प्रसर इत्यतिदेशाध्यायानन्तरमूहाध्यायः। यस्य पदार्थस्य यत्पदार्थसंस्कारकतोपदेशादवगता, तस्य पदार्थस्य तद्विलक्षणपदार्थसंस्काराय विकृतः प्रयोग ऊहः कथ्यते। विकृतौ प्राकृतपदार्थकार्यापन्नपदार्थान्तराणां सम्बन्धेन प्रकृतितोऽतिदिष्टानां मन्त्राणां साम्नां संस्काराणाञ्चान्यथाभावः कर्तव्यो भवति। तेन मन्त्रोहः सामोहः संस्कारोहश्चेति त्रैविध्यमापद्यते। प्राकृतपदार्थकार्यापत्तिश्च क्वचित्प्रत्यक्षेण। यथा 'नैवारश्चरुर्भवति' इति विकृतौ श्रुतो नीवारः प्राकृतव्रीहिकार्यापन्नः। यथा व्रीहयः पुरोडाशं हविर्निर्वर्तयन्तः प्रत्यक्षेण यागसाधनम्, तथैवायं नीवारः प्रत्यक्षेण व्रीहिकार्यहविर्निष्पादकस्सन् यागसाधनम्। अतो व्रीहिकार्यापन्नेषु नीवारेषु व्रीहिधर्माणां प्रोक्षणावघातादिसंस्कारणामूहस्संस्कारोहः। एवं क्वचित्तत्कार्यापत्तिरनुमानेन सिध्यति। यथा—"नैर्ऋतं चरुं निर्वपेत् कृष्णानां व्रीहीणां नखनिर्भिन्नानाम्" इत्यत्र श्रुतनखस्य प्राकृतोलूखलमुसलकार्यापत्तिः न प्रत्यक्षेणावगम्यते, उलूखलमुसलयोः कार्यमवहननम्, नखस्य च विदलनम् इति कार्यभेदात्। व्रीहिनीवारयोर्हविर्निष्पादकत्वस्य समानत्वात्तत्र यथा प्रत्यक्षेण कार्यापत्तिरवसीयते, न तथा प्रकृते। किन्तूलूखलमुसलाभ्यामवहननेन तुषविमोकद्वारा तण्डुलनिष्पत्तिर्यथा जायते, तथैव नखेन विदलनेन तुषविमोकद्वारा तण्डुलनिष्पत्तिर्भवतीति प्राकृतावघातस्योलूखलमुसलकार्यतायां यद्रूपं तद्विदलनेऽपि समानम्। अतस्तेन रूपेणावहननविदलनयोरेकरूपत्वस्योन्नेयत्वात्तत्कार्यापत्तिरनुमानेनेति व्यवह्रियते। तथा चोलूखलमुसलधर्माणां प्रोक्षणादीनां नखे ऊहस्सिध्यति। अयमपि संस्कारोहः। क्वचित्प्राकृतकार्यस्य विकृतौ स्वशब्दत उपादानं कार्यापत्तौ प्रमाणम्। यथा—'परिधौ पशुं नियुञ्जीत' इत्यत्र प्राकृतकार्यं नियोजनं 'नियुञ्जीत' इति स्वशब्दत उपात्तमिति परिधेस्तत्कार्यापत्तिः। तत्र सम्भवद्यूपसंस्काराः क्रियन्ते। एवमभावे विधिरपि कार्यापत्तौ प्रमाणम्। यथा—'षडहे संस्थिते मध्वाशयेत्' इत्यत्र षडहाभावे विधीयमानं मध्वशनं षडहकार्यापन्नम्। क्वचिच्च

कार्यापत्तिः प्रत्यक्षवचनावगतप्राकृतनिवृत्त्यनुमितशब्देन स्वीक्रियते । यथा-'यज्ञायज्ञो वो अग्नये गिरा गिरा च दक्षसे । प्रप्रवयम्' इत्यस्यामृचि ज्योतिष्टोमे यज्ञायज्ञीयं नामाग्निष्टोमसाम गीयते । तत्र श्रुतम्—'न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम्' इति । अनेन गिरापदं गिरापदगीतिश्च प्रतिषिध्य तत्स्थाने इरापदं इरापदगीतिश्च विधीयत इति स्थितिः । तत्र प्रतिषेधेन प्रत्यक्षेण गिरापदनिवृत्तौ सत्यां तत्कार्यस्य गीतिरूपस्य साधनापेक्षत्वात् तत्कार्यवाचिपदमनुमाय गिरापदकार्यार्थम् 'ऐरं कृत्वोद्गेयम्' इत्येवं रूपेण श्रुतानुमितैकदेशनिष्पादितेन वाक्येन गिरापदकार्यापत्तिरिरापदस्यावसीयते । अत्र सामोहः । मन्त्रोहस्त्वष्टधा भवति-प्रकृत्यूहः, वचनोहः, लिङ्गोहः, प्रकृतिवचनोहः, प्रकृतिलिङ्गोहः, लिङ्गवचनोहः, प्रकृतिलिङ्गवचनत्रितयोहः, कृत्स्नपदाभ्यासलक्षणश्चेति । 'अग्नये जुष्टं निर्वपामि' इति मन्त्रे सौर्यचरौ प्राप्तेऽग्निपदस्थाने सूर्यपदं प्रक्षिप्य 'सूर्याय' इत्यूह्यते। अयं प्रकृत्यूहः । अग्नीषोयपशौ 'छागस्य वपाया मेदसः' इति मन्त्रः । स च प्राजापत्यपशुष्वतिदिष्टः । तत्र 'छागस्य' इति स्थाने 'छागानाम्' इत्यूहः । अयं वचनोहः । ज्योतिष्टोमे सोमक्रयसाधनीभूताया एकहायन्या मन्त्रः 'वस्व्यसि रुद्रासि' इति । स च विकृतिविशेषे सोमक्रयणं वत्सतरं प्राप्तः 'वसुरसि रुद्रोऽसि' इत्यूह्यते । अयं लिङ्गोहः । 'अग्नये जुष्टम्' इति मन्त्रे वैश्वदेवचरुं प्राप्ते 'विश्वेभ्यो देवेभ्यो जुष्टम्' इति प्रकृतिर्वचनश्चोह्येते । अयं प्रकृतिवचनोहः । अयमेव मन्त्रः आदित्यचरुं प्राप्तः । तत्र 'अदित्यै जुष्टम्' इत्यूह्यते । अयं प्रकृतिलिङ्गोहः । 'प्रास्मा अग्नि भरत' इति मन्त्रः 'मल्ला आलभेत' इति विहितपशून् प्राप्तः । तत्र 'प्राभ्योऽग्निम्' इति लिङ्गं वचनश्चोह्येते । 'आपो देवीः' इति मन्त्रः सोमारौद्रचरौ विहितप्रोक्षणसाधनघृतं प्राप्तस्सन् 'घृत देव' इत्यूह्यते । अत्र प्रकृतिलिङ्गवचनानामूहः । क्वचित्सकलपदस्याभ्यासरूप ऊहः । यथा—'एकधास्य त्वचमाच्छ्यतात्' इति मन्त्रे पशुगणं प्राप्ते तत्र 'एकधा एकधा' इत्यूहः । एवं नवमे सापवाद ऊहो विचारितः ।

आतिदेशिकपदार्थगतरूपान्तरात्मकस्योहस्य निरूपणानन्तरं तन्निवृत्त्यात्मको बाधो दशमस्य विषयः। निवृत्तिश्च द्वारलोपात्प्रत्याम्नानात् प्रतिषेधाच्च भवति। तत्र द्वारलोपान्निवृत्तिरनेकविधा। 'प्रकृतिवद्विकृतिः कर्तव्या' इत्यतिदेशवाक्यप्रवृत्त्यवसरे प्रकृतावविज्ञाताङ्गत्वेन तद्ग्राह्यत्वासम्भवात्कस्यचिन्निवृत्तिः। यथा—दर्शपूर्णमासाङ्गत्वेन 'दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयां निर्वपेत्' इत्यन्वारम्भणीयेष्टिर्विहिता। इष्टित्वेनान्वारम्भणीया दर्शपूर्णमासविकृतिः। तस्यां प्रयाजादिभिरङ्गैस्सहान्वारम्भणीयापि चोदकेन प्राप्तिमर्हति। किन्तु अन्वारम्भणीयेष्टेर्विधानसमये दर्शपूर्णमासाङ्गत्वमस्या न विज्ञातम्। अतोऽतिदेशवाख्येन नेयमिष्टिर्गृह्यते। अङ्गत्वेन ज्ञात एव पदार्थोऽतिदेशविषयो भवति। अतोऽन्वारम्भणीयाया ग्रह्यत्वासम्भवान्निवृत्तिः। अतिदेशवाक्यप्र वृत्तिकाले कस्यचित्प्रकृतौ विज्ञाताङ्गभावस्याप्यसम्भवान्निवृत्तिः। यथा—पवमानेष्टिष्वग्निहोत्रहवण्याः। आधाने तिस्रः पवमानेष्टयः—'अग्नये पवमानाय, अग्नये शुचये, अग्नये पावकाय' इति विहितास्सन्ति। इष्टित्वेनेमा दर्शपूर्णमासविकृतयः। दर्शपूर्णमासयोः 'अग्निहोत्रहवण्या हवींषि निर्वपति' इति हविर्निर्वापसाधनत्वेनाग्निहोत्रहवणी (पात्रं) विहिता। येनाग्निहोत्रं हुतं तत्पात्रमग्निहोत्रहवणी कथ्यते। अग्निहोत्रश्चाग्निसिध्यनन्तरं सायं प्रातर्नियमेन क्रियमाणं कर्म। अग्निसिद्धिश्चाधानेन भवति। आधाने च पवमानेष्टयोऽङ्गम्। अथवा पवमानेष्टिभिरप्यग्निसिद्धिर्भवति। तत्र पवमानेष्ट्यनुष्ठानसमये प्रकृतौ विज्ञाताङ्गभावाया अप्यग्निहोत्रहवण्या निवृत्तिरेव, तदानीमग्निहोत्रस्याननुष्ठितत्वात्। अतः पवमानेष्टिष्वसम्भवादग्निहोत्रहवण्या बाधः। आयुष्कामेष्टौ 'प्राजापत्यं चरुं घृते निर्वपेच्छतकृष्णलमायुष्कामः' इति विहितायामवघातस्य बाधः। इष्टित्वेनेयं दर्शपूर्णमासविकृतिः। तत्र तुषविमोकाय व्रीहिषु 'व्रीहीनवहन्ति' इत्यवहननं विहितम्। तदत्रायुष्कामेष्टावतिदिष्टम्। अतिदेशस्य द्वारं तुषविमोकः। कृष्णलेषु च द्वारभूततुषविमोकस्याभावादवघातस्य, 'अवरक्षो दिवस्सपत्नम्' इति

मन्त्रस्यावघातसाधनस्योलूखलमुसलादेश्च निवृत्तिः। ज्योतिष्टोमविकृतौ साद्यस्क्राख्ये सोमयागे 'खलेवाली यूपो भवति' इति यूपो विहितः। धान्यशातनस्थानं खलः। धान्यशातनाय बलीवर्दानितस्ततस्सञ्चाराद्वारयतीति खलेवाली, खले निखाता बलीवर्दबन्धनार्था स्थूणेत्यर्थः। इयं स्थूणा साद्यस्क्राङ्गपशुयागे यूपत्वेन ग्राह्या भवति। ज्योतिष्टोमाङ्गाग्नीषोमीयपशुयागे 'यूपं छिनत्ति' 'यूपं तक्षति' 'यूपमुच्छ्रयति' इति छेदनतक्षणोच्छ्रयणादीनि विहितान्यत्रातिदेशतः प्राप्तानि। किन्तु खलेवाल्याः पूर्वमेव छित्वा तक्षणेन श्लक्ष्णीकृत्य निखातायाः छेदनतक्षणोच्छ्रयणादीनां निवृत्तिः। कृष्णलचरौ प्राशित्रेडाभक्षणार्थेषु कृष्णलेषु अभिघारणनिवृत्तिः। प्रकृतौ दर्शपूर्णमासयोः प्राशित्रेडाभक्षणार्थे पुरोडाशेऽभिघारणं क्रियते। अभिघारणञ्चेदं भक्ष्यद्रव्यस्य स्वादिमसम्पादनाय क्रियते। तदत्र कृष्णलचरौ प्राप्तमपि तेन स्वादिम्नस्सम्पादयितुमशक्यत्वान्निवर्तते। क्वचिद्व्याघाताद्बाधः। यथा—आग्रयणे 'वत्सः प्रथमजो वासो दक्षिणा' इति वासोवत्सं दक्षिणत्वेन विहितम्। प्रकृतौ च दर्शपूर्णमासयोः 'अन्वाहार्यपचनो दक्षिणा' इत्यन्वाहार्यपचनस्य दक्षिणात्वेन विधानम्। अन्वाहार्यो नाम ओदनः। तस्य पाको दक्षिणाग्नौ विहितः। वासोवत्सस्यान्वाहार्यधर्मकत्वम्। तत्र प्रकृतौ क्रियमाणः पाकः विकृतौ वाससो वत्सस्य च न भवति। वत्सस्य पाके व्याघातस्स्यात्, वाससः पाके पाकप्रयोजनाभावः। अतोऽत्र पाको निवर्तते। एवमादिकं बाधं त्रिषु पादेषु सापवादं विचार्य चतुर्थपादे समुच्चयस्सापवादो विचारितः। यथा—नक्षत्रेष्टौ विहितानां 'सोऽत्र जुहोति, अग्नये स्वाहा, कृत्तिकाभ्यस्स्वाहा' इत्यादीनामुपहोमानां प्रकृतितः प्राप्तैर्नारिष्ठहोमैः समुच्चयः। यदि उपहोमानां नारिष्ठहोमकार्यापन्नत्वं स्यात्तर्हि उपहोमैर्नारिष्ठहोमा बाध्येरन्। कार्यापत्तौ पञ्च प्रमाणानि प्राक्प्रादर्शयम्—प्रत्यक्षम्, अनुमानम्, स्वशब्दत उपादानम् अभावे विधिः, प्रत्यक्षवचनावगतप्राकृतनिवृत्त्यनुमितशब्दश्चेति। तेषु कस्याप्यत्र प्रसाराभावादुपहोमानां नारिष्ठहोमानाञ्च समुच्चय एव।

एवमनेकेषु स्थलेषु समुच्चयविचारश्चतुर्थपादे कृतः। अवशिष्टेषु चतुर्षु पादेषु बाधसम्बन्धिनोऽनेके विषया निरूपिताः। तान् चतुर्थभागे विशदयामः। एवमयं तृतीयो भागो नवमदशमचतुर्थपादान्तः प्रकाशपथमानीतः।

चतुर्थभागप्रकाशनाय डा. मण्डनमिश्रशास्त्रिणानुमतिर्दत्तेति तं सानन्दं धन्यवादशतैः पूरयामि। केन्द्रियसंस्कृतविद्यापीठस्य गौरपसंवर्द्धकान्येतादृशानि प्रकाशनसम्बन्धीनि कार्याणि साधूनि कर्तुं प्रेरयद्भ्यः तदर्थं सामग्रीजातमेकीकृत्य प्रददद्भ्यः डा. आर. के. शर्म महोदयेभ्यः स्वीयां हार्दिकीं कृतज्ञतां प्रकाशयामि। ग्रन्थस्यास्य सम्पादने प्रथमे प्रोत्साहकाः डा. श्री राघवन् महाभागाः। तानहं न विस्मर्तुं शक्नोमि। तेषां प्रेरणयैव कष्टतमेऽस्मिन् कार्ये प्रावर्तिषि। अतस्तान् धन्यवादैस्सभाजयामि। अनन्तेषु विश्वविद्यालयीयकार्येषु मग्ना अपि श्रद्धेया उपकुलपतयः श्री बलराम उपाध्याया अस्य भागस्य प्रस्तावनां विलिख्य प्रादुरिति तेऽवश्यं धन्यवादार्हाः। तेभ्योऽहं हार्दिकीं कृतज्ञतामाविष्करोमि। आपतत्स्वपि घोरेषु प्रत्यूहेषु कथमपि समये भागस्यास्य प्रकाशने दत्तचित्तं मुद्रणालयव्यवस्थापकं चिरायुषं श्रीघनश्यामोपाध्यायमाशिषा संवर्द्धयामि। अन्ये च येऽक्षरसंयोजकाः, अक्षरसंशोधकाः कार्यालयप्रबन्धकाः कर्मचारिणः ते सर्वेऽपि नूनं स्तुतिभाज इति तान् भूयो भूयः प्रोत्साहयामि।

संस्कृतविश्वविद्यालयः,
वाराणसी
१-३-७२

विदुषां विधेयः
**पट्टाभिरामशास्त्री**

# अध्वरमीमांसाकुतूहलवृत्तेस्तृतीयभागस्याधिकरण-सूची

**नवमस्य तृतीयः पादः**



**नवमस्य चतुर्थः पादः**

दशमस्य द्वितीयः पादः

## दशमस्य तृतीयः पादः



## दशमस्य चतुर्थः पादः

अधिकरणसूची समाप्ता



❀ श्रीः ❀

अध्वरमीमांसा-

# कुतूहलवृत्तौ

## नवमाध्यायस्य प्रथमः पादः ॥



निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

[1]अतिदेशोपजीव्यकत्वादतिदेशनिरूपणानन्तरमूहो निरूप्यते । यस्य पदार्थस्य यत्पदार्थसंस्कारकतोपदेशादवगता[2], तस्य पदार्थस्य तद्विलक्षणपदार्थसंस्काराय विकृतः प्रयोग ऊहः । स च त्रिविधः—मन्त्रोहः सामोहः संस्कारोहश्च । "अग्नये जुष्टम्" इति मन्त्रस्य हि उपदेशेनाग्निस्मारकतयावगतस्य सौर्यादियागेषु सूर्यादिस्मारकतया प्रयोगे सूर्याय जुष्टमिति विकारः । रथन्तरादिगीतेश्च प्रत्यक्षपाठानुमितेनोपदेशेन "अभि त्वा शूर" इत्यादिस्वयोनिभूतर्क्संस्कारकतयावगताया ऋगन्तरसंस्कारकतया विकृतः प्रयोगः । अवघातादिसंस्कारस्य च व्रीह्याद्यर्थतयोपदेशेनावगतस्य नीवाराद्यर्थतया विकृतः प्रयोगः । कर्मकारकभेदेन क्रियाया भिन्नतया नीवारादिकर्मकारकभेदे सत्यवघातादिक्रियाया अन्यथाभावावश्यम्भावात्[3] । तदिहोहविचारोपोद्घातत्वेनेदं चिन्त्यते—किमवघातादिधर्मा यजिमात्रार्थाः[4] ? उतापूर्वभावनार्था[5] अपि ? तदर्थञ्च[6] किं "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति

---

१. अतिदेशोपजीवकत्वात्. क. २. अभिहिता. क.
३. अन्यथाभावाभावात्. ग, ४. यज्ञमात्रार्थाः. ग.
५. भावार्थाः ग. ६. नास्ति. क.

यज्युद्देशेन धर्मविधायकम् ? उत फलकरणेतिकर्तव्यताविशिष्टभावनाविधायकम् ? इति। "तत्र स्वर्गकामो दर्शपूर्णमासाभ्यां यजेत" इति वाक्येनाग्नेयादियागानां फलसम्बन्धसिद्धेरनन्यार्थं स्वर्गकामवाक्यं यज्युद्देशेन धर्मविधायकम्। उद्देश्यस्य च यजेर्दर्शपूर्णमासादिना विशेषणासम्भवाद् उपदेशेनैव "अग्नये जुष्टम्" इत्यादयो मन्त्राः अन्ये च धर्मा विकृतिषु भवन्ति। तत्र च[1] यथासम्भवं दृष्टमदृष्टं वा प्रयोजनं कल्प्यमिति नोहं भजेरन्। ततश्चोहविचारो नारम्भणीय इति प्राप्ते, सिद्धान्तयति—

**यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥**

यज्ञकर्म-यागकार्यमपूर्वम् इतिकर्तव्यतां प्रति प्रधानम्। हि यतः, तदपूर्वं चोदनाभूतं-विधानं प्राप्तं भवति। अतस्तस्यापूर्वस्य द्रव्येषु संस्कारः—अवघातादिः, द्रव्यसंस्कारग्रहणं सर्वधर्मोपलक्षणम्। तत्प्रयुक्तः-अपूर्वप्रयुक्तः, तदर्थत्वात्-धर्माणामपूर्वार्थत्वात्। सामान्यविषयकं हि सर्वकामवाक्यं यावत्प्रवर्तते, ततः प्रागेव झटिति स्वर्गकामवाक्यं फलकरणेतिकर्तव्यताविशिष्टां भावनां विधत्ते। सर्वकामवाक्ये सर्वशब्दश्च गोबलीवर्दन्यायेन ( ) स्वर्गातिरिक्तपरः, भावनाभेदश्च द्वितीये साधितः। ततश्च यथाप्रकरणं व्यवस्थिता धर्मा दशमाद्याधिकरणन्यायेन ( ) कार्यमुखेनातिदिष्टा भवन्ति। एवञ्चाग्नये जुष्टमित्यादिमन्त्रस्य सौर्यादिषु[2] प्रकृतिवद्वक्ष्यमाणदेवताप्रकाशनार्थं सूर्याय जुष्टमित्येवम्प्रकारेण ऊहः कर्तव्य इत्यूहविचार आरम्भणीयः। सप्तमाद्याधिकरणसिद्धोऽप्ययमर्थ ऊहस्यातिदेशाधीनत्वस्फोरणार्थं स्मार्यत इति न पुनरुक्तिदोषः॥

इत्यूहारम्भाधिकरणे प्रथमं वर्णकम्॥

## वर्णकान्तरम्

एतदस्वरसादेव भाष्ये वर्णकान्तरं वर्णितम्। तद्यथा—सप्तमाद्याधिकरणे धर्माणामपूर्वार्थत्वं स्थितम्। तत्रावघातादीनामपूर्वार्थत्वे किं व्रीह्यादिस्वरूपमेव द्वारम्? उत व्रीह्यादिषु यदपूर्वसाधनविशेषरूपं तदेव द्वारम्? इति। तत्र श्रुतव्रीह्यादिस्वरूपस्याविवक्षाकारणाभावात् तद्द्वारैवापूर्वार्थत्वम्। ततश्च नैवारचरौ द्वारभूत-

---

१. च नास्ति, क. २. विकृतिषु क.

व्रीह्यादिस्वरूपस्याभावाद् अवघाताद्यप्राप्तेर्न सिध्यत्यूह इति तद्विचारो नारम्भणीय इति प्राप्ते, सिद्धान्तयति—

**यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥१॥**

यज्ञकर्म-यागकार्यमपूर्वं धर्मान्प्रति प्रधानम्। कुतः? हि यतः, तत्-अपूर्वं चोदनाभूतं-विधानं प्राप्तम्। तस्य—अपूर्वस्य सम्बन्धिषु व्रीह्यादिषु, अवघातादिसंस्कारः तत्प्रयुक्तः—अपूर्वसाधनविशेषरूपद्वारकः, न तु व्रीह्यादिस्वरूपद्वारकः। कुतः? तदर्थत्वात्-धर्माणामपूर्वार्थत्वात्। व्रीह्यादिस्वरूपार्थत्वे आनर्थक्यात्। न चैवमपि प्रकृतत्वाद्दार्शपूर्णमासिकापूर्वसाधनविशेषरूपस्यैव द्वारत्वं स्यात्। तथा च कथमूहसिद्धिरिति वाच्यम्। दर्शपूर्णमासापूर्वं हि यद्यपि प्रकृतं, तथापि न प्रकृतापूर्वसाधनत्वेन व्रीह्यादिपदं लक्षयति, किन्त्वपूर्वसाधनरूपमात्रेण, तावतैवाकाङ्क्षाशान्तेः। न चैवं सति नीवारादिष्वप्युपदेशत एव धर्मप्राप्तेरूहोच्छेद इति वाच्यम्, प्रकृतौ नीवारादीनामपूर्वसाधनत्वेनानुपस्थितेः। तदुपस्थितावप्यनुवादस्य सति सम्भवे सन्निहितगामित्वेन प्रकृतव्रीह्यादीनामेव तेन रूपेणोद्देशात्। न चैवमपि प्रकृत[1]स्रुवजुह्वादिष्वप्यवघातविधेरतिप्रसङ्ग इति वाच्यम्। 'तेषामर्थेन सम्बन्धः' इत्यधिकरणोक्तरीत्या ( ) प्रत्यासत्तिबलेनावान्तरापूर्वार्थत्वाश्रयणात्। ततश्च तण्डुलप्रणाड्या अपूर्वसाधनमवहन्यादिति वचनव्यक्तिः। एवञ्च प्रकृतिवत्कुर्यादित्यतिदेशेऽप्यवहतैस्तण्डुलैरपूर्वं कुर्यादित्यर्थस्य नीवारेष्वपि सम्भवात् सिद्ध्यत्यूह इति तद्विचार आरम्भणीयः। तथा "प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति" इति शास्त्रस्यापि तण्डुलनिष्पत्तिद्वारा यदपूर्वसाधनं तुषविमोचनं तत्साधनाभ्यामपूर्वं कुर्यादिति पर्यवसानम्। ततश्च "कृष्णानां व्रीहीणां नखनिर्भिन्नं नैर्ऋतं चरुम्" इत्यत्र तुषविमोचनसाधनीभूतनखेष्वपि प्रोक्षणस्य सिद्ध्या भवत्यूहः। एवमपूर्वीयदेवतास्वरूपविशेषप्रयुक्तत्वात् "अग्नये जुष्टम्" इत्यादिमन्त्रस्य सौर्यादौ सूर्याय जुष्टमित्याद्यूहः। तदेतदिह संक्षिप्तं 'संस्कारे युज्यमानानाम्' इत्याद्यधिकरणत्रयेण प्रपञ्चयिष्यत इत्यपुनरुक्तिः॥

इति प्रथमाधिकरणे द्वितीयं वर्णकम्॥

---

१. स्रुव. नास्ति. क.

## वर्णकान्तरम्

अत एवास्वरसाद् वर्णकान्तरं वा। यद्यपि सप्तमाद्याधिकरणे धर्माणामपूर्वार्थत्वं स्थितम्, तथापि भवत्वारादुपकारकाणां प्रयाजादीनामपूर्वार्थत्वम्, सन्निपातिनान्त्ववघातादीनां श्रुत्यादिना व्रीह्यादिसंयुक्तानां प्रकरणादपूर्वार्थत्वं न सम्भवति, 'असंयुक्तं प्रकणादितिकर्तव्यतार्थत्वात्' इत्यधिकरणे श्रुत्याद्यसंयुक्तस्यैव प्रकरणविनियोज्यत्वस्य[1] निर्णीतत्वादिति प्राप्ते, सिद्धान्तयति—

**यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥१॥**

श्रुत्यादिना व्रीह्याद्यर्थत्वावगमेऽपि न तन्मात्रेण पर्यवसानम्। अवघातादिकं विनापि व्रीह्यादिस्वरूपसम्पत्त्या तदानर्थक्यात्। किन्तु व्रीह्यादिस्वरूपद्वारापूर्वार्थत्वमित्येव वक्तव्यम्। ततश्च प्रकरणेन श्रुत्याद्यवगतव्रीह्याद्यर्थत्वनिर्वाहायैवापूर्वार्थताबोधनेनानुगुणतया प्रकरणादपूर्वार्थत्वं सङ्गच्छते। 'असंयुक्तं प्रकरणात्' इत्यत्र च प्रकरणविरोधिश्रुत्यादिसंयुक्तस्य न प्रकरणविनियोज्यत्वमित्येतावदेव विवक्षितम्। ततश्च सन्निपातिनामप्यतिदेशात् सिध्यत्यूहः। सूत्रार्थस्तु—प्रथमवर्णकवत्। द्रव्यसंकारग्रहणन्तु न प्रदर्शनार्थमिति भेदः।

इति प्रथमाधिकरणे तृतीयं वर्णकम् ॥

## वर्णकान्तरम्

इदमपि वर्णकं प्रकरणाधिकरणेनैव [2]गतप्रायमित्यस्वरसाद्वर्णकान्तरं वर्णितं भाष्ये। तद्यथा—सप्तमाद्याधिकरणे तावद्धर्माणामपूर्वार्थत्वं स्थितम्। तेषाञ्चापूर्वार्थानां धर्माणामनुष्ठाने किं यजिर्निमित्तम्? उतापूर्वम्? इति संशये, साध्यतयाऽवगम्यमानस्यापूर्वस्य न धर्माणामनुष्ठाने निमित्तता युक्ता। यागस्य तु करणतया सिद्धत्वेनावगम्यमानत्वाद्युक्तं तन्निमित्तत्वम्। ततश्च तुल्यन्यायेन व्रीह्यादिस्वरूपस्यैवावघातादिनिमित्तत्वात् नीवारादिषु तदभावान्नोहस्सिध्यतीति प्राप्ते, सिद्धान्तयति—

---

१. विनियोज्यस्य. क.

२. गतार्थं. अ, क.

**यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥१॥**

यज्ञकर्म यागकार्यमपूर्वं धर्मान्प्रति प्रधानम्। हि यतः, तत्-अपूर्वं चोदनाभूतं—विधानं प्राप्तम्। तस्यापूर्वस्य साध्यतयाऽवगम्यमानस्य साधनेषु [1]व्रीह्यादिद्रव्येषु संस्कारः-अवघातादिः तत्प्रयुक्तः-अपूर्वनिमित्तकः। तदनुष्ठाप्य इति यावत्। तदर्थत्वात्—अपूर्वसाध्यकत्वात्। इह हि यच्छब्दाद्यभावाद्यजेरपूर्वस्य वा निमित्तत्वं न केनापि शब्देन प्रतीयते, किन्तु धर्माणां प्रवृत्तेः कादाचित्कत्वादार्थिकं तन्निमित्तत्वम्। [2]तच्चापूर्वस्यैव युज्यते, साध्यतया तस्यैव साधनानुष्ठाननिमित्तत्वौचित्यात्। यजेस्तु सिद्धतयाऽवगम्यमानस्य तदयोगात्। अपूर्वस्य चानिष्पन्नस्यापि बुद्धौ विपरिवृत्तिमात्रेण 'चर्मणि द्वीपिनं हन्ति' इत्यादिवन्निमित्तत्वसम्भवात्। ततश्च प्रकृत्यपूर्वं स्वसाधनेषु व्रीहिष्विव विकृत्यपूर्वमपि स्वसाधनेषु [3]नीवारादिष्ववघातादिकमनुष्ठापयतीति सिद्धयत्यूह इति तद्विचार आरम्भणीयः ॥

इति प्रथमाधिकरणे चतुर्थं वर्णकम्।

## वर्णकान्तरम्

यद्वा सप्तमाद्याधिकरणे धर्मोपदेशस्य [4]सर्वकर्मसाधारण्यं निराकृत्य प्रकृतिमात्रविषयत्वं व्यवस्थापनीयम्। सा च व्यवस्था धर्माणां यज्यर्थत्वेऽप्यपूर्वविशेषस्य [5]निमित्तत्वमात्रेणापि सिद्धयति। यथा भेदनहोमादयो भेदनादिनिमित्ते सत्येव क्रियन्ते, तथा यज्यर्था अपि धर्मा अपूर्वविशेषे सत्येव क्रियेरन्निति। सत्याञ्च धर्मोपदेशस्य प्रकृतिविषयत्वव्यवस्थायां विकृत्याकाङ्क्षया अतिदेशोऽपि सिध्यतीति नावश्यं तत्र यज्यर्थतानिरासेनापूर्वार्थता साध्या। इह तु [6]धर्माणां यज्यर्थत्वे तुल्यन्यायेनावघातादीनामपि व्रीहिस्वरूपार्थतापत्त्या नीवारादिषु व्रीहिस्वरूपा-

---

१. व्रीह्यादिषु. क.
२. तस्य. ग.
३. नीवारेषु. क.
४. सर्वधर्म. क.
५. निमित्तत्वमार्थिकमपि. क.
६. धर्माणां. नास्ति. अ, क.

भावादूहो न सिध्येत्। अत आनर्थक्याद्यर्थत्वं निराकृत्यापूर्वार्थत्वं साधनीयम्। सूत्रार्थस्तु द्वितीयवर्णकवत्॥

इति प्रथमाधिकरणे पञ्चमं वर्णकम्॥

इति प्रथममूहारम्भाधिकरणम्॥ १॥

२

दर्शपूर्णमासयोः श्रूयते—"प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति" इति। तत्र "उलूखलमुसलाभ्यामवहन्ति" इति वाक्यान्तरेणावघातकरणतया प्राप्तमुलूखलं तृतीयान्तपदेन करणत्वाकारेणानूद्य विधीयमानं प्रोक्षणं तत्कार्यभूतावघातप्रयुक्तमित्यविवादम्। तत्र किं यदुलूखलमुसलयोरवघातस्वरूपसाधनरूपं तदर्थं प्रोक्षणम्, ततश्चावघातस्वरूपप्रयुक्तम्? उत यत्तयोरपूर्वसाधनरूपं तदर्थम्, ततश्चापूर्वप्रयुक्तम्? इति संशये, पूर्वपक्षयति—

**संस्कारे युज्यमानानां तादर्थ्यात् तत्प्रयुक्तता स्यात्॥ २॥**

अवघातादिसंस्कारे युज्यमानानां-विनियुज्यमानानां प्रोक्षणादीनां, तत्प्रयुक्तता-अवघातादिप्रयुक्तता स्यात्। कुतः? तादर्थ्यात्-अवघाताद्यर्थत्वात्[1]। अवहन्तिशब्देन[2] हि श्रुत्यावघातस्वरूपमेवाभिधीयते, न त्वपूर्वसाधनविशेषरूपम्। ततश्च श्रुत्यावघातस्वरूपसाधनतया प्रतीयमानोलूखलमुसलानुवादेन प्रोक्षिताभ्यामिति पदान्तरेण समानाधिकरणेन विधीयमानं प्रोक्षणमवघातार्थमेव न तु प्रकरणादपूर्वार्थम्[3], प्रकरणस्य दुर्बलत्वात्। न च प्रकरणाबाधेनावघातार्थतास्त्विति वाच्यम्। प्रकरणं हि प्रकरणाधीतमात्रस्य नापूर्वार्थतां कल्पयति, गोदोहनादेरप्यपूर्वार्थत्वप्रसङ्गात्, किन्तु प्रधानवाक्यैकवाक्यतां कल्पयित्वैव। तत्र किमवहन्तिपदेन प्रधानवाक्येन च प्रोक्षणवाक्यस्य युगपदेकवाक्यताभिमता? किं वा पृथक्? नाद्यः; सकृच्छ्रुतस्य युगपदुभयान्वयायोगात्। न द्वितीयः; वाक्यभेदप्रसङ्गात्। एवञ्चान्यतरान्वये हातव्ये वाक्यप्राबल्यादवहन्तिनैवान्वयः, न त्वपूर्वेण। न चैवं सति प्रोक्षणस्यानर्थक्यं शङ्क्यम्, क्रत्वर्थाग्न्यर्थाधानवत् क्रत्वर्थावघातार्थस्यापि प्रोक्षणस्यानर्थक्याभावात्।

---

१. अवघातार्थत्वात्. क. २. अवघातशब्देन. क.

३. अपूर्वार्थत्वम्. अ. क.

न चैवं क्रत्वर्थत्वात् प्रोक्षणं सौर्यादौ नातिदिश्येतेति वाच्यम्, तत्रावघातस्यापूर्वार्थत्वेनातिदेशात्। अतिदिष्टश्चावघातः स्वाङ्गं प्रोक्षणमप्याकर्षतीत्यदोषः। यत्र तु नखनिर्भिन्ने चरौ[1] प्रत्याम्नानादवघातस्य नातिदेशः, तत्र नखेषु प्रोक्षणं न भवत्येवेति प्राप्ते, सिद्धान्तयति--

**तेन त्वर्थेन यज्ञसंयोगाद्धर्मसम्बन्धस्तस्माद् यज्ञप्रयुक्तं स्यात् संस्कारस्य तदर्थत्वात् ॥ ३ ॥**

तुः [2]पक्षव्यावृत्तौ। तेन-अवघातेन, यज्ञस्य-अपूर्वस्य[3] संयोगात्। अवघातस्य प्रकरणादपूर्वार्थत्वादिति यावत्। धर्मसम्बन्धः-- अवघातस्यापूर्वसाधनविशेषरूपेणैव प्रोक्षणरूपधर्मसम्बन्धः। तस्मान्नखनिर्भिन्ने चरावपि प्रोक्षणं यज्ञप्रयुक्तं स्यात्। अग्नीनां ह्यदृष्टसंस्काररूपाणामाधानमन्तरेण निष्पत्त्यनवगमादाधानस्य केवलमग्न्यर्थत्वेऽपि सार्थक्यमिति युक्तम्। अवघातस्वरूपस्य तु प्रोक्षणेन[4] विनापि सम्पत्तेः, प्रोक्षणस्य तत्रानर्थक्यमेव। ततश्च तण्डुलनिष्पत्तिद्वारा प्रकरणलभ्यं यदपूर्वसाधनविशेषरूपं तदवहन्तिशब्देन लक्षयित्वा तदङ्गत्वेन प्रोक्षणं विधीयते। तादृशञ्च रूपं प्रोक्षणेन विना न भवतीति न तदानर्थक्यम्। न चैवमपि प्रोक्षणस्यावघातगतापूर्वसाधनरूपार्थत्वे द्वारभूतं यदुलूखलमुसलयोस्स्वरूपं यच्च तयोरवघातस्वरूपसाधनरूपं तयोः प्रोक्षणेन विनापि सिद्धेस्तदानर्थक्यं तदवस्थमिति वाच्यम्, संस्कारस्य तदर्थत्वात्—अवहन्तिशब्दलक्षितमपूर्वसाधनविशेषरूपं प्रत्युलूखलमुसलपदलक्षितं यत्तयोस्साधनरूपं तेन रूपेण तयोः प्रोक्षणद्वारत्वाभ्युपगमात्। तद्रूपञ्च न प्रोक्षणेन[5] विनेति न तदानर्थक्यम्। तदेवमत्र वचनव्यक्तिः—यया क्रियया तण्डुलनिष्पत्तिद्वारा अपूर्वं क्रियते, तां क्रियां प्रोक्षितेन साधनेन कुर्यादिति। ततश्चापूर्वसाधनविशेषद्वारा अपूर्वभावनाविशेषणत्वात् प्रोक्षणं विकृतिष्वतिदिश्यत इति नखनिर्भिन्ने चरौ निर्भेदनस्याप्यवघातवत्तण्डुलनिष्पत्तिद्वारा अपूर्वसाधनविशेषत्वान्नखानाञ्च तत्साधनत्वात् तेष्वपि प्रोक्षणं सिध्यति। वरञ्चानर्थक्यादवहन्त्याद्यनेकपदेषु लक्षणाश्रयणमित्यपूर्वार्थं प्रोक्षणम् ॥

इति द्वितीयमुलूखलमुसलयोः प्रोक्षणस्यापूर्वार्थत्वाधिकरणम् ॥ २ ॥

---

१. निर्भिन्नचरौ. ग.
२. पूर्वपक्ष. अ, क.
३. अपूर्वसंयोगात्. क.
४, ५. प्रोक्षणं. अ, क.

२

## वर्णकान्तरम्

ज्योतिष्टोमे श्रूयते-"यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्" इति। किमिदं परमापूर्वार्थम्? उत दीक्षणीयापूर्वार्थम्? इति विशये, पूर्वपक्षयति—

**संस्कारे युज्यमानानां तादर्थ्यात् तत्प्रयुक्तता स्यात् ॥२॥**

संस्कारे-दीक्षणीयारूपे विनियुज्यमानानां-धर्माणां तत्प्रयुक्तता-परमापूर्वार्थता स्यात्, तादर्थ्यात्—परमापूर्वार्थत्वसम्भवात्। सम्भवति च साक्षात्फलवत्परमापूर्वार्थत्वे स्वतो निष्फलदीक्षणीयापूर्वार्थत्वाश्रयणायोगात्॥

अथ सिद्धान्तयति—

**तेन त्वर्थेन यज्ञसंयोगाद्धर्मसम्बन्धस्तस्मात् यज्ञप्रयुक्तं स्यात् संस्कारस्य तदर्थत्वात् ॥३॥**

तेनार्थेन-दीक्षणीयापूर्वेणैव धर्मसम्बन्धः। कुतः? यज्ञसंयोगात्-दीक्षणीयेष्टिवाचकशब्दसंयोगात्। ननु साक्षात्फलवत्परमापूर्वार्थत्वमेव युक्तमित्यत आह—संकारस्य तदर्थत्वादिति। धर्मसम्बन्धे हि फलवत्त्वमेव प्रयोजकम्, न तु साक्षात्फलवत्त्वम्। अत एवाधानस्यान्यार्थत्वमेव, न तु क्रत्वर्थत्वम्। न च विनिगमनाविरहश्शङ्क्यः, दीक्षणीयाशब्दलक्षितेन[1] तदपूर्वेण धर्मसम्बन्धे ह्येका लक्षणा। परमापूर्वन्तु दीक्षणीयाशब्दलक्षिततदपूर्वेण लक्षणीयमिति लक्षितलक्षणादोषः। दीक्षणीयापूर्वस्य प्रथममुपस्थितत्वेन तत्रैव शीघ्रं धर्मान्वये सति निराकाङ्क्षतया [2]विलम्बितोपस्थितपरमापूर्वसाधनरूपेण तदन्वयकल्पनस्यानुचितत्वाच्च। एवं [3]प्रोक्षणोत्पवनादीनां तज्जन्यव्रीह्यादिगतनियमापूर्वार्थता द्रष्टव्या। तस्माद्दीक्षणीयापूर्वार्थत्वाद् यज्ञप्रयुक्तं स्यात्—यत्राग्नावैष्णवयागात्मकदीक्षणीयापूर्वं तत्रैव यावत्या वाचेति स्यात्। अश्वमेधे "त्रैधातवीया दीक्षणीया" इति विहितायां प्रकृतिदीक्षणीयास्थानापन्नायान्त्वाग्नावैष्णवापूर्वाभावाद्यावत्या वाचेति न प्रवर्तते। परमापूर्वार्थत्वे तु तत्रापि प्रवर्तत इति प्रयोजनमुक्तं भाष्ये।

१. लक्षितापूर्वेण. क. २. विलम्बोप. अ, क.

३. प्रोक्षणाद्यर्थत्वेन. क, घ.

वार्तिककृतस्तु—यथासिद्धकाम्यत्रैधातवीयाया एव दीक्षणीयाकार्ये विधानेन पूर्वोत्तरपक्षयोस्त्रैधातवीयायामिहोपांशुत्वस्यैव प्रवृत्तेरिदमयुक्तम्। प्रत्यक्षेण त्रैधातवीयानामधेयेनोपांशुत्वस्यैव प्राप्त्या दुर्बलेन चोदकेन यावत्या वाचेति स्वरस्य प्राप्त्यसम्भवादित्यादि[1] दूषयित्वोदाहरणान्तरं मृग्यमित्याहुः। केचित्तु दुर्बलचोदकप्रमाणकस्यापि यावत्या वाचेति स्वरस्य प्रधानाङ्गतया प्रबलत्वान्नामधेयप्राप्तमुपांशुत्वं बाधित्वा स एव प्रवर्तते पूर्वपक्षे, सिद्धान्ते तूभयोरपि स्वरयोर्दीक्षणीयार्थतया तुल्यबलत्वेन नामधेयप्राबल्यमादायोपांशुत्वमेव प्रवर्तत [2]इति भाष्योक्तमेव प्रयोजनमित्याहुः ॥

इति द्वितीये दीक्षणीयावाङ्नियमन्यायः ॥

३

दर्शपूर्णमासयोरस्ति स्वर्गप्रकाशको मन्त्रः "अगन्म सुवः" इति। अगन्मेति लेटो रूपं छान्दसम्। स्वर्गं प्राप्नुयामेत्यर्थः। अस्ति च तत्र देवताप्रकाशको मन्त्रः— "अग्नेरहमुज्जितिमनूज्जेषम्" इति। अग्नेरुज्जितिम् ऊर्ध्वलोकजयमनुसृत्योर्ध्वलोकं जयेयम्। यादृशमग्नेरूर्ध्वलोके ऐश्वर्यं तादृशं ममाप्यस्त्विति यावत्। किमेतौ मन्त्रौ स्वर्गत्वेन रूपेणाग्नित्वेन च रूपेण स्वर्गमग्निञ्च प्रकाशयत इति तत्प्रयुक्तौ ? उत दर्शपूर्णमासापूर्वसाध्यत्वेन रूपेण दर्शपूर्णमासापूर्वीयदेवतात्वेन रूपेणेत्यपूर्वप्रयुक्तौ ? इति संशये, पूर्वपक्षयति—

**फलदेवतयोश्च ॥ ४ ॥**

यथा "यावत्या वाचा" इत्यत्र दीक्षणीयाप्रयोजकं परमापूर्वं, तथा मन्त्राभ्यामाभ्यां फलदेवतयोरनयोः स्वर्गत्वेनाग्नित्वेन च प्रकाश्यत्वात् तत्स्वरूपे एव मन्त्रयोः प्रयोजके, न तु दर्शपूर्णमासापूर्वीयफलत्वदेवतात्वे, लक्षणाप्रसङ्गात्। न च स्वरूपार्थत्वे आनर्थक्यम्, स्वर्गस्यादृष्टत्वेन मन्त्रेणाप्रकाशने तदसिद्धेः। स्वर्गस्य फलस्य स्वतः पुरुषार्थतयापूर्वादपि प्रधानत्वेन धर्माणां तादर्थ्यस्यैवोचितत्वाच्च। मन्त्रे चाग्नियोगेन स्वस्योज्जयः प्रार्थ्यत इत्यग्नेर्योच्यमानस्य क्रत्वसम्बन्धिनोऽपि स्वयं फलदातृत्वसम्भवान्नानर्थक्यम्। तस्मात्स्वर्गाग्निस्वरूपप्रयुक्तौ मन्त्रौ ॥

अथ सिद्धान्तयति—

**न, चोदनातो हि तादूगुण्यम् ॥ ५ ॥**

---

१. इत्यादिभिः अ, क. २. इति युक्तं भाष्योक्तमेव. ग. घ.

चोदनातः—अपूर्वस्यैव फलवत्वे चोदनात् ताद्गुण्यम्-फलवदपूर्वशेषत्वं मन्त्रयोर्न तु स्वर्गाग्निस्वरूपशेषत्वम्। तथा हि—फलस्य प्राधान्यात् क्रतुसम्बन्धानादरेण साक्षान्मन्त्रस्य फलार्थत्वे मन्त्रतः प्रकाशनमात्रेण फलसिद्धिः स्यादिति किं क्रतुना? ततश्चानर्थक्यात् फलार्थत्वमिच्छतापि प्रकरणबलात् क्रत्वपूर्वं द्वारमेष्टव्यमिति तच्छेषत्वसम्भवान्न तदुल्लङ्घनेन केवलफलस्वरूपशेषत्वाश्रयणं युक्तम्। मन्त्रे च यद्यपि याच्यमानत्वमग्नेर्गम्यते, नैतावताऽग्नेरवश्यं[1] फलदातृत्वमायाति। [2]सत्यामपि याचनायां लोके दानाभावदर्शनात्। नापि मन्त्रेणाशासिता देवता फलं प्रयच्छतीति प्रमाणमस्तीत्यानर्थक्यं स्यादेव। ततश्च क्रत्वपूर्वान्वयित्वेनैवाग्नेः प्रकाशत्वमिति तच्छेषत्वमेव मन्त्रस्य। नन्वपूर्वीयत्वरूपेण[3] स्वर्गाग्निप्रकाशकत्वे लक्षणा स्यात्, ततश्च मुख्यार्थ एव सामर्थ्यान्मन्त्राणां विनियोगः 'वचनात्त्वन्यत्र' इति तार्तीयीकन्यायविरोधश्चेति () चेन्मैवम्; न हि वयं क्रत्वपूर्वीयत्वेन रूपेण स्वर्गमग्निञ्च मन्त्रौ बोधयत इति ब्रूमः, किन्तु स्वर्गत्वेनाग्नित्वेन च तयोः प्रकाशनं प्रकरणादपूर्वार्थमित्येव ब्रूमः। न तु स्वर्गाग्निस्वरूपार्थम्, आनर्थक्यात्। स्वर्गकामवाक्येन 'यन्न दुःखेन सम्भिन्नम्' इत्यादिवाक्यशेषेण च सिद्धत्वात्। अग्निस्वरूपस्य च लोकत एव सिद्धत्वात्। तद्देवतास्वरूपस्य चाग्नेर्यदाग्नेयादिवाक्येन सिद्धत्वात्। ततश्च मन्त्रेण फलं देवताञ्च तत्तद्रूपेण[4] प्रकाशयतापूर्वं कुर्यादिति मन्त्रविनियोगवचनव्यक्तिः पर्यवस्यति। एवञ्च तत्तद्रूपेण मन्त्रप्रकाशितापूर्वीयदेवताकयागात् फलमिति कल्पनात् फलान्तरवति देवतान्तरवति सौर्यादौ 'अगन्म ब्रह्मवर्चसम्' 'सूर्यस्याहमुज्जितिम्' इत्यूहनीयम्। केचित्त्वपूर्वसाधनत्वरूपेण लक्षणया मन्त्रप्रकाश्यत्वमग्न्यादीनां मन्यन्ते। तन्न[5]; तथा सति सूर्यादिशब्दस्यापि विकृतावपूर्वीयत्वेन सूर्यादिलक्षकत्वापत्तेः। न चेष्टापत्तिः; लक्षणावश्यम्भावे हि प्रकृतिक्लृप्ताग्न्यादिपदस्यैवापूर्वीयत्वरूपेण लक्षणया सूर्यादिप्रतिपादकत्वसम्भवादूहोच्छेदापत्तेः, "व्रीहीणां मेध" इति मन्त्रस्य यवेष्वपि प्रवृत्यापत्तेश्च ॥

इति तृतीयं फलदेवताप्रकाशकयोर्मन्त्रयोरपूर्वप्रयुक्तत्वाधिकरणम् ॥ ३ ॥

---

१. अवश्यं. नास्ति. क.
२. अवश्यं सत्यामपि. क.
३. अपूर्ववत्स्वरूपेण. ग.
४. तद्रूपेण क.
५. तन्न. नास्ति. क.

४

स्वरूपेण देवतायाः फलदातृत्वे सत्यप्यपूर्वीयत्वेनैव रूपेण सा मन्त्रस्य प्रयोजिकेति [1]स्थितम्। तत्प्रसङ्गादन्यदिदं चिन्त्यते—"यजेत स्वर्गकामः" इति यजिना तावद्देवतोद्देश्यकद्रव्यत्यागोऽवगतः। तत्र किं त्यागांशो देवतां प्रति गुणभूतः देवता तु प्रधानम्? उत देवतां प्रति त्यागांशः प्रधानभूतः देवता तु गुणभूता? इति विशये पूर्वपक्षयति—

**देवता वा प्रयोजयेदतिथिवद् भोजनस्य तदर्थत्वात् ॥ ६ ॥***

वाशब्दस्सम्भावनायाम्। देवता प्रयोजयेत्-प्रधानत्वात् प्रयोजिका स्यात्, यागस्तु गुणभूतः। कुतः? भोजनस्य तदर्थत्वात्-भोजनस्येति कर्मणि ल्युट्। भोज्यस्य हविषो भोक्तृदेवतार्थत्वात्, अतिथिवत्। यथा अतिथये दत्तस्य भोज्यद्रव्यस्यातिथिप्रीतिकरत्वादातिथ्यर्थता, तद्वत्। युक्तञ्चैतत्; त्यज्यमानहविरुद्देश्यत्वं हि देवतात्वम्। तथा च हविर्दाने देवता सम्प्रदानम्, 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इति तल्लक्षणम्[2]। ततश्च दानक्रियां प्रति प्रधानभूतेन कर्मकारकेण हविषाऽपि व्याप्यमानत्वात्तदपेक्षयापि प्रधानं देवता। किञ्च 'यज देवपूजायाम्' इति स्मरन्ति। ततश्च हविर्दानं पूजा, देवता तु पूज्यमाना। [3]पूजायाञ्च पूज्यमानप्रीतिकरत्वं गुर्वादौ दृष्टमिति यागस्य देवतार्थत्वाश्रयणे लोकरीतिरप्यनतिक्रान्ता भवति। एवञ्च "ते देवा हविरदन्त्वाहुतम् हुतादो वै देवा यो यजते स देवानां भोगाय भवति" "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति, '[4]आहुतिभिर्वै लोको देवान्प्रीणाति'

'देवान्भावयतानेन ते देवा भावयन्तु नः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ' ॥

इत्यादिमन्त्रार्थवादेतिहासपुराणान्यप्यनुसृतानि भवन्ति। तस्माद्यागाराधिता देवता फलं प्रयच्छतीति देवता प्रधानम् ॥

अथ सिद्धान्तयति—

---

१. स्थितौ. ग, घ. २. लक्षणात. अ, ख.
३. पूजायाश्च. अ. ४. आहुतिभिर्लोकः. क.
*. इतः परं 'आर्थपत्याच्च' 'ततश्च तेन सम्बन्धः' इति सूत्रपाठः।

**अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्यात् गुणत्वेन देवताश्रुतिः ॥ ७ ॥**

अपि वेति पक्षव्यावृत्तौ । यज्ञकर्म हविस्त्यागक्रिया देवतां प्रति प्रधानं स्यात् । कुतः ? शब्दपूर्वकत्वात्-"यजेत स्वर्गकामः" इति । भावना हि भाव्यमपेक्षमाणा स्वपदगतमपि यागमपुरुषार्थत्वादुपेक्ष्य पदान्तरोपात्तं स्वर्गमेव फलं गृहीत्वा तस्य साधनाकाङ्क्षायां समानपदोपात्तं यागं करणं गृह्णाति । यजिना च देवता द्रव्यं त्यागश्चेति त्रितयमवगतम् । तत्र द्रव्यदेवतं सिद्धरूपं, त्यागांशस्तु साध्यत्वेनावगतः । तस्य निष्पत्त्यपेक्षायां [1]द्रव्यवद्देवतापि कारकत्वेनैव[2] सम्बध्यते, द्रव्यदेवतमन्तरेण तदनिष्पत्तेः । देवतायाः प्रधानत्वञ्च हविस्त्यागसमये चतुर्थ्यन्तपदेन निर्दिश्यमानत्वान्नान्तरीयकमेव, न तु तच्चोदनागम्यम् । कुतः ? गुणत्वेन देवताश्रुतिः—फलवाक्ये हि यजिर्यदाग्नेयादिवाक्योत्पन्नयागपरः । उत्पत्तिवाक्ये चाग्नेय इति तद्धितान्तेनाग्निदेवताकः पुरोडाश इत्येवं पुरोडाशस्य प्राधान्यम् । देवतायाश्च तत्र गुणभावोऽवगतः । द्रव्यदेवतासम्बन्धाच्च कल्प्यमानो यागस्तदनुगुणमेव कल्प्यते—अग्निदेवताकाष्टाकपालपुरोडाशहविष्को याग इति । एवंविध एव च यागः फलवाक्ये यजिना परामृश्यत इति देवता गुणभूतैव त्यागांशं प्रतीति युक्तम् , न तु प्राधान्यम्, उत्पत्तिवाक्यगम्यगुणभावविरोधात् । 'यज देवपूजायाम्' इति स्मरणगम्यन्तु प्राधान्यमप्युद्देश्यत्वमात्रनिबन्धनमित्यविरोधः । ततश्च देवतोद्देश्यकद्रव्यत्यागेन स्वर्गं कुर्यादित्येव वचनव्यक्तिः । देवतानां विग्रहवत्त्वम् , हविस्स्वीकर्तृत्वम् , हविर्भोक्तृत्वम्, तृप्तिः, प्रसादश्चेति [3]पञ्चकमपि प्रमाणान्तरसिद्धमेतदनुगुणत्वात् स्वीकार्यमेव । तथा च दत्तस्वीकृतभुक्तहविस्तर्पितप्रसादितदेवताकयागः फलसाधनमिति श्रुत्यर्थाभ्यां पर्यवस्यति । न चैवं सति देवताप्रसाददेवोपपत्तावपूर्वं न स्वीकार्यं स्यादिति वाच्यम् , कल्पान्तरभाविफलके कर्मणि देवानां[4] नष्टत्वेन तत्प्रसादस्याप्यपूर्वद्वारैव फलजनकत्वस्य वक्तव्यतयान्यत्रापि तथा स्वीकार्यत्वात् ।

वेदान्तिनस्तु—[5]इन्द्राद्यात्मना ईश्वर एव सर्वत्र देवता । तत्प्रसादादेव फलम् , अपूर्वं न स्वीकर्तव्यमिति मन्यन्ते । तत्रेदं प्रतिभाति—इन्द्रादीनां हविर्दान-

---

१. द्रव्यवद्देव. ग. २. एव नास्ति. ग. ३. विग्रहादिपञ्चकमपि. ग.
४. देवतानां. ग. ५. इन्द्रात्मना. क.

समये आवाहनादिकर्मसु विधिगतेन्द्रादिशब्देनैव निर्देशः, न तु पुरन्दरादिशब्दैरिति दशमे वक्ष्यते 'विधिशब्दस्य मन्त्रत्वे भावस्स्यात्तेन चोदना' इत्यत्र। तदिदं सर्वसम्मतमेव। न ह्याग्नेययागे वह्नय इदं न मम इत्यादिनिर्देशो वेदान्तिनामपि सम्मतः। ततश्च विधिगतेन्द्रादिशब्दत्वेन रूपेणैवेन्द्रादीनां यागदेवतात्वम्। तदेतत् सङ्कर्षकाण्डेऽपि "यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेत् पुरा वषट्कारात्साक्षादेव तद्देवतां प्रीणाति प्रत्यक्षा देवता यजति" इति वाक्यमुदाहृत्य व्यवस्थापयिष्यते। ईश्वरस्य चेन्द्राद्यात्मकतादशायामेवेन्द्रशब्दवाच्यत्वमिति कल्पान्ते इन्द्रादीनां विनष्टत्वात् कल्पान्तरभाविफलमीश्वरः कथं दद्यात्? न च कल्पान्तरेऽप्यन्या इन्द्रादिदेवताः स्युरिति वाच्यम्। पूर्वस्मिन् कल्पे या इन्द्रादिदेवता इष्टाः, तदितरेन्द्राद्यात्मना कल्पान्तरे ईश्वरः फलं ददातीत्यर्थस्येज्यमानादन्यः फलदातेत्यत्रैव पर्यवसानात्। इदानीन्तनसङ्केतितेन्द्रादिसंज्ञकमनुष्यविशेषात्मनापीश्वरस्य फलदातृत्वापत्तेश्च। तस्मादपूर्वमप्यवश्यमङ्गीकार्यम्। न चैवमपि ब्रह्महत्यासुरापानादिनिषिद्धाचरणे अपूर्वमेव शरणम्, न तु तत्र देवताप्रसादोऽस्तीत्यन्यत्रापि देवताप्रसादो न द्वारमिति वाच्यम्, 'श्रुतिस्मृती ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते। आज्ञाच्छेदी मम द्रोही' इत्यादिस्मृत्या तत्रापीश्वरक्रोधस्य द्वारत्वकल्पनात्। अनशनादितपसा देवतातोषोऽपि परमेश्वराज्ञारूपविधिपरिपालनादुपपाद्यः। ततश्च विहितकर्मणः प्रसादितदेवताकादपूर्वम्। निषिद्धविषये त्वीश्वरक्रोधादपूर्वमिति कर्मब्रह्मोभयमीमांसानुगुणः पन्थाः॥

अतिथिवदित्यत्राह—

**अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रीतिविधानत्वात्॥ ८॥**

अतिथौ तत्प्रधानत्वम्—पूजां प्रति प्राधान्यम्। तस्य—पूजाकर्मणः नान्तरीयकतया अतिथिप्रीतिकरत्वादुपपाद्यम्। कर्मणि—पूजाकर्मणि तु विधीयमानेऽतिथेः पूजां प्रति प्राधान्याभाव एवावगम्यते। 'तस्य पूजायां शान्तिः स्वर्गश्च' इत्यापस्तम्बादिस्मृतौ पूजायाः फलार्थत्वावगमाद् अतिथेः पूजां प्रति गुणभावावगमाच्च। न ह्यतिथिः प्रीयमाणोऽपि पूजयित्रे फलं ददाति, नाप्यतिथिरीष्टे स्वर्गादिफलस्य। तस्मात्पूजासन्तर्प्यमाणातिथिगुणकभोजनादेव फलमित्यतिथिदृष्टान्तोऽप्यनुगुण एव। तस्मा-

द्देवता गुणभूतैव । प्रयोजनन्तु पूर्वपक्षे-देवतायाः प्राधान्यात् तत्सामान्यमेव बलीय इत्याग्नेये पय, आग्नेयविध्यन्तः प्रवर्तते । सिद्धान्ते तु-देवताया गुणत्वाद् द्रव्यस्य च त्यज्यमानतया प्रत्यासन्नतया तत्सामान्यमेव बलीय इति तत्र सान्नाय्यविध्यन्त इति । अत्र यद्वक्तव्यं तत् षष्ठे [1]तिर्यगधिकरणे प्रपञ्चितम् ॥

इति चतुर्थं देवताधिकरणम् ॥ ४ ॥

५

"व्रीहीन् प्रोक्षति" इति प्रोक्षणं किं व्रीहिस्वरूपार्थम् ? उत प्रकृतापूर्वसाधनरूपार्थम् ? इति संशयः । तथा 'त्रीन् परिधीन्" इति मन्त्रः किं परिधित्रित्वसङ्ख्यारूपार्थः ? उतापूर्वसाधनरूपार्थः ? इति संशयः । तथा "शूर्पेण जुहोति तेन ह्यन्नं क्रियते" इति होमः किमन्नकरणसंस्कारार्थस्सन् दर्वीपिठराद्यर्थः ? उतारादुपकारकस्सन्नपूर्वार्थः ? इति संशयः । तथा "चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्राऽमावास्याम्" इत्यभिमर्शनं किं पौर्णमास्यमावास्यासमुदायस्वरूपार्थम् ? उत तदुभयापूर्वार्थम् ? इति संशयः । तत्र पूर्वपक्षयति—

द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥ ९ ॥

द्रव्यं व्रीह्यादि । सङ्ख्या परिधित्रित्वादि । हेतुरन्नकरणम् । समुदायः पौर्णमास्यादि । समाहारद्वन्द्वः । द्रव्यादिकं स्वरूपेणैव प्रोक्षणादि प्रयोजयति । कुतः ? श्रुतिसंयोगात्-द्वितीयाश्रुत्या हिशब्दश्रुत्या च यथायथं संयोगात् । वाशब्दस्सम्भावनायाम् । तत्र [2]व्रीहीनिति द्वितीयाश्रुत्या प्रोक्षणस्य व्रीहिस्वरूपार्थता गम्यते । प्रकरणञ्च श्रुतेर्दुर्बलमिति न प्रकरणादपूर्वार्थता । न च व्रीहिस्वरूपार्थत्वे आनर्थक्यम् । "तप्ते पयसि दध्यानयति" इति दध्यानयनसंस्कारस्य प्रथमतः ( पयसोऽपूर्वार्थतानवगमेन पयस्वरूपमात्रान्वयित्वेऽपि "सा वैश्वदेव्यामिक्षा" इति तच्छब्देन संस्कारविशिष्टपयःपरामर्शिना ) पयसोऽपूर्वार्थताविधानाद्यथा नानर्थक्यम्, तद्वद् व्रीहीणामपि "व्रीहिभिर्यजेत" इति वाक्यान्तरेणापूर्वार्थताविधानान्नानर्थक्यम् । ततश्च नैवारचरौ व्रीहिस्वरूपाभावात् प्रोक्षणं नातिदिश्यत इति नोहस्सिध्यति । एवमभिमर्शनस्यापि विकृतिषु समुदायाभावान्नातिदेशः । अनेन मन्त्रेण त्रीन् परिधीन् प्रकाशयेदिति लिङ्ग-

---

१. तृतीयाधिकरणे. क. २. व्रीह्यादिद्वितीया. क.

( ) अ. ग. पुस्तकयोर्ग्रन्थपातः

कल्पितविधौ द्वितीयाश्रुत्या मन्त्रस्य त्रित्वसङ्ख्यार्थत्वावगमात् परिधिद्वयवति महापितृयज्ञेऽतिदेशो न भवतीति नोहः। तेन ह्यन्नमिति हिशब्दश्रुत्या अन्नसाधनत्वस्य होमं प्रति हेतुत्वमवगम्यते। व्याप्य एव च हेतुर्भवति। प्रधानञ्चाङ्गेन व्याप्यते, नाङ्गं प्रधानेन। न हि यत्राङ्गं तत्र प्रधानम्। ततश्च हेतुश्रुत्या व्याप्यत्वेन धूमवद्गम्यमानमन्नकरणं[1] न प्रधानम्। व्याप्तिश्च यद्यदन्नकरणं तत्सर्वं होमेन सम्बन्धयितव्यमिति हिशब्दश्रुत्यैव कल्प्यत इत्यन्नकरणदर्वीपिठराद्यर्थो होमः ॥

इतोऽप्येवमित्याह—

**अर्थकारिते च द्रव्येण न व्यवस्था स्यात् ॥ १० ॥**

अर्थ्यत इत्यर्थः—अपूर्वम्, तत्प्रयुक्ते प्रोक्षणादिधर्मेऽभ्युपगम्यमाने व्रीह्यादिद्रव्येणैव प्रोक्षणादीनां सम्बन्ध इत्येवं व्यवस्था न स्यात्। स्रुवादिष्वपि प्रोक्षणादिकं व्रीह्यादिषु विहितं प्रसज्येत। न च व्रीहिस्वरूपमपि विवक्षितमिति वाच्यम्। व्रीहिशब्दस्य सकृदुच्चारितस्योभयार्थत्वासम्भवात्, यवसाधारण्याभावप्रसङ्गाच्च। न च तण्डुलपिष्टप्रणाडिकया यदपूर्वसाधनं तच्छेषत्वमिति न दोष इति वाच्यम्। चर्वादौ पेषणाभावेन प्रोक्षणाभावप्रसङ्गात्। न च तण्डुलनिष्पत्तिद्वारकत्वमेव विवक्षितमिति वाच्यम्, एवमपि लाजेषु प्रोक्षणं न स्यात्, विशिष्टानुवाददोषप्रसङ्गाच्च ॥

अथ सिद्धान्तयति—

**अर्थो वा स्यात् प्रयोजनमितरेषामचोदनार्थस्य गुणभूतत्वात् ॥ ११ ॥**

अर्थः—अपूर्वम्, तदेव प्रोक्षणादिधर्मप्रयोजकम्। करणे ल्युट्। इतरेषां—व्रीह्यादिद्रव्याणां स्वरूपेण प्रोक्षणादिचोदना नास्ति। कुतः? अर्थस्य—अपूर्वस्य [2]प्रोक्षणादि प्रति गुणभूतत्वात्। अपूर्वसाधनं प्रोक्षतीत्येवं संस्कार्यतावच्छेदकत्वात्। व्रीह्यादिस्वरूपार्थत्वे हि प्रोक्षणादेरानर्थक्यम्, प्रोक्षणादिकं विनापि व्रीह्यादिस्वरूपनिष्पत्तेः। न च दध्यानयनस्य पयस्स्वरूपान्वयवदन्नानर्थक्यमिति वाच्यम्, वैषम्यात्। दध्यानयनसंस्कृतमेव हि पयः 'सा वैश्वदेव्यामिक्षा" इति प्रकृतपरामर्शिना तच्छब्देन निर्दिश्य वैश्वदेवयागार्थतया विधीयत इति दध्यानयनस्य व्यर्थत्वाभावेऽपि प्रकृते

---

१. गम्यमानं न करणं. क.                    २. चोदनादि. क.

"व्रीहिभिर्यजेत" इति व्रीहिस्वरूपमात्रस्य क्रत्वर्थताविधानेन प्रोक्षणादेः क्रत्वर्थत्वे प्रमाणाभावाद् व्रीह्यादिस्वरूपार्थत्वे वैयर्थ्यं दुर्वारम्। लौकिकव्रीह्याद्यर्थत्वफलकल्पनायाञ्च स एव दोषः। "व्रीहिभिर्यजेत" इत्यवगतं व्रीहिगतापूर्वसाधनतारूपं व्रीहिपदेन लक्षयित्वा तदर्थतया विधानादेव प्रोक्षणस्यानर्थक्यपरिहारे सन्निपातित्वे च सम्भवति द्वितीयाश्रुत्यवगतव्रीह्यर्थत्वबाधेन प्रोक्षणस्य फलान्तरार्थत्वादारादुपकारकत्वकल्पनानौचित्यात् [1]हविःप्रकृतित्वस्यापि विवक्षितत्वान्नातिप्रसङ्गः। न च विशिष्टानुवाददोषश्शङ्क्यः, यत्र हि "यस्योभयं हविरार्त्तिमार्च्छति" इत्यादौ पदान्तरोपात्तस्योभयत्वादेरुद्देश्यविशेषणत्वं तत्रैव विशिष्टानुवादस्य दोषत्वात्। यत्र त्वेकेनैव प्रातिपदिकेन विशिष्टोद्देशः, तत्र तु न विशिष्टानुवाददोषः, वाक्यभेदाभावात्। अत एव "अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहेति सायं जुहोति" इत्यत्र सायंशब्देनैव सायङ्कालीनो होमो लक्षणयोद्दिश्यते। [2]जुहोतिस्तु प्रकरणप्राप्तानुवाद इत्येकस्यैव प्रातिपदिकस्योद्देश्यसमर्पकत्वान्न विशिष्टानुवाददोष इत्याहुः। 'तेषामर्थेन सम्बन्धः' इति तार्तीयीकाधिकरणे आग्नेयाद्युत्पत्त्यपूर्वार्थाः प्रोक्षणादिधर्माः नाज्यसान्नाय्ययोर्भवन्तीत्येतावद्व्यवस्थापनीयम्। इह त्वाग्नेयाद्युत्पत्त्यपूर्वार्थत्वाविशेषात् प्रोक्षणादेः स्रुवादिष्वतिप्रसङ्ग आशङ्क्य परिहर्तव्य इत्यपुनरुक्तिः। केचित्तु भेदनहोमे भेदनमात्रस्योद्देश्यत्वप्रतीतावपि फलकल्पनभिया प्रकृतभेदन एव पर्यवसानम्। तथा प्रोक्षणादिष्वप्यपूर्वीयमात्रस्योद्देश्यत्वे स्रुवादिसाधारण्यापत्तौ तत्रादृष्टं कल्प्यं [3]स्यादिति तद्भीत्या स्रुवादिव्यावृत्त एवापूर्वीयत्वे पर्यवसानमिति न विशिष्टानुवाद इत्याहुः।

तथा "त्रीन परिधीन्" इति मन्त्रेणापूर्वीयत्रित्वसङ्ख्यां प्रकाशयेदित्यत्रापि शब्दान्वयबोधदशायां परिधिस्वरूपप्रहाणेनापूर्वीयसङ्ख्याप्रकाशनमात्रस्योद्देश्यत्वप्रतीतावपि विधेयमन्त्रगतपरिधित्रित्वप्रकाशनसामर्थ्यानुसारेण परिधित्रित्वप्रकाशनस्योद्देश्यता पर्यवस्यति। यथा "यस्योभावग्नी अभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिः" इत्यत्र निमित्तगतविशेषणविवक्षायां वाक्यभेदापत्त्या शाब्दान्वयबोधदशायामुभयत्वप्रहाणेनाग्न्यनुगममात्रस्य निमित्तत्वप्रतीतावपि विधेयस्य पुनराधेयस्याग्निद्वयोत्पादनसामर्थ्यादुभयाग्न्यनुगमस्यैव निमित्तत्वलाभस्तद्वत्।

---

१. हविः. नास्ति. अ, ग. २. होमस्तु. क.
३. स्यादिति भिया. क.

एतेन "व्रीहीणां मेध" इत्यस्य यवेष्वपि प्रवृत्तिस्स्यादित्यपि निरस्तम्, विधेयमन्त्रसामर्थ्यानुसारेण यवव्यावृत्तापूर्वविशेषसाधनत्वस्यैव विवक्षितत्वात्। न चैवं सति व्रीहियवयोर्भिन्नापूर्वसाधनत्वाद्विकल्प एव न स्यादिति वाच्यम्। वस्तुगत्या व्रीहियवप्रयोगयोरवान्तरापूर्वव्यक्तिभेदे सत्यपि "व्रीहिभिर्यजेत" इति शास्त्रेण तदसंस्पर्शनेनैव [1]शास्त्रार्थभूतापूर्वैकतामात्रेण [2]विकल्पोपपत्तेः। प्रोक्षणावहननादौ तु [3]शास्त्रार्थभूतापूर्वसाधनत्वमेव विवक्षितम्। तावतैव "व्रीहीन् प्रोक्षति" इत्यादिश्रुत्युपपत्तेरिति तेषां यवसाधारण्यम्। "व्रीहीणां मेध" इति मन्त्रस्य चोक्तापूर्वभेदविवक्षां विना न लिङ्गनिर्वाह इति न तस्य यवसाधारण्यमिति विशेषः। नीवारादीनान्तु विकृतिषु व्रीहिस्थानापन्नत्वादूहसिद्धिश्च। ननु भवतु प्रोक्षणादीनामपूर्वसाधनान्वयः, व्रीहिपदेन व्रीहिशास्त्रावगतापूर्वसाधनविशेषस्य लक्षयितुं शक्यत्वात्। यत्र तु संस्कृतद्रव्यविशिष्टयागविधिः प्रोक्षितैर्व्रीहिभिर्यजेतेति, [4]तत्र कथं संस्कारस्यापूर्वसाधनरूपान्वयः। तत्र द्रव्यस्य प्रागपूर्वसाधनतानवगमादिति चेन्न; संस्कारविशिष्टस्य साधनभावेऽवगते, अर्थात्संस्कारस्य साधनरूपान्वयसिद्धेः। एवं "सा वैश्वदेवी" इत्यत्रापि संस्कारविशिष्टस्य पयसस्साधनभावावगत्या अर्थादेव संस्कारस्वरूपान्वयसिद्धिः। यदपि हेतुनिर्देशबलाद्धोमस्यान्नकरणदर्व्यादिसंस्कारार्थत्वमिति, तदयुक्तम्; शूर्पेणेति तृतीयाश्रुत्या शूर्पस्य होमार्थतायाः प्रत्यक्षमवगतत्वेन भूतभाव्युपयोगविधुराणां दर्व्यादीनां हेतुनिर्देशमात्रेण संस्कार्यत्वकल्पनायोगात्। अतो होमस्यारादुपकारकत्वात् तस्य द्रव्यप्रयुक्तत्वं न सम्भवति। ननु हेतुनिर्देशबलाद्धोमस्यान्नकरणार्थत्वमिति, तदपि न; हेतुवादस्य हेत्वधिकरणे निरस्तत्वात्। अस्मिन्नधिकरणे तृतीयाश्रुत्या शूर्पस्यैव होमार्थत्वम्, न तु होमस्य द्रव्यार्थत्वम्, किन्त्वपूर्वार्थत्वमेवेति सिद्धे शूर्पशब्दमवयुत्यानुवादं स्वीकृत्यान्नकरणमात्रं होमसाधनत्वेन विधीयते, विषमशिष्टविकल्पप्रसङ्गात्। अतः "तेन ह्यन्नं क्रियते" इति विधेयशूर्पस्तुतिः, न तु हेतुवाद इत्युक्तमिति न पुनरुक्तिः॥

प्रोक्षणादीनां व्रीह्यादिस्वरूपप्रयुक्तत्वे बाधकमाह—

**तत्प्रयुक्तत्वे च धर्मस्य सर्वविषयत्वम्॥ १२॥**

---

१. शास्त्रार्थीभूत. ग. २. विकल्पापत्तेः. ग.

३. शास्त्रार्थीभूत. ग. ४. तत्र. नास्ति. क.

प्रोक्षणादीनां व्रीह्यादिस्वरूपप्रयुक्तत्वे सर्वविषयत्वम्-लौकिकवैदिकव्रीह्यादि-विषयत्वं प्रसज्येत । ततश्च लौकिकविषये फलकल्पनादर्थकर्मत्वं वैदिकविषये तु गुण-कर्मत्वमिति वैरूप्यं प्रसज्येत ॥

अत्राशङ्क्य परिहरति—

**तद्युक्तस्येति चेन्नाश्रुतत्वात् ॥ १३ ॥**

प्रकरणपरिगृहीतव्रीह्यादिस्वरूपस्य प्रोक्षणादिधर्मसम्बन्धोऽस्तु । तथा च न लौकिकेष्वतिप्रसङ्ग इति नोक्तवैरूप्यमिति चेत्-तन्न; प्रकरणस्य विशेषणत्वेना-श्रुतत्वात् । न च सामर्थ्यादेव प्रकरणं विशेषकं भविष्यतीति वाच्यम् । न हि प्रकरणं विशेष्टुमीष्टे । निर्ज्ञातसम्बन्धो ह्युच्चार्यमाणः [1]परं विशिनष्टि । यथा शुक्लः पट इत्यत्र [2]शुक्लगुणः पटम् । कथमपूर्वं कर्तव्यमिति प्रकाराकाङ्क्षा हि प्रकरणम् । तस्याञ्चा-काङ्क्षायां यदग्न्यन्वाधानप्रोक्षणाद्युपनिपतति, तस्य भावनासम्बन्धे सा कारणं भवति अग्न्यन्वाधानव्रीहिप्रोक्षणादिप्रकारेणापूर्वं कुर्यादिति, न तु दर्शपूर्णमाससम्बन्धि यद्व्रीह्यादि तत् प्रोक्षेदित्येवं दर्शपूर्णमाससम्बन्धित्वेन व्रीह्यादिविशेषणे कारणं भवति । तस्यामित्थम्भावाकाङ्क्षादशायां[3] व्रीह्यादीनां दर्शपूर्णमाससम्बन्धित्वेना-निर्ज्ञातत्वात् । तस्मान्न प्रकरणं विशेषकम् ॥

ननु मास्त्वित्थम्भावाकाङ्क्षालक्षणप्रकरणं विशेषकम् । सन्निधिलक्षणन्तु विशेषकं स्यादेवेत्याशङ्क्य निराकरोति--

**अधिकारादिति चेत् तुल्येषु नाधिकारस्स्यादचोदितश्च सम्ब-न्धः पृथक्सतां यज्ञार्थेन सम्बन्धः तस्माद्यज्ञः प्रयोजनम् ॥ १४ ॥**

अधिकारात्—सन्निधिलक्षणप्रकरणात् ये निरुप्ता व्रीहयस्त [4]एव प्रोक्षणादि-धर्मान् लभन्ते । न तु लौकिका इति चेत्, शृणु; एवं सति तुल्येषु—लौकिकवैदिक-कर्मसाधारणव्रीहिषु विहितो यो निर्वापस्तत्र अधिकारो विशेषको न स्यात् । लौकिकेष्वपि निर्वापस्स्यादिति यावत् । निर्वापात्प्राग् वैदिककर्मसम्बन्धाभावात् । कुतः ? यतः निर्वापात् पूर्वं व्रीहीणां धर्मसम्बन्धः कश्चिदपि न चोदितः ।

---

१. प्रकरणं. क. २. शुक्लगुणः पटः. ग, शुक्लगुणपटः. क.
३. आकाङ्क्षायां. क. ४. एव. नास्ति. क.

अतो[1] निर्वापस्य लौकिकसाधारणत्वं स्यात्। तच्चानुचितम्, पृथक्सतां-लौकिककर्मभ्यः पृथक्कृतानां व्रीहीणामेव हि यज्ञार्थेन-निर्वापेण सम्बन्धो युज्यते। लौकिकार्थत्वे फलकल्पनापातात्। तस्माद्धेतोः यज्ञः अपूर्वमेव प्रयोजनम् करणे ल्युट्, धर्माणां प्रयोजकमिति ॥

इति पञ्चमं श्रुतिविनियुक्तानामपूर्वप्रयुक्तत्वाधिकरणम् ॥५॥

६

ज्योतिष्टोमे श्रूयते-"त्सरा वा एषा यज्ञस्य तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति" इति। एषा उपांशुचर्या त्सरा-छद्मगतिः, शनैः पदविन्यासरूपा[2] यथा सा शकुन्यादिग्रहणाय भवति, एवमुपांशुचर्या यज्ञवशीकरणाय भवतीति यावत्। किमिदमुपांशुत्वं परमापूर्वधर्मः? उत दीक्षणीयाद्यवान्तरापूर्वधर्मः? इति संशयः। तत्र सिद्धान्तेनोपक्रमते—

**देशबद्धमुपांशुत्वं तेषां स्यात् श्रुतिनिर्देशात् तस्य च तत्र भावात् ॥१९॥**

देशेन बन्धः संयोगो यस्येति बहुव्रीहिः। प्राग्भवं प्राचीनमिति देशनिमित्तकप्राचीनपदसंयुक्तमुपांशुत्वम्, तेषाम्-अग्नीषोमीयप्राग्देशवर्तिदीक्षणीयावान्तरापूर्वाणां धर्मस्स्यात्। कुतः? श्रुतिनिर्देशात्। श्रुतीति कर्मणि क्तिन्। अग्नीषोमीयादिति श्रुतेन पदेन संयोगात्। प्राचीनमिति हि [3]ससम्बन्धिकशब्दः। स चावधिभूतसम्बन्ध्यन्तरमाकाङ्क्षन् अग्नीषोमीयादित्यनेन सम्बध्यते। ततश्चाग्नीषोमीयतः प्राक् यत्पदार्थजातं दीक्षणीयादि तेनोपांशुचरन्तीत्यर्थलाभात् तदवान्तरापूर्वप्रयुक्तमेवोपांशुत्वम्। यद्यपि परमापूर्वं स्वतः फलवत्, तथाप्यवान्तरापूर्वस्यैवोपांशुत्वधर्मः[4]। [कुतः? तस्य-अवान्तरापूर्वस्य "यावत्या वाचा" इत्यत्र भावात्-सत्वात्।] दीक्षणीयावान्तरापूर्वार्थतया तत्कार्यापन्नेष्वेवेदमुपांशुत्वं[5] भवति। ये तु राजसूयादौ "पुरस्तादुपसदां सौम्येन प्रचरन्ति" इत्यादयस्तेषु न भवन्ति, अप्राकृतकार्यत्वात्। यथा यूपावटास्तरणबर्हिषि बर्हिर्धर्मा न भवन्ति॥

---

१. ततः ग.
२. सा यथा. क.
३. सम्बन्धित्वशब्दः क.
४. धर्मः धर्मान्वयस्य भावात् सत्वात् ग.
५. उपांशुत्वमिदं. ग.

अत्र पूर्वपक्षी प्रत्यवतिष्ठते[१]--

**यज्ञस्य वा तत्संयोगात् ॥१६॥**

प्राचीनमित्यत्र यज्ञस्यैवावधितया सम्बन्धः।[२] यज्ञस्येत्यवयवषष्ठी। यज्ञस्य प्राचीनं-प्राग्भाग इत्यर्थः। अग्नीषोमीयादित्येतच्च यज्ञस्य प्राग्भागेऽवधित्वेनान्वेति। ततश्चाग्नीषोमीयावधिको योऽयं यज्ञस्य प्राग्भागः तत्रोपांशुत्वम्। तच्च यज्ञस्य पूर्वार्द्धेऽनुष्ठीयमानं परमापूर्वप्रयुक्तमेव। ततश्च राजसूयिकसौम्यादिष्वप्युपांशुत्वं प्रवर्तते। [३]यद्यपि यज्ञशब्दः त्सराशब्देन लब्धान्वयः तस्मादित्यनेन व्यवहितश्च, तथापि यज्ञस्येत्येतत् प्राचीनमित्यत्रापि सम्बध्यते। अग्नीषोमीयात् प्राचीनमित्यन्वये आकृत्यधिकरणन्यायेन [४]प्राग्देशवाचिनः प्राचीनशब्दस्य देशवर्तिषु लक्षणापत्तेः। राजसूयिकसौम्यादिष्वप्युपांशुत्वप्राप्त्या प्रवृत्तिविशेषलाभाच्च॥

इतोऽप्येवमित्याह—

**[५]अर्थवादश्च तदर्थवत् ॥१७॥**

"त्सरा वा एषा यज्ञस्य" इत्यर्थवादोऽप्युक्तन्यायानुसारी भवति। यज्ञस्योपांशुचर्या त्सरेति स्पष्टमेव, परमापूर्वार्थत्वस्याभिधानात्॥

अत्र सिद्धान्तिनं प्रत्यवतिष्ठमानं निराचष्टे--

**प्रणीतादि तथेति चेन्न यज्ञस्याश्रुतित्वात् ॥१८॥**

"यज्ञं तनिष्यन्तौ यदध्वर्युयजमानौ वाचं यच्छतः, तत्प्रजापतिभूयं गत्वा यज्ञं तन्वाते" इत्युपक्रम्य "तस्मात्प्रणीताः प्रणेष्यन्वाचं यच्छति" इति यत्प्रणीताशब्दादिकं वाक्यम्, तदपि परमापूर्वार्थमेव वाग्यमं विदध्यात्, यज्ञशब्दसंयोगाविशेषात्। वाग्यमस्य प्रणीताप्रणयनोत्तरभाविपदार्थापूर्वप्रयुक्तत्वं न स्यादिति यावत्। इति चेन्न[६]; कुतः? यज्ञस्याश्रुतित्वात्-यज्ञस्य यत्प्राचीनं तेनोपांशु चरन्तीतिवदत्र यज्ञस्य [७]वाग्यमान्वयाश्रवणात्। यज्ञं तनिष्यन्ताविति यज्ञस्य

१. यज्ञस्यैषा त्सरेति परमापूर्वप्रयुक्तं स्पष्टमेव दर्शयति ग.
२. यज्ञस्येति हि. ग.
३. यदपि. ख.
४. प्राग्भाग. क.
५. अनुवादश्च.
६. चेत्तन्न. क.
७. वाग्यमाश्रवणाद्यज्ञस्य. क.

विस्तार एवान्वयात्। न च 'यज्ञस्य विस्तारार्थत्वमपि वाग्यमस्य यज्ञाङ्गत्वं विना नोपपद्यत इति वाच्यम्। वाग्यमो हि नादृष्टद्वाराङ्गं, किन्तु मनःप्रणिधाने-नाङ्गानामविकलानुष्ठाननिष्पादनद्वारैव। भवति चाङ्गाङ्गैरप्यविकलमनुष्ठितैर्यज्ञ-विस्तार इति प्रणीताप्रणयनादिपदार्थापूर्वप्रयुक्तो वाग्यम इति पूर्वपक्षः स्थितः॥

अथवा—यज्ञशब्दसंयोगादुपांशुत्वं परमापूर्वप्रयुक्तमिति पूर्वपक्षे स्थिते, तन्न्यायावलम्बनेन "प्रणीताः प्रणेष्यन् वाचं यच्छति" इति वाग्यमोऽपि परमापूर्व-प्रयुक्त इति पूर्वपक्षप्रवृत्त्याधिकरणान्तरपरमिदं सूत्रम्। सूत्रार्थस्तु पूर्ववदेव योज्यः॥

अथ 'यज्ञस्य वा तत्संयोगात्' इति प्रत्यवतिष्ठमानं पूर्वपक्षिणं सिद्धान्ती निराचष्टे—

**तद्देशानां वा सङ्घातस्याचोदितत्वात् ॥१९॥**

तद्देशानाम्—अग्नीषोमीयप्राग्देशवर्तिपदार्थावान्तरापूर्वाणामेवोपांशुत्वं[2] धर्मः, न तु यज्ञपूर्वार्द्धस्य। कुतः? सङ्घातस्य—ग्रहयज्ञ्यभ्याससमुदायरूपस्य यज्ञस्य प्राचीनसम्बन्धित्वेनाचोदितत्वात्। अन्वयाभावादिति यावत्। यज्ञस्य प्राग्भाग इति वदन् प्रष्टव्यः—यज्ञशब्देन किं सोमयज्यभ्याससमुदायो [3]विवक्षितः? उत साङ्गप्रयोगः? नाद्यः; अग्नीषोमीयादित्यस्यानन्वयापत्तेः। न हि सोमयज्यभ्यास-पूर्वार्द्धं यदग्नीषोमीयात् प्राचीनमिति [4]सम्भवति, सोमयज्यभ्यासप्रवृत्तेस्सुत्या-कालीनत्वात्। अग्नीषोमीयस्य च पशोस्ततः पूर्वेद्युरेव वृत्तत्वात्, यत्किञ्चिदित्यस्या-नन्वयापत्तेश्च। यत्किञ्चिदिति हि यद्यदिति वीप्सायां[5] पर्यवसानम्। न हि यज्यभ्या-सस्य यद्यत् पूर्वार्धमिति सम्भवति, तस्यैकत्वात्, यद्यदिति वीप्सायाश्च बहुपेक्षत्वात्। न द्वितीयः; प्रथमश्रुतस्य यज्ञशब्दस्य लक्षणापत्तेः। एवञ्चाग्नीषोमीयाद् यद्यत्प्राचीनं प्राग्देशभवमित्येवान्वयो युक्तः। मुख्यं यज्ञशब्दं यत्किञ्चिच्छब्दञ्चानुरुध्य जघन्य-प्राचीनशब्दे तद्देशवर्तिपदार्थलक्षणापि न दोषः। तस्मादवान्तरापूर्वविशेषप्रयुक्त-मेवोपांशुत्वम्।

---

१. यज्ञविस्तार. क.　　२. उपांशुत्वधर्मः क. ख,
३. विवक्ष्यते. क. ख.　　४. भवति. क, ख.
५. पर्यवसन्नः ग.

अत्रेदमवधेयम्- "उपांशु यजुषा" इत्युपांशुत्वं विहितम्। तत्र परप्रत्यायनार्थेष्वाश्रुतप्रत्याश्रुतसम्प्रैषादिषु सामर्थ्या[भावाद्] बाधितम्। एवञ्च दर्शपूर्णमासयोः परप्रत्यायकाश्रुतादिषु उच्चैस्त्वम्। 'मन्द्रेण प्रागाज्यभागाभ्यां' 'मध्यमेन प्राक्स्विष्टकृतः' 'क्रुष्टेन शेषे' इति मन्द्रादिस्वरा अपि परप्रत्यायनाश्रुतादिविषयेष्वेव व्यवतिष्ठन्त इति तृतीयस्य तृतीये निरूपितम्। तदेतत्सर्वं दीक्षणीयादिषु चोदकतः प्राप्तम्। तत्र क्वचिच्छाखायामाम्नायते- "यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति" इति। तथा "यावत्या वाचा कामयेत तावतीं दीक्षणीयायामन्वाह ततो नीचैस्तरां प्रायणीयायां, नीचैस्तमामातिथ्यायामुपांशूपसत्सूच्चैरग्नीषोमीये" इति क्वचिच्छ्रूयते। तथा—"मन्द्रेण वा दीक्षणीयायां, मन्द्रतरेण प्रायणीयायां मन्द्रतमेनातिथ्यायामुपांशूपसत्सूच्चैरग्नीषोमीये" इति क्वचिच्छ्रूयते। तथा 'उपांशु वा दीक्षणीयायां उपांशुतरं प्रायणीयायामुपांशुतममातिथ्यायामुपांशूपसत्सूच्चैरग्नीषोमीये" इति क्वचिच्छ्रूयते। त एते स्वरा दीक्षणीयादिप्रधानेषु विकल्प्यन्ते। अङ्गेषु तु प्रकृत एव स्वरः। उपसत्सु त्वाज्यहविष्कत्वात्, प्रधानेषूपांशुत्वप्राप्तेस्साङ्गासूपांशुत्वं विधीयते। "उपांशूपसद्भिश्चरन्ति" इति तृतीययोपसत्करणकभावनान्वयावगमाच्च। एवं "प्रवर्ग्येण प्रचरन्ति" इत्यत्रापीति याज्ञिकानुमतः पन्थाः।[1] "केचित्तु यत्किञ्चित्प्राचीनं यत्तेनोपांशु चरन्ति" इत्यपि तृतीयावशात् साङ्गविषयम्। ततश्च "उपांशूपसत्सु" इत्यनुवाद इत्याहुः। "उच्चैरग्नीषोमीयः" इति सर्वथानुवाद एव, साङ्गविषयं वा। [2]साङ्गोपसदुपांशुत्वमप्याश्रावणादिव्यतिरिक्तविषयमेव। 'मन्द्रस्वराण्युपांशोरुच्चानि, आगूः प्रणववषट्कारा उच्चैस्सर्वत्र' इति वचनादित्यलं प्रसक्तानुप्रसक्तेन॥

इति षष्ठमग्निष्टोम उपांशुत्वस्यावान्तरापूर्वप्रयुक्तत्वाधिकरणम्॥ ६॥

७

अथ प्रकृतम्। "अग्निं चिनुते" इति प्रकृत्य श्रूयते "हिरण्यशकलैरग्निं प्रोक्षति" "अग्निं दध्ना मधुमिश्रेण प्रोक्षति" "अग्निं मण्डूकेन विकर्षति" इत्यादि। किमिदं प्रोक्षणादि [3]प्रत्येकमिष्टकानां भवति? उत इष्टकाचितस्थण्डिलस्य सकृत्?

---

१. केचित्तु यत्किञ्चित्प्राचीनं. गपुस्तके स्खलितम्

२. साङ्गोपांशुत्वं क.

३. प्रत्येकं. नास्ति. क., ख.

इति संशयः। तदर्थं चेत्थं चिन्त्यते–किमत्राग्निशब्द इष्टकानां सङ्घातं तत्तादात्म्यापन्नमभिधत्ते? उतेष्टकाभिरवयवैरारब्धमिष्टकाव्यतिरिक्तमवयविनं स्थण्डिलविशेषम्? इति। तत्र पूर्वपक्षयति--

**अग्निधर्मः प्रतीष्टकं सङ्घातात् पौर्णमासीवत् ॥ २० ॥**

प्रोक्षणादिरग्निधर्मः प्रतीष्टकं स्यात्। कुतः? सङ्घातादेव निमित्तादग्निशब्दप्रवृत्तेः। इष्टकाव्यतिरिक्तस्यावयविनो[1]ऽभावात्। यत्र ह्येकस्मिन्नवयवे आकृष्यमाणे इतरेऽप्यवयवा आकृष्यन्ते, सन्धिश्चावयवानां नोपलभ्यते, तत्रान्योऽवयवी भवति, यथा मनुष्यादौ। तत्र ह्येकस्मिन्नवयवे आकृष्यमाणे इतरेऽप्यवयवा आकृष्यन्ते, सन्धिश्चावयवानां नोपलभ्यते। प्रकृते तु विपरीतमेव तत्। ततश्चातिरिक्तावयव्यभावादग्निशब्द इष्टकासमुदायवचनः। समुदायस्य चामूर्तस्य प्रोक्षणादिसम्बन्धो न युज्यते। अतस्तल्लक्षितानामिष्टकानां प्रत्येकं प्रोक्षणादिधर्मा भवन्ति, पौर्णमासीवत्। यथा "चतुर्होत्रा पौर्णमासीमभिमृशेत्" इत्यभिमर्शनं समुदायस्यासम्भवात् तदुपलक्षितानां हविषां भवति, तद्वत् ॥

अथ सिद्धान्तयति--

**अग्नेर्वा स्याद्द्रव्यैकत्वादितरासां तदर्थत्वात् ॥ २१ ॥**

अग्नेस्सकृदेव प्रोक्षणादि स्यात्, न तु प्रतीष्टकम्। कुतः? द्रव्यैकत्वात्-इष्टकाभिरवयवैरारब्धस्याग्नेरवयविन एकत्वात्। तच्च कुतः? इतरासां तदर्थत्वात्-"इष्टकाभिरग्निं चिनुते" इति श्रुतम्। इष्टकाभिरग्न्याख्यं स्थण्डिलविशेषमुत्पादयेदित्यर्थः। तृतीयया चाग्नेरिष्टकानाञ्च साध्यसाधनभावोऽवगतः। न हि समुदाय इष्टकाभिस्साध्यते, तस्येष्टकातादात्म्यात्। तस्मादन्योऽग्निः। तृतीयया चेष्टकानामग्निलक्षणपरार्थत्वमवगतम्। न च तासां प्रोक्षणादिसम्बन्धो भवितुमर्हति, 'गुणानाञ्च परार्थत्वात्' इति न्यायात्। अथेष्टकासु पृथक्कृतासु द्रव्यान्तरं किञ्चिन्नोपलभ्यत इति नास्त्यन्योऽवयवीति चेन्न; असमवायिकारणभूतेष्टकासंयोगनाशेन तदानीं द्रव्यान्तरस्य विनष्टत्वेन तदनुपलम्भोपपत्तेः। किञ्चैवं सतीष्टका अपि तदवयवव्यतिरेकेण न स्युः, तदवयवा अपि तदवयवव्यतिरेकेण न स्युरित्येवमापर-

1. व्यतिरिक्तावयविनः क.

माणुभ्यो गमनात् परमाणुष्वेव प्रोक्षणादिकमवतिष्ठेत। अशक्यत्वाच्च प्रोक्षणमनर्थकं स्यात्। यदि त्वेकमिष्टकाद्रव्यमिति देशकालादिभेदेऽप्यबाधितप्रतीत्याऽवयवेभ्यो[1] व्यतिरिक्ता इष्टका, अवयविविषयकत्वे च तद्बुद्धेरवयवबहुत्वेन तदेकत्वविषयकत्वानुपपत्तेरिति मन्यसे, तदाग्निरपि द्रव्यान्तरमिष्यताम्। एकोऽग्निरित्यबाधितप्रतीतेस्तुल्यत्वात्। एकस्मिन्नवयवे आकृष्यमाणे अन्येऽप्यवयवा आकृष्यन्ते तत्रैवान्योऽवयवीति पर्वतवृक्षादौ व्यभिचरितम्। सन्धिदर्शने सत्येवान्योऽवयवीत्यपि घटादौ व्यभिचरतम्। नन्वेवमपि 'निर्मन्थ्येनेष्टकाः पचन्ति" इति पक्वा इष्टकाः तासामन्तरालेषु "पुरीषमुपदधाति" इत्यपक्वाः सूक्ष्मचूर्णमृत्तिका उपधेयत्वेन विहिताः। पक्वापक्वानाञ्च न दृढतरसंयोग इति न द्रव्यान्तरारम्भकत्वं, 'पक्वामसंयोगे च न द्रव्यान्तरारम्भः' इति च काश्यपसिद्धान्त इति चेत्--न हि दृढतरसंयोग एव द्रव्यान्तरारम्भकः। वृक्षादिषु जीर्णसूक्ष्मशाखादिसंयोगे सत्यपि कार्पासादौ प्रशिथिलसंयोगेऽपि द्रव्यान्तरारम्भदर्शनात्। तस्मादेकमिदं द्रव्यमिति बुद्धिरेव द्रव्यान्तरत्वप्रयोजिका। ततश्चैकोऽग्निरिति बुध्यनुगृहीतया इष्टकाभिरग्निमिति तृतीयाश्रुत्या इष्टकाभ्यो द्रव्यान्तरमेवाग्निरिति सकृदेव प्रोक्षणादि॥

अथ पौर्णमासीवदित्यत्राह--

**चोदनासमुदायात्तु पौर्णमास्यां तथात्वं स्यात् ॥ २२ ॥**

तुर्वैषम्ये। पौर्णमास्यां--पौर्णमासीसंयुक्ते वाक्ये, समुदायात्-ल्यब्लोपे पञ्चमी। समुदायमुपलक्षणीकृत्य, तदुपलक्षितानां हविषामभिमर्शनचोदना युज्यते। आग्नेयादिभ्यस्त्रिभ्योऽन्यस्यावयविनः कस्य चिद्बुध्युपारोहाभावात्। अतस्तत्र पौर्णमासीशब्दस्य तथात्वं समुदायवचनत्वमेव, न तु तदन्यावयविपरत्वमिति॥

इति सप्तममग्नौ प्रोक्षणादेस्सकृदनुष्ठानाधिकरणम्॥ ८ ॥

८

द्वादशाहे श्रूयते--"पत्नी संयाजान्तान्यहानि सन्तिष्ठन्ते" इति। किमिदं द्वादशानामह्नाम्? उतोत्तममहर्वर्जयित्वा इतरेषाम्? इति संशये, पूर्वपक्षयति--

**पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥ २३ ॥**

---

१, अवयवेभ्योऽप्यतिरिक्ता. ग,

सर्वेषामेवाह्नां पत्नीसंयाजान्तत्वम्। कुतः? उत्तममहर्वर्जयित्वेति विशेषवचनाभावात्। ततश्च द्वादशापि सुत्याः पत्नीसंयाजान्ताः कर्तव्याः। पत्नीसंयाजोत्तरभावियज्ञपुच्छस्तु द्वादशाहक्रतौ[1] लुप्यते।

अथ सिद्धान्तयति—

## लिङ्गाद्वा प्रागुत्तमात् ॥२४॥

उत्तमादह्नः प्रागेकादशस्वेवाहस्सु पत्नीसंयाजान्तत्वम्। कुतः? "असंस्थितो हि तर्हि यज्ञः" इति हेतुवादलिङ्गात्। हि यतस्तर्हि[2] तेष्वेवाहस्सु यज्ञः द्वादशाहः क्रतुः असंस्थितः- असमाप्तः। अतस्तान्यहानि पत्नीसंयाजान्तानीति तदर्थः। प्रथमादिष्वहस्सु च न यज्ञस्समाप्यते, उत्तरोत्तरस्याह्नस्सत्वात्। अन्त्ये चाहनि[3] यज्ञस्समाप्यते। ततश्चोत्तममहर्वर्जयित्वैकादशस्वहस्स्वेव पत्नीसंयाजान्तत्वम् ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

## अर्थवादो वा यथा दीक्षा नक्तं संस्थापनस्य ॥२५॥

"वरुणपाशाभ्यां वा एष बध्यते यो दीक्षते। अहोरात्रे वै वरुणपाशौ। यद्धि वा संस्थापयेदनुन्मुक्तो वरुणपाशाभ्यां स्यात् नक्तं संस्थाप्य वरुणपाशाभ्यां मुच्यते" इत्यवभृथं प्रकृत्य श्रुतम्। न हि दीक्षया वरुणपाशाभ्यां बध्यते, तस्या विहितत्वेनाश्रेयस्करत्वानुपपत्तेः। नाप्यवभृथेन वरुणपाशाभ्यां मुच्यते, "शुक्रादीक्षायै तपसो विमोचनीः" इत्यादिलिङ्गेनावभृथस्य दीक्षाविमोचनार्थत्वात्। अतो दीक्षाया अवभृथकर्मणा नक्तसंस्थापनविधेर्यथाऽयमर्थवादः, तथा "असंस्थितो हि तर्हि यज्ञः" इत्यपि पत्नीसंयाजान्तत्वविधेरर्थवाद एव। पत्नीसंयाजान्तसंस्थाविधावसंस्थितत्वहेतुतावादस्य[4] व्याहतत्वात्। हेत्वधिकरणे हेतुवादस्यार्थवादत्वव्यवस्थापनाच्च। अस्तु वा "असंस्थितो हि" इति स्वार्थपरमपि, तथापि तदसंस्थितत्वं यज्ञस्योच्यमानमविरुद्धमेव। द्वादशाहस्य हि क्रतोस्सम्भवत्येवासंस्थितत्वम्, असंस्थितशब्देन चिरसंस्थितत्वस्य विवक्षितत्वात्। चिरेण भोक्तरि हि नास्य भोजनं समाप्यत इत्यस्ति व्यपदेशः। एवञ्चाविशेषप्रवृत्तपत्नीसंयाजान्तत्वविधेस्सङ्कोचोऽपि

---

१. क्रतोः क, ख. २. तेष्वहस्सु. ग.
३. अन्हि. क. ४. असंस्थितत्वे हेतुवादस्य. क.

न भवति। न चैवमसंस्थितशब्दस्य गौणत्वमिति शङ्क्यम्, अविशेषप्रवृत्तविधिसङ्कोचापेक्षयार्थवादगतस्यासंस्थितशब्दस्य[1] गौणताया एव न्याय्यत्वात्। तस्माद्द्वादशानामप्यह्नां पत्नीसंयाजान्तत्वम्॥

अथ सिद्धान्ती प्रत्याचष्टे—

**स्याद्वानारभ्य विधानादन्त्ये[2] लिङ्गविरोधात्॥२६॥**

उत्तमवर्जमेव पत्नीसंयाजान्तत्वं स्यात्। कुतः? अनारभ्य विधानात् विशिष्योत्तममहरुपादाय पत्नीसंयाजान्तत्वविध्यभावात्। अहानीत्यविशेषेणैव तद्विधानात्। तस्य च सामान्यविधेः अन्त्ये-उत्तमेऽहनि, लिङ्गविरोधात्-न्यायविरोधात् प्रवृत्तिरनुचिता। तथाहि "द्वादशाहेन प्रजामं याजयेत्" इति श्रुतम्। तत्राहश्शब्दो यजिसामानाधिकरण्याद्यागपरः। प्रकृतौ च ज्योतिष्टोमे हारियोजनान्तग्रहयज्यभ्यासाः (प्रज्ञाताः। ते चैकस्मिन् फले चोदितास्सहैव कर्तव्याः। तत्राग्नीषोमीयान्तानि पूर्वाङ्गानि, अवभृथाद्युत्तराङ्गानि च तन्त्रेणानुष्ठातव्यानि। प्राच्योदीच्याङ्गकलापयोरपि पृथक्पृथगनुष्ठाने सहत्वविरोधात्। मध्यवर्तिनः पदार्था ग्रहयज्यभ्यासाः) तत्सन्निपत्योपकारिणोऽभिषवाद्याः, तदाराढुपकाराश्च सवनीयादयः। ते काण्डानुसमयन्यायेन () प्रत्यहमावर्तनीयाः। तत्र सहत्वानुग्रहाय पूर्वंपूर्वमहः कस्मिंश्चित्पदार्थेऽवस्थाप्योत्तरमुत्तरमहः प्रवर्तयितव्यम्। तत्र यस्मिन् कस्मिंश्चित् पदार्थेऽवस्थापने प्राप्ते "पत्नीसंयाजान्तान्यहानि" इति प्रवर्तते। पूर्वंपूर्वमहः पत्नीसंयाजान्तं कृत्वोत्तरमुत्तरमहरारभेतेति। एवं सत्यपेक्षितविधिर्भवति। यज्ञपुच्छलोपाभावाच्चोदकानुग्रहश्च। न चास्मिन्नपि पक्षे पूर्वेषामह्नां पत्नीसंयाजोत्तरभावियज्ञपुच्छलोपश्शङ्क्यः, अन्त्येऽहनि सर्वाहस्साधारण्येन यज्ञपुच्छानुष्ठानात्। सर्वेषामेव [3]पत्नीसंयाजान्तत्वविधौ त्वनपेक्षितविधानम्, यज्ञपुच्छाभावाच्चोदकबाधश्च स्यात्। ततश्च अन्त्येऽहन्युत्तरस्यारम्भाभावान्न तस्य पत्नीसंयाजान्तत्वम्। यदि तत्रापूर्वविधिः इतरत्र नियमविधिरित्याश्रीयेत,[4] तर्हि वैरूप्यं स्यात्। एवञ्चा-

---

१. पदस्य. क. ख.

२. अन्ते.

() चिन्हान्तर्गतो भागः खण्डितः ग, अ.

३. पत्नीसंयाजत्वविधौ. क.

४. आश्रीयते. क, ख.

संस्थितशब्दोऽसमाप्तिवचनो मुख्य एवोत्तमवर्जितेष्वाश्रितो भवति। उत्तमेऽहन्येव यज्ञपुच्छानुष्ठानेन तदितरेष्वहस्सु यज्ञस्य समाप्त्यभावात् "अक्ताश्शर्करा" इत्यविशेषप्रवृत्तोऽपि विधिः "तेजो वै घृतम्" इति वाक्यशेषस्य द्रवद्रव्यमात्रपरत्वे गौणत्वापत्त्या तन्मुख्यत्वाय वाक्यशेषावगतविशेषे व्यवस्थाप्यते। किमु वक्तव्यम् न्यायादेव विशेषविषयस्य वाक्यशेषमुख्यत्वाय विशेषविषयत्वमिति। तस्मात् प्रागुत्तमात् पत्नीसंयाजान्तत्वम् ॥

इत्यष्टमं द्वादशाहे उत्तमाहर्वर्जं पत्नीसंयाजान्तत्वाधिकरणम् ॥८॥

९

दर्शपूर्णमासयोः श्रुतम्—"पञ्चदश सामिधेनीरन्वाह" इति। अग्निसमिन्धनार्था ऋचस्सामिधेन्यः। ताश्च मन्त्रसमाम्नाये एकादश [1]पठिताः। [ते च] "प्रवो वाजा" इत्याद्याः "आजुहोत" इत्यन्ताः। तत्रेदं श्रूयते—"त्रिः प्रथमामन्वाह त्रिरुत्तमां ताः पञ्चदश सम्पद्यन्ते" इति। अत्र अन्वाहेति प्रकरणप्राप्तानुवादः[2], त्रिरभ्यास एव विधेयः। तत्र प्रथमशब्द आकृत्यधिकरणन्यायेन स्थानविशेषलक्षणप्राथम्यवाचीत्यविवादम्। प्राथम्य[3] धर्मकत्वञ्च त्रिरभ्यासस्यानुपपन्नमिति तदाधारद्वारा तदुपपाद्यम्। तत्र संशयः—किमपुरस्कृत्य प्राथम्यं प्रवोवाजीया ऋक् त्रिरभ्यसनीयेति विधिः? या पाठदशायां प्रथमास्ति[4] प्रवोवाजीया तां [5]त्रिरन्वाहेति, तत्र प्राथम्यं प्रवोवाजेत्यृगुपस्थितावेवोपक्षीणमिति न तद्धर्मस्य त्रिरभ्यासः; उत ऋग्विशेषस्वरूपमपुरस्कृत्य प्राथम्यैकार्थसमवेतस्त्रिरभ्यासो विधीयते? प्रयोगदशायां यत्प्राथम्यविशिष्टं तत्त्रिरन्वाहेति। तत्र स्त्रीलिङ्गनिर्देशादृक्परत्वमवश्यं वाच्यम्। अन्यथा प्राथम्यस्य पदवर्णादिसाधारण्येन प्रथमशब्दार्थस्य त्रित्वं नियमतो न प्राप्तमित्यनुवादासम्भवात् तदपि विधेयं स्यात्। तथा च त्रिरभ्यासः त्रित्वञ्चेत्यनेकार्थ[6]विधानाद्वाक्यभेदस्स्यात्। तस्मात्पाठतः प्राथम्यमुपलक्षणीकृत्य तदपुरस्कारेणैव प्रवोवाजीया ऋक् अग्निसमिन्धनकार्याय त्रिरभ्यसनीयेति विधिः। तस्माद्यत्र कुत्रचिदपि प्रवोवाजीया ऋक् त्रिरभ्यसनीयेति फलतीति प्राप्ते, सिद्धान्तयति—

---

१. श्रूयन्ते. ख. २. प्राप्तोऽनुवादः. क, ख.
३. धर्मत्वं. अ, ग. ४. स्थिता. अ, ग.
५. त्रिराह. क ख. ६. वचनात्. ग.

**अभ्यासस्सामिधेनीनां प्राथम्यात् स्थानधर्मस्स्यात् ॥२७॥**

सामिधेनीनां मध्ये प्रथमायास्त्रिरभ्यासः स्थानधर्मस्स्यात्—अनुवचनतः प्रथमस्थानधर्मस्स्यात्। प्रथमशब्दो ह्याकृत्यधिकरणन्यायेन प्राथम्ये मुख्यः। तस्य च त्रिरभ्यासायोग्यत्वान् तदेकार्थसमवेतस्त्रिरभ्यासो विधीयते–यत्प्रथममनूच्यते तत् त्रिरिति। स्त्रीलिङ्गन्त्वरुणाशब्दवत् 'गुणवचनानामाश्रयतो लिङ्गवचनानि' इत्युपपद्यते, प्राथम्यस्य ऋगाश्रयत्वेनैव प्राप्तेः। न च वर्णपदादिधर्मतयापि प्राथम्यस्य सम्भवात् स्त्रीलिङ्गं नित्यानुवादस्स्यादिति शङ्क्यम्। अर्थप्रकाशनार्थमनुवचनम्, त्रिरभ्यासोऽपि तदर्थ एव। अर्थप्रतिपत्तिश्च वाक्यभूताया ऋच एव भवति, न तु तदवयवप्रथमवर्णपदमात्रत इति ऋगाश्रयं स्त्रीलिङ्गम्। किञ्च "ताः पञ्चदश सम्पद्यन्ते" इति प्रथमोत्तमयोस्त्रिरभ्यासेन सामिधेनीनां पाञ्चदश्यसम्पत्तिरुच्यते। पदवर्णाभ्यासे तु तदसङ्गतिः स्पष्टैव[1]। तस्मादृगाश्रयमेव प्राथम्यमिह विवक्षितम्। प्रवोवाजीयात्वन्तु [2]तत्र न पुरस्कार्यम्। ततश्च विकृतिषु सामिधेनीष्वृगन्तरागमेऽपि त्रिरभ्यासः फलति[3] ॥

इति नवमं सामिधेनीषु त्रिरभ्यासस्य प्रथमोत्तमस्थानधर्मत्वाधिकरणम् ॥९॥

१०

"दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयामिष्टिं निर्वपति" इति श्रुतम्। किमियमिष्टिः प्रतिप्रयोगं स्यात्? उत प्रथमप्रयोग एव? इति संशये, पूर्वपक्षयति—

**इष्ट्यावृत्तौ प्रयाजवदावर्तेतारम्भणीया ॥२८॥**

आरम्भणीयेति नामैकदेशग्रहणम्। इष्ट्यावृत्तौ--दर्शपूर्णमासयोरावृत्तौ, अन्वारम्भणीयाऽप्यावर्त्यते, प्रधानावृत्तावङ्गावृत्तेर्न्याय्यत्वात्। यद्यपि प्रतिपर्व प्रयोगा एव भिद्यन्ते न तु दर्शपूर्णमासौ, तथापि फले साध्ये तत्साधनकर्मणि यदा व्याप्रियते तदैवाङ्गैरुपकर्त्तव्यम्। व्यापृतिरेव प्रयोगः। अतः प्रतियोगमन्वारम्भणीयावर्तनीया प्रयाजवत् ॥

अथ सिद्धान्तयति—

**सकृद्वारम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् ॥२९॥**

---

१. स्पष्टमेव. क.　　२. तत्रापुरस्कार्यं. क.
३. फलमिति. क, ख.

पुनश्शब्दो वाक्यालङ्कारे। प्रथमप्रयोगस्यादौ सकृदेव कृतान्वारम्भणीया प्रथमद्वितीयादिसर्वप्रयोगार्था भवति। कुतः? आरम्भसंयोगात्। अन्वारम्भणीया हि प्रयाजादिवन्न दर्शपूर्णमासयोस्साक्षादङ्गम्, किन्त्वारम्भद्वारैव। आरप्स्यमान इत्यारम्भसंयोगेनैव श्रुतत्वात्। आरम्भश्च यावज्जीवमहं दर्शपूर्णमासाभ्यां यक्ष्ये इत्याधानोत्तरकालीनोऽध्यवसायः। स चारम्भ एकः सर्वप्रयोगसाधारणः। कुतः? यावज्जीवप्रयोगात्। ल्यब्लोपे पञ्चमी। यावज्जीवप्रयोगं यावज्जीवशास्त्रतस्सामान्याकारेण पर्यालोच्य तदध्यवसायस्यागृह्यमाणविशेषतयैव प्रवृत्तेः। एतेन तत्तत्प्रयोगारम्भो भिद्यत इत्यपास्तम्। उक्तसङ्कल्पस्यैवारम्भत्वेन विवक्षितत्वात्। अथवा प्रथमप्रवर्तनमारम्भः अन्वाधानपदार्थः। स च प्रतिप्रयोगं न भिद्यत इति तदर्थतया सर्वादौ कृतान्वारम्भणीया सर्वप्रयोगार्था भवति।

तदेतद्वृत्तिकारमतं भाष्ये दूषयित्वान्यथैवाधिकरणं [1]वर्णितम्। तद्यथा—पौर्णमास्यमावास्या च कालः कर्मणो निमित्तमिति यावज्जीविकाधिकरणे स्थितम्। तच्च निमित्तमेकमेवैकैकं प्रयोगं प्रयोजयति, न तु प्रयोगान्तरम्। पुरुषश्चैकैकस्मिन् निमित्त आगते एकैकं प्रयोगं कर्तव्यत्वेनाध्यवस्यति। ततश्चाधानानन्तरं निमित्ते पर्वण्यागते क्रियमाणस्सङ्कल्पः [2]प्रथमस्यैव प्रयोगस्याङ्गम्, न तु द्वितीयादेः। ततश्च सङ्कल्पस्य साधारणस्याभावात् प्रतिप्रयोगं भेदादावर्ततैवान्वारम्भणीया। यत्त्वन्वाधानमारम्भः, तस्यैकत्वात् सकृदेवान्वारम्भणीयेति तन्न; इतिकर्तव्यता हि किं प्रयुज्यमानत्वरूपेण कर्मणोऽङ्गम्? उत स्वरूपेण? आद्ये प्रतिप्रयोगमन्वाधानस्य प्रयुज्यमानत्वात् प्रयाजादिवदन्वारम्भणीयाप्यावर्ततैव। द्वितीये तु प्रयाजादीनामपि दर्शपूर्णमासकर्मण एकत्वात् सकृदेव प्रयोगस्स्यात्। यच्चाधानानन्तरं कृत्स्ननिमित्तेष्वनागतेष्वपि यावज्जीवशास्त्रतस्सामान्याकारेण कृत्स्नं प्रयोगं पर्यालोच्य तदध्यवसायादौ भवतीति, तदपि न; आधानानन्तरं हि शास्त्रतस्सर्वाणि कर्माणि नित्यानि काम्यानि च कर्तव्यानि जानाति, न तु तानि सर्वाणि करिष्य इति सङ्कल्पस्तदा भवति, अविहितत्वात्। न चाविहितमङ्गं भवति। किञ्च नित्यप्रयोगा निश्चितत्वात् सङ्कल्प्येरन्नपि। काम्यास्तु प्रयोगाः कामोत्पत्तेरनियतत्वान्न कथञ्चिदाधानानन्तरमेव

१. प्रवर्णितं. ग. २. प्रथमप्रयोगस्य. क, ख.

सङ्कल्पमर्हन्तीति तेष्वन्वारम्भणीया आवर्त्यैतैव। तस्मान्नोपवर्षाचार्यस्य वृत्तिकारस्य मतं युज्यते ॥

अधिकरणन्त्वेवं वर्णनीयम्–किमारभतिना दर्शपूर्णमासाद्यः [1]पदार्थोऽग्न्यन्वाधानमित्यभिधीयते, ततश्च तदङ्गमारम्भणीया? उत दर्शपूर्णमासयोरप्रवृत्तपूर्वस्य पुरुषस्य यदाद्यं प्रवर्तनं तदारभतिनाभिधीयते, ततश्च तत्कर्तुश्शानचाभिहितस्य संस्कारिका? इति संशये, पूर्वपक्षयति—

**इष्ट्यावृत्तौ प्रजादिवदावर्तेतारम्भणीया ॥**

आद्यपदार्थोऽग्न्यन्वाधानमारभतिना प्रथमप्रवृत्तिवाचिना लक्षणयाऽभिधीयते। लटा च क्रियार्थायां क्रियायामुपपदभूतायां विहितेनारम्भार्थत्वमवगतम्। ततश्च दर्शपूर्णमासयोर्यः [2]पदार्थः प्रथमोऽग्न्यन्वाधानं, तदङ्गभूतान्वारम्भणीया[3]। तद्द्वारा दर्शपूर्णमासार्था प्रतिप्रयोगमग्न्यन्वाधानावृत्तावावर्तेत, [4] प्रयाजवदित्यावृत्तिमात्रे दृष्टान्तः। प्रथमप्रवृत्त[5]पुरुषसंस्कारार्थत्वे तु फलान्तरं कल्प्यं स्यात्। न च लोके प्रथमप्रवृत्तिवाचकतया प्रसिद्धस्यारभतेस्तद्विषयाद्यपदार्थपरत्वे लक्षणा स्यादिति वाच्यम्, फलान्तरकल्पनापेक्षया लक्षणाया एव ज्यायस्त्वात्। तदङ्गञ्च तत्कर्तैव करोतीति पुरुषवचनश्शानजनुवादः ॥

अथ सिद्धान्तयति—

**सकृद्वारम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् ॥**

सकृदेवारम्भणीया। कुतः? आरम्भसंयोगात्। अप्रवृत्तप्रवर्तनमेवारभतिनाभिधीयते, न तु तद्युक्तः प्रथमपदार्थः, लक्षणाप्रसङ्गात्। लटा चारम्भार्थत्वमवगतम्। (शानचा त्वारम्भकर्तृपुरुषसंस्कारकत्वमवगतम्।) ततश्चारम्भणीयया दर्शपूर्णमासारम्भकर्तरि तद्योग्यतापादकसंस्काराधानमुखेन [6]दर्शपूर्णमासारम्भकस्योपकुर्यादित्यर्थः। न च पुरुषार्थत्वे फलान्तरकल्पनं शङ्क्यम्। न हि केवलमा-

१. पदार्थोऽन्वाधानं. क.
२. प्रथमपदार्थः. ग.
३. आरम्भणीया. ग.
४. आवर्तते. क.
५. त्रिपुरुष. ग, अ.
( ) कपुस्तके नास्ति.
६. दर्शपूर्णमासारम्भस्य. ग.

रम्भणीया स्वतन्त्रपुरुषार्था, किन्त्वारम्भयोग्यं पुरुषं कुर्वन्तीत्यारम्भार्था। तत्रापि नारम्भस्वरूपार्था, विनापि तयारम्भस्वरूपसिद्धेः। किन्त्वारब्धृपुरुषसंस्कारार्था सती दर्शपूर्णमासापूर्वार्था। आरप्स्यमान इति लडादेशशानच्छ्रुत्या प्रकरणानुगृहीतया तथालाभात्। अतो न फलान्तरकल्पनम्। ननु भवत्वारम्भणीया आरम्भयुक्तपुरुषसंस्कारिका। प्रकृते तु किमायातम्, तत्राह–एकः पुनरारम्भो यावज्जीवप्रयोगादिति। ल्यब्लोपे पञ्चमी। यावज्जीवप्रयोगमपेक्ष्यारम्भ एकः, आरम्भणीया साधारणी। यदि ह्यारम्भणीया कस्यचित्प्रयोगस्य मध्ये क्रियेत, तर्हि तत एव विशेषादितरप्रयोगसाधारणी न स्यात्। आरप्स्यमान इति हि भविष्यति प्रथमप्रयत्ने आरम्भणीया विहिता। सा च बहिःप्रयोगं क्रियमाणा अङ्गं भवन्ती अगृह्यमाणविशेषत्वात् सकृत्कृतैव सर्वेषां [1]दर्शपूर्णमासप्रयोगाणामुपकरिष्यतीति नावर्तनीया। न ह्येकस्यैव कर्मणो बह्वयः प्रथमप्रवृत्तयो भवन्ति, किन्त्वेकैव। यद्यपि द्वितीयादिप्रयोगानारभते, तथापि नासौ दर्शपूर्णमासावारभत इति व्यपदिश्यते। न हि द्वितीयादिवारं प्रयुञ्जानः प्रथमं प्रयुज्यत इत्यस्ति। ततश्च बहिःप्रयोगं क्रियमाणारम्भणीया सकृत्कृतैव सर्वप्रयोगाणामुपकरिष्यति।

ननु प्रकरणादारम्भणीया आरब्धृपुरुषसंस्कारमुखेन दर्शपूर्णमासार्थेत्यनुपपन्नम्। तैत्तिरीयादिशाखास्वारम्भणीयाया अनारभ्याम्नानादिति चेत्—'प्रकरणाधीतेयमारम्भणीया' इति भाष्यात् क्वचिच्छाखायां दर्शपूर्णमासप्रकरणे तदाम्नानमनुमातव्यमित्यदोषः। वार्तिके तु यथैव पर्णमयत्वादीनामनारभ्याम्नातानां[2] क्रत्वव्यभिचरितजुह्वाद्युद्देशेन विधीयमानानां तद्द्वारा क्रत्वर्थता, एवमारम्भणीयाप्यनारभ्याधीता दर्शपूर्णमासारम्भकर्तृभूतपुरुषे दर्शपूर्णमासयोग्यताधानाद्दर्शपूर्णमासार्थेति समाहितम्। नन्वनद्यतने भविष्यति लुट्। अद्यतने भविष्यति लट्। ततश्च यस्यैव प्रयोगस्याहन्यन्वारम्भणीया[3] क्रियते, तस्यैवेयं पुरुषं योग्यं करोति, न प्रयोगान्तरस्येति चेत्—अत्र भाष्ये '[4]द्वितीयादिष्वपि प्रयोगेषु, समान एवाहनि दर्शपूर्णमासावारप्स्यमानोऽसौ कृतान्वारम्भणीयो जात इति योग्य एव भवतीति समाहितम्। लटा ह्यारम्भस्यैवाद्यतनभविष्यत्वमवगतम्, न तु प्रयोगस्य।

---

१. दर्शपूर्णमासानां. क. २. अधीतानां. ख.
३. आरम्भणीया. ख. ४. द्वितीयादिप्रयोगेषु. क.

एवञ्चारम्भदिनकृतारम्भणीया सर्वेषामपि प्रयोगाणामुपकरिष्यतीति तदाशयः। वार्तिकतन्त्ररत्नयोस्तु—अनद्यतन एव भविष्यति लुडिति नियमः। लट्त्वद्यतनेऽनद्यतनेऽपि भवति। अन्यथानद्यतन एव भविष्यति लुडित्यभ्युपगमेऽनद्यतने भविष्यति लट् इत्यत्र भविष्यदनद्यतनशब्दयोस्सामानाधिकरण्यं विरुध्येतेति समाहितम् ॥

इति दशममन्वारम्भणीयाधिकरणम् ॥ १० ॥

११

वृत्तं प्रसक्तानुप्रसक्तम्। अथाध्यायार्थ ऊहश्चिन्त्यते। दर्शपूर्णमासयोरस्ति मन्त्रः—"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि" इति। तत्र किं चत्वारीमानि वाक्यानि—देवस्य त्वा सवितुः प्रसवे इति प्रथमम्। आश्विनोर्बाहुभ्यामिति द्वितीयम्। पूष्णो हस्ताभ्यामिति तृतीयम्। अग्नये इति चतुर्थम्। जुष्टं निर्वपामीति सर्वत्रानुषज्यते। सवित्रश्विपूषन् शब्दाश्च लक्षणयाऽग्निपराः। ततश्चाग्निशब्दवत् कर्मसमवेतदेवतावचनत्वात् सौर्यादिषु सवित्रादिशब्दस्थाने सूर्यादिपदं प्रयोज्यम्? उत देवस्य त्वेत्याद्येकमेव वाक्यम्। सवित्रादिशब्दाश्च स्वार्थपरा एवाग्नेयनिर्वापं प्रशंसितुमुपात्ताः। सवितृशब्देन हि निर्वापाभ्यनुज्ञाता यजमान एव सवितृत्वभेदादुपचर्यते। आश्विनोर्बाहुत्वेन पूष्णो हस्तत्वेन चाध्वर्युहस्त उपचर्यते। एवमयं निर्वापः प्रशस्तः? इति। ततश्च सवित्रादिशब्दानां कर्मसमवेतवचनत्वाभावान्न विकृतिषूह इति संशये पूर्वपक्षमुद्भाव्य निराकरोति—

**अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावस्स्यात् तत्राचोदितमप्राप्तञ्चोदिताभिधानात् ॥ ३० ॥**

शेषभावस्स्यादित्यन्तो भागः पूर्वपक्षपरः। उत्तरभागस्तु सिद्धान्तपरः। मन्त्राणामर्थप्रकाशनद्वारा कर्मणि शेषभावात् सवित्रादिशब्दानामपि कर्मसमवेताग्निप्रकाशनार्थत्वादूहः। सवित्रादिशब्दानां स्वार्थपरत्वे हि कर्मासमवेतसवित्रादिप्रकाशनमनपेक्षितमित्यदृष्टार्थत्वं स्यात्। निर्वापप्रशंसयापि न किञ्चिदस्ति दृष्टं प्रयोजनम्। ततश्च सवित्रादिशब्दा लक्षणया अग्निपरा एवेति चत्वार्यपि वाक्यान्येकमेवाग्निदेवत्यनिर्वापं प्रकाशयन्तीति स्यादूहः। न च विकृतावपि लक्षणया

सूर्यादिप्रकाशकत्वसम्भवात् कथमूहसिद्धिरिति वाच्यम्, प्रकृतौ लक्षणाया आर्थिकत्वेन विकृतिषु लक्षकशब्दोपादानस्यायुक्ततया धान्यशब्दोहविषयेऽनुपदमेव वक्ष्यमाणत्वात्, लिङ्गवचनोहावश्यम्भावाच्च। अस्तु वा स्वार्थपरत्वमेवाग्न्यादिशब्दानाम्, तथापि सवित्रादिमन्त्रवर्णैराग्नेयादियागेषु देवतान्तरविधिरनुमीयते। अग्न्यादिभिश्च सवित्रादयो विकल्प्यन्ते। एवञ्च सवित्रादिशब्दानां कर्मसमवेत ( वचनत्वादस्त्यूह इति पूर्वः पक्षः।

तत्राचोदितमित्यादिसिद्धान्तपरम्। तत्र "देवस्य त्वा" इत्यादिवाक्ये अचोदितम्—अचोदितार्थकं कर्मासमवेत-) देवतावाचकं सवित्रादिपदम् अप्राप्तम्—कर्तरि क्तः, ऊहं न प्राप्नोति। कुतः? चोदिताभिधानात्—चोदितस्याग्न्यादिविहितदेवताकनिर्वापस्य प्रशंसार्थं सवित्रादीनामभिधानात्। अग्न्यादिभिर्हि सवित्रादयो विकल्पं नार्हन्ति। अग्न्यादीनामुत्पत्तिशिष्टतया तद्धितोक्ततया च तदपेक्षयोत्पन्नशिष्टानां मन्त्रवर्णोक्तानाञ्च सवित्रादीनां विषमशिष्टत्वात्, मन्त्रभेदानुषङ्गदोषाच्च। स्वशब्देनाभिहितस्याग्नेः पुनर्लक्षणया सवित्रादिशब्दैरभिधानानपेक्षणाच्च॥

अथ प्रशंसाया अदृष्टार्थत्वमुक्तं निरस्यति—

**ततश्चावचनं तेषामितरार्थं प्रयुज्येत॥ ३१॥**

ततस्तेन सवित्रादिशब्देन, तेषां—कर्मसमवेताग्न्यादीनामवचनम्—अभिधानं न भवति, किन्त्वितरार्थम्—[1]निर्वापप्रशंसया उत्साहजननार्थं सवित्रादिशब्दः प्रयुज्येत। अतो विकृतिषु सवित्रादिशब्दा नोहितव्याः। विकृतिष्वपि प्रकृतिवदेव स्वार्थाभिधायकानामेव प्रशंसार्थत्वसम्भवात्। एवञ्च प्रकृतौ समवायसम्भवाद् उत्कर्षोऽपि न शङ्क्यः॥

इत्येकादशं निर्वापमन्त्रे सवित्रादिशब्दानां विकृतावूहाभावाधिकरणम्॥११॥

१२

देवस्य त्वेत्यादिमन्त्रे सवित्रश्विपूषशब्दा असमवेतवचनत्वान्नोह्या इति स्थितम्। "अग्नये जुष्टम्" इत्यग्निशब्दोऽपि किमसमवेतवचनत्वान्नोहितव्यः? उत समवेतवचनत्वादूहितव्यः? इति संशयः। जुषी प्रीतिसेवनयोरिति जुषधातु-

( ) ग पुस्तके चिन्हान्तर्गतो भागः स्खलितः। १. निर्वापप्रशंसार्थं. क.

रिह सेवनार्थकः। तस्मात्कर्मणि भूते क्तः। जोषणे च कर्त्रपेक्षायामग्नय इति चतुर्थ्यन्तं न सम्बध्यते, तृतीयाप्रसङ्गात्। नापि 'अग्नय' इति 'निर्वपामि' इत्यत्र सम्प्रदानतयान्वेति, ददातिकर्मणाभिप्रेयमाणस्यैव सम्प्रदानत्वात्। किन्तु तादर्थ्यचतुर्थ्येषा जुष्टमित्यत्रान्वेति। जोषणे तु सन्निधानादग्नेरेव कर्तृत्वम्। ततश्चाग्निना सेवितं 'यदग्न्यर्थं द्रव्यं तन्निर्वपामीत्यर्थः। निर्वापवेलायाञ्च द्रव्यं नाग्निना सेवितम्, निरुप्तव्रीह्यादिद्रव्येण पुरोडाशं निष्पाद्य तस्यैवाग्नये आज्यभागानन्तरं दास्यमानत्वात्। एवञ्च सवित्रादिशब्दवन्निर्वापप्रशंसार्थमेव जुष्टशब्दः कीर्त्यते। तद्विशेषणत्वादग्निशब्दोऽप्यसमवेतवचनत्वान्नोहमर्हतीति पूर्वपक्षमुद्भाव्य निराकरोति—

**गुणशब्दस्तथेति चेन्न समवायात् ॥ ३२ ॥**

[२]जुष्टविशेषणभूतोऽग्निशब्दोऽपि सवित्रादिशब्दवन्नोह्य इति चेत्—तन्न; समवायात्। नात्र जुष्टस्य सतो निर्वाप उच्यते, किन्तु निर्वापकरणिका जुष्टभाव्यका भावना चोच्यते-निर्वापेण जुष्टं करोमीति। अग्न्यर्थं द्रव्यमग्निना जोष्यमाणं यथा स्यात्तथा निर्वापेण करोमीत्यर्थः। ततश्च समवेतवचनत्वादूहः। नन्वेमपि भूतकालवाचिक्तप्रत्ययविरोधस्तदवस्थ एवेति चेत्, अत्र केचित्-'धातुसम्बन्धे प्रत्ययाः' इति वर्तमाने क्तप्रत्ययः, अग्न्युद्देशेन निरूप्यमाणत्वमेवाग्निजुष्टत्वमित्याहुः। एवञ्चाग्नये निरुप्यमाणं द्रव्यं निर्वपामीत्यर्थस्स्यादिति [तच्चि]न्त्यम्। यदपि 'आशंसायां भूतवच्च' इति भविष्यति निष्ठेत्याहुः, तदपि न; आशंस्यमानक्रियावृत्तेर्धातोरेव तद्विधानात्। वस्तुतस्तु—जुष्टमित्यस्य अभिरुचितमित्यर्थः। 'रुच्यर्थानां प्रीयमाणः' इत्यग्नेस्सम्प्रदानत्वाच्चतुर्थी। अभिरुचिश्च दास्यमानपुरोडाशप्रकृतिद्रव्ये निर्वापात् प्रागप्यग्नेरस्तीति भूतार्थकर्तृप्रत्ययस्य नानुपपत्तिः॥

इति द्वादशे निर्वापमन्त्रेऽग्निशब्दस्य विकृतावूहास्तित्वाधिकरणे प्रथमं वर्णकम्

## द्वितीयं वर्णकम्

वर्णकान्तरं वर्णितं भाष्ये। दर्शपूर्णमासयोः "धान्यमसि धिनुहि देवान् इति दृषदि तण्डुलानधिवपति" इति श्रुतम्। तत्र किं धान्यशब्दः समवेततण्डुलवचनत्वाद्विकृतावूह्यः? उतासमवेतवनत्वादनूह्यः? इति संशयः। असमवेतवचन-

१. अग्न्यर्थद्रव्यं ग.

२. जुष्टशब्दभूतः क.

इति ब्रूमः। धान्यशब्दो हि सतुषद्रव्ये रूढः, न तु तण्डुलवर्ती भवितुमर्हति। तथा च धान्यशब्दः केवलमदृष्टार्थः प्रयुज्यते, न तु समवेतप्रकाशनार्थं इति न विकृतावूहमर्हति। एवञ्च शाक्यानामयने "गृहपतिः मृगायां याति स यान्मृगान् हन्ति, तेषां तरसमयाः पुरोडाशा भवन्ति" इत्यत्र धान्यमसीत्यविकृत एव धान्यशब्दः प्रयुज्यत इति पूर्वपक्षमुद्भाव्य निराकरोति—

**गुणशब्दस्तथेति चेन्न समवायात्॥**

तुषगुणयोगात् प्रवृत्तिनिमित्तादागतश्शब्दो गुणशब्दः। सतुषद्रव्यवाची धान्यशब्दः। सोऽपि सवित्रादिशब्दवत्, प्रकृतावसमवेतवचनत्वादनूह्य इति चेत्—तन्न; कुतः? समवायात् 'वचनात्त्वयथार्थमैन्द्री स्यात्' इति तार्तीयीकाधिकरणन्यायेन ( ) ऐन्द्र्या गार्हपत्य इव धान्यशब्दस्य धान्यप्रकृतिकतण्डुले लक्षणया निवेशसम्भवात्। ननु लक्षणा पदतात्पर्याधीना, धान्यशब्दस्य च[1] तण्डुलतात्पर्यकत्वं नावगतम्। किन्तु "धान्यमसीति तण्डुलानधिवपति" इति कृत्स्नस्य मन्त्रस्याधिवापशेषत्वमवगतम्। तच्चादृष्टद्वाराप्युपपन्नमिति चेन्न; लक्षणयापि दृष्टार्थत्वसम्भवेऽदृष्टार्थत्वकल्पनस्यानुचिततया दृष्टानुसारिविनियोगस्यैव धान्यशब्दे तण्डुलतात्पर्यग्राहकत्वात्। ततश्च धान्यशब्दस्य [2]प्रकृतौ समवेततण्डुलवाचित्वात् तरसमयपुरोडाशेषु भवति 'मांसमसि' इत्यूहः।

ननु 'मृगोऽसि' इत्येव तत्रोह उचितः। दर्शपूर्णमासयोः प्रकृतिद्रव्यवाचकधान्यशब्देन धान्यविकृतितण्डुलप्रकाशनस्य दृष्टत्वादिति चेत्—सत्यम्; प्रकृतौ तावद्धान्यशब्दस्य तण्डुलेष्वनुपपत्तेर्लक्षणा। सा च तत्र वास्तवप्रकृतिविकारभावे शक्यसम्बधात् प्रवर्तते। नैतावता लक्षणया विकृतिद्रव्यं प्रकाशयितव्यमिति शास्त्रार्थः। मांसे च धान्यप्रकृतिकत्वमादाय धान्यसब्दस्य लक्षणया प्रवृत्त्यसम्भवात् धान्यशब्दस्य निवृत्तौ मांसप्रकाशनाय शब्दान्तर उपादेये मांसशब्द एवोपादेयः, न तु लाक्षणिको मृगशब्दः। धान्यशब्दाम्नानस्य धान्यशब्दयुक्तमन्त्राङ्गतामात्रे सामर्थ्यात्॥

इति द्वादशे निर्वापमन्त्रेऽग्निशब्दस्य विकृतावूहास्तित्वाधिकरणे
द्वितीयं वर्णकम्॥ १२॥

---

१. च. नास्ति. ग, अ. २. प्रकृतौ तु. ग.

१३

अस्ति दर्शपूर्णमासयोरिडानिगदः "इडोपहूत" इत्यादिः "विश्वस्य प्रियस्योपहूत" इत्यन्तो याजुषमन्त्रसमाम्नायः। बाह्वृच्ये तु "तस्मिन्नुपहूत" इत्यन्तः। तत्रेदं पठ्यते-"दैव्या अध्वर्यव उपहूता उपहूता मनुष्या य इमं यज्ञमवान् ये यज्ञपतिं वर्धान्" इति। ये इमं यज्ञं अवान्-रक्षन्ति ये यज्ञपतिं यजमानं वर्द्धान् वर्द्धयन्ति, ते दैव्या अध्वर्यव उपहूताः मनुष्याश्चाध्वर्यव उपहूता इति क्रमेणान्वयः। तत्र "ये यज्ञपतिं वर्द्धान्" इत्येतत् किं यज्ञपतिशब्दाभिधेययजमानवृद्धिप्रकाशनं प्रोत्साहनमुखेन यजमानसंस्कारार्थम्, ततश्च बहुयजमानकेषु सत्रेषु यज्ञपतीनित्यूहितव्यम्? उतेडास्तुत्यर्थत्वान्नोहः? इति संशयः। लिङ्गाद्यजमानवृद्धिप्रकाशनार्थत्वमेवेति ब्रूमः। न च "इडोपहूतेतीडामुपह्वयते" इति श्रुत्या इडोपाह्वाने विनियोगात् कथं लिङ्गाद्वृध्यर्थत्वमिति वाच्यम्। न हि "उपहूता मनुष्या ये यज्ञपतिं वर्द्धान्" इत्येतदुपादाय श्रुतिर्विनियुङ्क्ते, किन्तु प्रतीकेन विनियुङ्क्ते। प्रतीकेन विनियोगश्च परिमाणज्ञानाधीनः। परिमाणञ्च प्रश्लिष्टपठितानां यजुषां 'अर्थैकत्वादेकं वाक्यम्' इति न्यायेन ( ) ज्ञातव्यम्। 'यज्ञपतिं वर्द्धान्' इत्यंशस्य तु स्वरसतः "इडोपहूत" इत्याद्यंशादिडोपह्वानार्थाद् भेद एव प्रतीयत इति श्रौतो विनियोगस्तद्व्यतिरिक्तविषय एवावतिष्ठते। ततश्चेडामन्त्रैकवाक्यत्वबलादेवेडास्तुत्यर्थत्वं वाच्यम्। [तच्च लिङ्गाद्दुर्बलमिति "स्योनन्ते सदनम्" इतिवल्लिङ्गेन विभज्यैव यज्ञपतिवृद्धौ विनियोग इति युक्तम्। स्तुत्यर्थत्वेऽदृष्टार्थत्वापाताच्च। न च स्तुतेरपीडाप्रचारार्थतया सवित्रादिपदसाध्यस्तुतिवन्नादृष्टार्थत्वमिति वाच्यम्। "मानवी घृतपदी" इत्यादिभिरेव स्तुतिसिद्धेर्यज्ञपतिमिति स्तुतेरदृष्टार्थत्वावश्यम्भावात्। ततश्च सत्रे यज्ञपतिमित्येकवचनान्तेन यस्य कस्यचिदेकस्यैव यजमानस्य प्रकाश्यतया तदितरेषां संस्कारो मा विलोपीति बहुवचनान्तमूहितव्यमिति प्राप्ते, सिद्धान्तयति—

**चोदिते तु परार्थत्वाद्विधिवदविकारस्स्यात् ॥३३॥**

तुर्वैषम्ये। लाक्षणिकस्यापि धान्यशब्दस्य भवत्यूहः। चोदिते—मुख्यवृत्त्या समवेतवचने यज्ञपतिशब्दे तु अविकारः-अनूहस्स्यात्। कुतः? परार्थत्वात्-इडास्तुत्यर्थत्वात्। "ये यज्ञपतिं वर्द्धान्" इत्यनन्तरपठितानां "उपहूते द्यावापृथिवी"

इत्याद्यंशानामपि प्रत्यक्षवचनतो विनियोगो वाच्यः। अन्यथा तेषां लिङ्गेनाप्यन्यत्र विनियोगाभावेनानर्थक्यात्। ततश्च कृत्स्नस्य निगदस्यैकवाक्यतामङ्गीकृत्य प्रतीकेन कृत्स्नविनियोग इत्यङ्गीकार्यम्। ततश्च 'तन्मध्यपतितस्य यज्ञपतिमन्त्रस्यापि श्रुत्या इडोपह्वान एव, विनियोगादिडास्तुत्यर्थत्वम्। अतो न पृथग् यज्ञपतिमन्त्रस्य लिङ्गाद् वृद्धौ विनियोग उचितः, लिङ्गाच्छ्रुतेर्बलीयस्त्वात्। किञ्च वर्द्धानित्याख्यातस्य यच्छब्दबलेन यज्ञपतिं वर्द्धयितुं ये[2] समर्थास्ते मनुष्या ऋत्विज उपहूता इति मनुष्योपह्वानविशेषणतयैव वृद्धिप्रकाशकत्वेन [3]लिङ्गबलादपि स्वार्थतया न [4]वृद्धेः प्रकाश्यता। तद्विशेषणञ्च यज्ञपतिशब्दस्सुतरां परार्थ इति न विभज्य वृद्धौ विनियोगः। "स्योनन्ते" इति मन्त्रे तु यच्छब्दाभावेन स्वार्थतयैव सदनप्रतिष्ठापनयोः प्रकाश्यतया युक्तो लिङ्गबलाद्विभज्य विनियोगः। ततश्च यज्ञपतिशब्दस्येडास्तुत्यर्थत्वाद् अनूहः, विधिवत्- "शुक्रं यजमानोऽन्वारभते" इति परार्थतया यजमानविधौ यथैकेन तत्सिद्धिः, एवमिहाप्येकयजमानवृद्धिप्रकाशनेनापि स्तुतिसिद्धिरिति नोहः॥

यत्र पुनर्यजमानस्य प्राधान्यं न पारार्थ्यम्, यथा सूक्तवाके "आशास्तेऽयं यजमानोऽसावायुराशास्ते" इत्यादौ तत्र भवत्यूह इत्याह—

**विकारस्तत्प्रधाने स्यात्॥३४॥**

स्पष्टोऽर्थः॥

इति त्रयोदशमिडानिगदे यज्ञपतिशब्दस्य विकृतावनूहाधिकरणम्॥१३।

१४

अधिकरणान्तरपरतया तु व्याख्यातमिदं सूत्रं भाष्ये। तद्यथा- "सूक्तवाकेन प्रस्तरं प्रहरति" इति कृत्स्नस्य सूक्तवाकनिगदस्य[5] प्रस्तरप्रहरणार्थत्वमवगतम्। प्रहरणक्रियां तत्सम्बन्धिनं वा प्रकाशयतस्तादर्थ्यं वक्तव्यम्। "आशास्तेऽयं यजमानोऽसावायुराशास्ते" इत्यादीनाञ्च प्रस्तरप्रहरणतत्सम्बन्ध्यन्यतरप्रकाशकत्वमस्ति। न चायुरादीनां प्रहरणफलत्वं केनचित्प्रमाणेनावगतम्, येन तत्सम्बन्धिप्रकाशकता

१. तत्. नास्ति. क.　　२. ये नास्ति. क.
३. लिङ्गादपि. क.　　४. प्रवृद्धेः. ग.
५. सूक्तवाकस्य. क, ख.

स्यात्। अतो यजमानसम्बन्ध्यायुराद्याशिषां प्रकाशनमदृष्टविधया प्रहरणार्थमित्यवगमादेकयजमानसम्बन्ध्याशीःप्रकाशनेनाप्यदृष्टसिद्धेर्न बहुयजमानके सत्रे यजमानशब्द ऊहितव्य इति प्राप्ते, सिद्धान्तयति—

**विकारस्तत्प्रधाने स्यात् ॥३४॥**

यजमानप्रधानके "आशास्तेऽयं यजमानः" इत्यत्रोहस्स्यात्। सूक्तवाकेनेति हि[1] करणविभक्त्या [2]कृत्स्नस्य सूक्तवाकस्य करणतयैव प्रहरणाङ्गत्वं वक्तव्यम्। ततश्च यदत्र प्रकाश्यते तत्सर्वं प्रहरणसम्बन्धीत्यवगतम्, क्रियातत्सम्बन्ध्यन्यतरप्रकाशनेनैव करणत्वस्य निर्वाह्यत्वात्। तत्र चाग्न्यादयो देवताः प्रहरणक्रियां प्रति साधनतां प्रतिपद्यन्ते, आयुरादीनि तु फलत्वेनौचित्यात्। एवं सति दृष्टार्थत्वलाभात् प्रहरणफलत्वमपहाय यजमानसम्बन्धित्वेनाशिषां प्रकाशनस्य प्रहरणाङ्गताया अदृष्टद्वारकत्वापत्तेः[3]। ततश्च प्रमाणान्तरानवगतमप्यायुरादीनां प्रहरणफलत्वं करणत्वान्यथानुपपत्त्यैव कल्प्यते। न चैवं यज्ञपतिवृद्धेरपि करणत्वान्यथानुपपत्त्या फलत्वं कल्प्यं स्यादिति वाच्यम्। "ये यज्ञपतिम्" इति यच्छब्दबलेन परार्थतया प्रकाश्यमानवृद्धेः फलत्वासम्भवेन स्तुतिद्वारोपह्वानक्रियाप्रकाशनेनैव करणत्वस्य निर्वाह्यतया वैषम्यात्। नन्वस्त्वायुरादिफलम्, तथापि यजमान [4]आयुराद्याशासने कर्तृत्वेन गुणतयैव प्रतीयते[5], न तु प्राधान्येन। ततश्चैककर्तृकतया प्रकाशितमपि फलमविशेषात् सर्वेष्वेव प्रहरणादुत्पद्यत इति सर्वेषां प्रकाशनानपेक्षणात् कथमूह इति चेत्-सत्यम्; आयुरादीनां करणविभक्तिविनियुक्तमन्त्रवर्णबलात् प्रहरणफलत्वं कल्पनीयम्। तच्च फलितया प्राधान्येन यजमानप्रकाशन एव सम्भवति, न तु कर्तृत्वेन गुणतया, फलस्य कर्तृपुरुषार्थत्वस्वाभाव्यात्। ततश्च य एव फलितया न प्रकाशितः, तस्य प्रहरणं प्रति सूक्तवाको न करणमिति तेन प्रस्तरो न प्रहृतस्स्यात्। स च न फलमवाप्नुयादिति सर्वयजमानप्रकाशनाय भवत्यूहः। एवञ्च तृतीय एव फलत्वसिद्धावप्युक्तरीत्या ऊहासिद्धिशङ्कायां तत्सिद्ध्यर्थत्वादपुनरुक्तिः। तन्त्ररत्ने त्विह सिद्धमेवायुरादीनां फलत्वं तृतीयेऽनूदितमित्यपुनरुक्तिरित्युक्तम् ॥

इति चतुर्दशं सूक्तवाकगतयजमानपदस्य विकृतावूहाधिकरणम् ॥१४॥

---

१. हि. नास्ति. क, ख. २. कृत्स्नस्य. नास्ति. क.
३. द्वारकतापत्तेः. क. ४. आयुराशासने. क. ५. प्रतीतेः. क.

१५

अस्ति ज्योतिष्टोमे सुब्रह्मण्यानिगदः—"इन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेष-वृषणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जार" इत्यादि पठ्यते। तत्रेन्द्रशब्दः शुक्रा-मन्थ्यादिसोमयज्ञग्यासमवेतेन्द्रवचनत्वाद् अग्निष्टुति [1]केवलाग्नेये ऊह्यत इत्यविवादम्। हरिवदादिशब्दाः किमिन्द्रसमवेतगुणवचनाः? न? इति संशये, सिद्धान्तेनोपक्रमते--

## असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ ३५ ॥

विकृतावपि तद्विशिष्टम् - हरिवदादिशब्दविशिष्टमेव प्रतीयेत। कुतः? हरि-वदादिशब्दानां तदर्थेषु-इन्द्रगतहरिवत्त्वादिगुणेषु असंयोगात्-तात्पर्याभावात्। इन्द्रे हरिवत्त्वादिगुणसद्भावे प्रमाणाभावादिति यावत्। न चास्मादेव मन्त्रवर्णादिन्द्रस्य हरिवत्त्वादिगुणा अनुमीयन्त इति वाच्यम्। "श्रृणोत ग्रावाणो विदुषो नु त्वमिन्द्र-श्चन्द्रः कुबेरः" इत्यादिवदारोपेण [2]इन्द्रस्य स्तुत्याप्युपपत्तौ तत्कल्पनस्यान्याय्यत्वात्। ततश्चाऽग्नावपि तदारोपसम्भवान्नोहः। असंयोगादित्यस्य मेषत्वजारत्वादिना स्तुत्य-योगादित्यप्यर्थः। प्रत्युत मेषत्वादिना निन्दाया एव प्रतीतेः॥

अत्र पूर्वपक्षिणं प्रत्यवतिष्ठमानं निराचष्टे--

## [3]कर्माभावादेवमिति चेन्न परार्थत्वात्॥ ३६ ॥

"हरिव आगच्छेति पूर्वपक्षापरपक्षाविन्द्रस्य हरी ताभ्यां ह्येष सर्वं हरति, मेधातिथेर्मेषेति मेधातिथिं काण्वायनं मेषो भूत्वा जहार, वृषणश्वस्य मेन इति वृषणश्वस्य हि मेनका नाम दुहिता बभूव, तामिन्द्रश्चकमे, गौरावस्कन्दिन्निति गौर एव मृगो भूत्वारण्याद्राजानमपिबत्" इत्यादिवाक्यशेषमन्त्रेतिहासपुराणेषु इन्द्रस्याति-दुष्करकर्माणि श्रुतानि। कार्यार्थतया च मेषादिभावो न निन्दावहः, प्रत्युत गुणावहः। यथा भगवतो विष्णोर्मत्स्यवराहादिभावः। अत उक्तदोषाभावाद्धरिवदादिशब्दा-नामिन्द्रगुणवचनत्वान्नासमवेतवचनत्वमित्यग्निष्टुत्यूह [4]एव युक्त इति चेत्तन्न;

---

१. केवल अग्नेये. क.		२. इन्द्रस्तुत्या. ग.
३. कर्माभावान्नेति चेन्न.		४. एव युक्तः नास्ति. क.

परार्थत्वात्-देवतानां विग्रहादिपञ्चकाभावेन हरिवत्त्वादिगुणारोपेण केवलमिन्द्रस्तुतिमात्रार्थतया हरिवदादिशब्दानां स्वार्थतात्पर्याभावात्। तस्मादनूहः। यद्यपि छन्दोगसूत्रेऽग्निष्टुति अग्न आगच्छेत्याद्यूहितश्शाखान्तरस्थ एव पठ्यते, तथापि सूर्यस्तुतादिविषयमधिकरणं भविष्यति। वस्तुतस्तु देवताविग्रहादिपञ्चकमस्तीति प्रपञ्चितमस्माभिष्षष्ठे तिर्यगधिकरणे। अतोऽधिकरणमिदमनुपपन्नमेव। अत एवास्वरसाद्भाष्येऽधिकरणान्तरं वर्णितम्।

तद्यथा-ज्योतिष्टोमे एकहायनीं सोमक्रयणीं गामधिकृत्य मन्त्र एष आम्नातः "तस्यै शृतं तस्यै शरः तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्या आमिक्षा तस्यै वाजिनम्" इति। अत्र तच्छब्दस्त्रीलिङ्गस्समवेतसोमक्रयणीवचनत्वाद्विकृतौ साद्यस्के "त्रिवत्सस्साण्डस्सोमक्रयणः" इति विहिते वत्से पुल्लिङ्ग ऊह्यत इत्यविवादम्। त्रिवर्षो वत्सस्त्रिवत्सः, साण्डः अनाहतवृषणः, शृतं पयः, शरः मण्डः, मस्तु स्वयं विलीनम्। तत्र सिद्धान्तेनोपक्रमते—

## असंयोगात् तदर्थेषु तद्विशिष्टं प्रतीयेत ॥

त्रिवत्से "तस्यै शृतम्" इत्यादिवचनं शृतदध्यादिशब्दविशिष्टमेव प्रतीयेत। तदर्थेषु शृतादिशब्दार्थेषु पयोदध्यादिषु एकहायन्याः प्रकृतावसमवायात्। न ह्येकहायनी गौर्दुग्धे। केवलं स्तुतिपरा एव प्रकृतौ सोमक्रयण्यां शृतादिशब्दाः, न तु स्वार्थपराः। तस्मान्न तेषां त्रिवत्से ऊहः॥

अत्र पूर्वपक्षिणं प्रत्यवतिष्ठमानं निराचष्टे--

## कर्माभावादेवमिति चेन्न परार्थत्वात् ॥

यद्यप्येकहायनी नेदानीं दुग्धे। कालान्तरे तु दोहनं कर्म भविष्यति। ततश्च भावित्वेनाप्येकहायन्यां पयोदध्यादिसमवायसम्भवाद् असमवेतवचनत्वाभावाद्यथाकथञ्चिदपि स्वगुणद्वारेण कर्माङ्गैकहायनीप्रकाशनसम्भवे केवलस्तुतिपरत्वाश्रयणायोगात् त्रिवत्से ऊहसम्भवादनूह इत्येतन्न सम्भवतीति चेत्तन्न; परार्थत्वात्-एकहायन्यां शृतादिशब्दानां केवलं स्तुत्यर्थत्वात्। न तावत्प्रयोगाङ्गतादशायामेकहायन्यां शृतादिगुणाः सन्ति, यत्प्रकाशनं कर्माङ्गं स्यात्। भावित्वमपि नैकान्तिकम्, मरणसम्भवात्। सम्भावनामात्रन्तु स्यात्। न ह्येवंविधं प्रकाशनं कर्मणि दृष्टं प्रयो-

जनं साधयति । तस्मात्प्ररोचनामात्रार्थमेषां कीर्तनम् । प्ररोचना च त्रिवत्सेऽप्येतैरेव गुणैश्शक्या कर्तुम् । त्रिवत्सादपि या गौर्जनिष्यते, तस्याः शृतदध्यादिसम्भवात् । तस्मादनूहः । अत्र पूर्वपक्षे शृतदध्यादिशब्दानपोद्धृत्य त्रिवत्सगतयत्किञ्चिद्गुणप्रतिपादकाश्शब्दाः प्रक्षेप्तव्या इति फलति । सिद्धान्ते तु शृतादिशब्दा एव प्रयोज्या इति स्पष्टमेव ॥

इति पञ्चदशं सोमक्रयणीमन्त्रगतशृतादिपदानां विकृतावनूहाधिकरणम् ॥ १५ ॥

१६

"अग्नीषोमीयं पशुमालभेत" "आग्नेयमग्निष्टोम आलभते, ऐन्द्राग्नमुक्थ्ये द्वितीयम्, ऐन्द्रं वृष्णिं षोडशिनि तृतीयम्, सारस्वतीं मेषीञ्चतुर्थीमतिरात्रे" इति । एषां पशूनां सामानविध्यं पूर्वपक्षयित्वा अग्नीषोमीय एव प्रकृतिरितरे तद्विकारा इति सिद्धान्तितं तृतीये 'तुल्यस्सर्वेषां पशुविधिः प्रकरणाविशेषात्' इत्यधिकरणे । तत्र सामानविध्यपक्षे प्रयोजनं चिन्त्यते । अतिरात्रे तावत् आग्नेय ऐन्द्राग्नश्च च्छागौ ऐन्द्रो वृष्णिः सारस्वती मेषीति चत्वारस्सवनीयपशवस्सन्ति । अस्ति च पशुधर्मानुक्रमणे अध्रिगुर्नाम कश्चित् प्रैषः "दैव्याश्शमितारः" इत्यादिः । तत्र "प्रास्मा अग्निं भरत" इत्यादि पठ्यते । अस्मै-संज्ञप्त[1] नियमनाय अग्निं भरत पुरस्तान्नयतेत्यर्थः । सोऽयमध्रिगुप्रैषो मेष्यां भवति ? न वा ? इति संशये, सिद्धान्तेनोपक्रमते—

**लिङ्गविशेषनिर्देशात् समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ ३७ ॥**

समानं साधारणं धर्मविधानं येषां तेषु पशुषु मध्ये सारस्वती मेषी अध्रिगुप्रैषम् अप्राप्ता वेदितव्या । कुतः ? "अस्मै" इत्यादिपुल्लिङ्गनिर्देशात्, मेष्याश्च स्त्रीत्वात् ॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**पश्वभिधानाद्वा तद्धि चोदनाभूतं पुंविषयं पुनः पशुत्वम् ॥ ३८ ॥**

वाशब्दः प्रत्यवस्थाने । मेष्यामप्यध्रिगुप्रैषोऽस्तु, सामानविध्यपक्षे प्रकरणाविशेषात् । न च [2]पुंल्लिङ्गविरोधश्शङ्क्यः, इदंशब्देन सर्वनाम्ना अस्मै पशवे

---

१. संज्ञपनार्थं. क.          २. पुंल्लिङ्गावरोधः. ख.

इत्येवं पशोस्सन्निहितस्य परामर्शात्। हि-यतः, तत् पशुपदम् "अग्नीषोमीयं पशुमालभेत" इति चोदनायां भूतं-श्रुतमासीत्। अथ पशुशब्दस्य वा पुंल्लिङ्गस्य कथं मेष्यां प्रवृत्तिरत आह—पुंविषयं पुनः पशुत्वमिति। पुनश्शब्दो वाक्यालङ्कारे। पशुत्वं पुंविषयम्-पशुशब्दो नित्यपुल्लिङ्गः स्त्रियामपि मेष्यां वर्तितुमर्हति। यथा वशा गौरनुबन्ध्यः पशुः इत्यादौ।

अथ सिद्धान्ती परिहरति--

**विशेषो वा तदर्थनिर्देशात् ॥३९॥**

अस्मै इत्यस्य मेष्यास्सकाशाद् विशेषः-व्यावृत्तिरेव। कुतः? तदर्थनिर्देशात्। अस्मा इति पुंल्लिङ्गेन तदर्थस्य पुंस एवार्थस्य निर्देशात्। पशुशब्दस्य नियतपुंल्लिङ्ग-तया पशुत्वगतपुल्लिङ्गाभिव्यञ्जकत्वेन स्त्रियामप्यस्तु वृत्तिः, तावता इदंशब्दस्य कथं मेष्यां [1]प्रवृत्तिरिति भावः॥

पुनः पूर्वपक्षी प्रत्यवतिष्ठते--

**[2]पशुत्वं वैकशब्द्यात् ॥४०॥**

वाशब्दः प्रत्यवस्थाने। "अग्नीषोमीयं पशुमालभेत" इति सन्निहितं पशुत्वं पशुशब्दावगतमनुसृत्य "अस्मै" इत्यपि पुंल्लिङ्गश्शब्दो मेष्यां वर्तितुमर्हति। कुतः? ऐकशब्द्यात् एकार्थवृत्तिशब्दत्वात्। अस्मा इत्यस्य पशुविशेषणत्वादिति यावत्। विशेषणस्य विशेष्यलिङ्गत्वनियमात्॥

अथ सिद्धान्ती निराचष्टे--

**यथोक्तं वासन्निधानात् ॥४१॥**

लिङ्गविशेषनिर्देशादिति प्रथमसूत्रे यथोक्तं अध्रिगुर्न मेष्यां प्रवर्तत इति, तथैव प्रत्येतव्यम्। कुतः? असन्निधानात्--अध्रिगुप्रैषे पशुशब्दस्य श्रवणे हि तद्वि-शेषणमिदंशब्दस्स्यात्। न चात्र पशुशब्दः श्रुतः। "अग्नीषोमीयं पशुमालभेत" इति वाक्यगतपशुशब्दस्य लब्धान्वयस्य [3]बहुभिरसम्बन्धिपदवाक्यैर्व्यवहितस्यानुषङ्गे तु स एव दोषः। किञ्चाग्नीषोमीयवाक्ये सामान्यश्रुतस्य पशुशब्दस्य 'छागो वा

---

१. वृत्तिः अ, ग. २. पशुत्वञ्च. ३. बहुभिरसम्बद्ध. क.

मन्त्रवर्णान्' इति ( षष्ठान्त्याधिकरणन्यायेन छागपरतया निश्चितस्याध्रिगुप्रैषेऽनुवृत्तस्यापि न मेष्यां वृत्तिस्सम्भवति । ततश्च अस्मै इति ) सर्वनाम्ना पुंल्लिङ्गेनापरोक्षार्थवाचिना प्रयोगकाले यदपरोक्षतया स्थितं द्रव्यम्, तदेवाभिधीयत इति प्रयोगकालीना मेषीव्यक्तिः कथमभिधीयेत । तस्मान्मेष्यामध्रिगुप्रैषो निवर्तते । न च "अदितिः पाशान्" इति बहुत्ववद्विभक्तिवाच्यलिङ्गस्याप्यविवक्षया ()प्रवृत्तिस्स्यादिति वाच्यम्, वैषम्यात् । सङ्ख्या हि विभक्त्यर्थः, लिङ्गन्तु प्रातिपदिकार्थ इति 'अभ्यासः सामिधेनीनाम्' इत्याधिकरणेऽनुपदमेव भाष्ये प्रपञ्चितम् । ततश्च प्रातिपदिकार्थस्यासम्भवान्मेष्यामप्रवृत्तिर्युक्ता । यदि तु टाबादीनां विभक्तिविशेषाणाञ्च वाच्यं लिङ्गमित्यङ्गीक्रियते, तदाप्याग्नेयादिचतुर्षु पशुषु सहालभ्यमानेषु मध्ये पुंपशुषु सन्निहितेषु प्रातिपदिकार्थस्याविरोधादस्मै इत्यस्य प्रवृत्तिः । मेष्यान्तु पुंल्लिङ्गस्यात्यन्तानर्थक्यादवृत्तिः । ऊहस्तु न, [1]प्रकृतौ तदभावस्य वक्ष्यमाणत्वात्[2] । एकवचनन्तु पशूनामग्निहरणं प्रति प्राधान्यात् प्रत्येकाभिप्रायं भविष्यतीति नानर्थक्यम् । ततश्चाग्नेयाद्यभिप्रायेण अस्मा इति प्रयोक्तव्यम्, न तु मेष्यभिप्रायेण । मेष्यनभिधानमेव चाप्रवृत्तिरित्यनेन विवक्षितम्, न तु सर्वथाप्रवृत्तिः, आग्नेयाद्यर्थत्वेन तत्प्रवृत्तेरावश्यकत्वात । ततश्च प्रकरणमप्यनुग्रहीष्यते । एवञ्च सामानविध्यपक्षे अस्मा इत्यनेनाग्नेयादीनामभिधानम्, न तु मेष्या इति प्रयोजनमुक्तं भवति । अग्नीषोमीय एव प्रकृतिरिति पक्षे तु अस्मा इति प्रातिपदिकार्थस्य लिङ्गस्य सङ्ख्यायाश्च तत्र समवेतत्वादतिरात्रपशुषु तद्विकृतिषु लिङ्गवचनयोरूहः । तत्र च इमे च इयञ्चेति 'पुमांस्त्रिया' इत्येकशेषेण 'एभ्यो अग्निं भरत' इति प्रयोक्तव्यमित्यर्थादुक्तं भवति ॥

इति षोडशं सारस्वत्यां मेष्यामध्रिगुप्रैषस्य प्रवृत्त्यभावाधिकरणम् ॥१६॥

## १७

सामोहो निरूपयिष्यते । तदुपोद्घातत्वेनेदमारभ्यते । अस्ति ज्योतिष्टोमे "यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे, प्र प्र वयम्" इत्यृचि यज्ञायज्ञीयं नामाग्निष्टोमसाम । तत्रेदं श्रूयते—"न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम्" इति ।

---

()क पुस्तके ग्रन्थपातः. 

१. विकृतौ. क.

२. लक्ष्यमाणत्वात्. ग.

तत्र गिरापदगीतिस्थाने इरापदगीतिः, गिरापदस्थाने इरापदमिति च वक्ष्यते। किमिह इरापदगिरापदयोर्विकल्पः ? उत नित्यमेव गिरापदस्य स्थाने इरापदम् ? इति संशये, सिद्धान्तेनोपक्रमते—

**आम्नातादन्यदधिकारे वचनात्तद्विकारस्स्यात् ॥४२॥**

अधिकारे-ज्योतिष्टोमप्रकरणे आम्नाताद् गिरापदाद् अन्यत्-इरापदं तद्विकारस्स्यात्-तस्य गिरापदस्य नित्यमेव बाधकं स्यात्। कुतः ? वचनात्-"ऐरं कृत्वोद्गेयम्" इति इरापदस्य प्रत्यक्षविधानात्। तथा चेरापदस्य वाचनिको गानसम्बन्धः। गिरापदस्य तु पाठबलात् कल्प्यो गानसम्बन्ध इत्यतुल्यबलत्वान्न विकल्पः। प्रत्यक्षविहितत्वाच्चेरापदं गिरापदस्य बाधकमेव स्यात् ॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते--

**द्वैधं वा तुल्यहेतुत्वात् [1]सामानार्थ्याद्विकल्पस्स्यात् ॥४३॥**

वाशब्दः प्रत्यवस्थाने। द्वैधं-द्विविधं [2]गिरापदमिरापदञ्च गानेन युज्यते। कुतः ? तुल्यहेतुत्वात्-गिरापदवदिरापदस्यापि गानसम्बन्धे [3]कल्प्यप्रमाणकत्वाविशेषात्। "ऐरं कृत्वा" इति वचनस्येरापदोत्पत्तिमात्रपरतया गानसम्बन्धस्यापि वाचनिकत्वाभावात्। ऐरं कृत्वेत्युत्पन्नस्य [4]हीरापदस्यावान्तरप्रकरणात् स्तोत्राङ्गत्वेनावगतस्य "यज्ञायज्ञीयेन स्तुवीत" इति स्तोत्राङ्गत्वेन विहितगानसम्बन्धोऽर्थप्राप्तः, अप्रगीतस्य गानसाध्यस्तुतिसाधनत्वानुपपत्तेः। अत उद्गेयमित्यनुवादः। ततश्च स्तोत्राङ्गभूतगानसम्बन्धो गिरापदेरापदयोर्न प्रत्यक्षवचनगम्यः। ननु भवत्वेवं तथापि तयोस्समुच्चयः कुतो न स्यादित्यत आह-सामानार्थ्याद्विकल्पस्स्यादिति। गिरापदेरापदयोः स्तोत्राङ्गभूतगानलक्षणैककार्यत्वाद् 'एकार्थास्तु विकल्पेरन्' इति द्वादशिकाधिकरणन्यायेन ()विकल्प एव युक्तः ॥

अस्तु वेरापदस्य प्रत्यक्षो गानसम्बन्धविधिः, तथापि गिरापदस्य गानसम्बन्धविधिर्दुर्लभ[5] इत्यत आह—

**उपदेशाच्च साम्नः ॥४४॥**

---

१. सामान्यात् २. इरापदं गिरापदं के. ३. प्रमाणकाविशेषात् क.
४. हि. नास्ति ग. ५. दुर्बलः क.

"यज्ञायज्ञीयेन स्तुवीत" इति [1]यज्ञायज्ञीयं साम विधीयते। तच्च गिरापदयुक्तायामृच्युत्पन्नम्! तस्मिन् विधीयमाने गिरापदमपि विहितमेव भवति। तस्माद्विकल्पः॥

अथ सिद्धान्ती निराचष्टे--

## नियमो वा श्रुतिविशेषादितरत्साम्प्रदश्यवत् ॥४९॥

नियमो वा-नित्यत्वमेवैरापदस्य, न तु गिरापदेन विकल्पः। कुतः? श्रुतिविशेषात्-"ऐरं कृत्वोद्गेयम्" इति प्रत्यक्षविधानात्। न चेदं वचनमुत्पत्तिमात्रपरमित्युक्तमिति वाच्यम्, इरापदार्थस्य दध्यादिवल्लोकप्रसिद्धस्वभावस्योत्पत्तिविध्यनपेक्षतया गानविनियोगपरत्वावश्यम्भावात्, अङ्गग्राहकतया[2] विनियोगबलादेवोत्पत्तिसिद्धेश्च। अन्यथा "ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः" इत्यादौ का गतिः? किञ्चोत्पत्तिमात्रपरत्वे ऐरं कुर्यादित्येव वक्तव्यम्, न तु कृत्वोद्गेयमित्यपि। सम्भवति च विधायकत्वेऽनुवादकत्वञ्चान्याय्यम्। न च "यज्ञायज्ञीयेन स्तुवीत" इति गिरापदस्यापि विधायकमिति वाच्यम्, अशब्दार्थत्वात्। ततश्च सामैव तत्र प्रत्यक्षं विधीयते। अभिधानरूपस्तुतेश्च शब्दसाध्यतया गीतिक्रियारूपस्य साम्नस्साक्षात्स्तुतिसाधनत्वानुपपत्त्यैव ऋचोऽपि विनियोगः कल्प्यते-यज्ञायज्ञीयसामाख्यगीत्यभिव्यक्तया ऋचा स्तुवीतेति। तत्र यया कयाचिदपि यज्ञायज्ञीयसामाभिव्यक्तया ऋचा स्तुतिक्रियायां प्रसक्तायां स्तोत्रावान्तरप्रकरणपाठबलाद् "यज्ञायज्ञा वो अग्नये" इत्यृचैवेति कल्पनीयम्। कल्पितेनापि विधिना ऋच एव विनियोगः। गिरापदस्य तु तदेकदेशस्यार्थाद्विनियोगलाभः। इरापदस्य तु साक्षाद्विशेषरूपेण च विनियोग इति इरापदमेव बलवत्, गिरापदन्तु दुर्बलमिति तेन बाध्यते। ननु तर्हि गिरापदस्योपदिष्टस्य को विषय इत्यत आह-इतरत्साम्प्रदश्यवदिति। साम्प्रदश्यवद्विकृतिषु निविशत इति भाष्यकृतः। यद्यपि प्रकरणक्लृप्तसम्बन्धेन पाञ्चदश्येन बाधितं साम्प्रदश्यं श्रुतसाम्प्रदश्यासु कासुचिद् विकृतिषु निविशते। गिरापदन्तु न कस्याञ्चिदपि विकृतौ पठ्यते। नापि चोदकात् तत्र प्राप्तिसम्भवः, क्लृप्तोपकारमेव हि विकृतौ चोदकतः प्राप्यते। इरापदमेव च प्रकृतौ क्लृप्तोपकारं न तु गिरापदम्, तस्य बाधितत्वात्। तस्माद्विकृतिषु गिरापदं निविशत इत्यनुपपन्नम्।

---

१. यज्ञायज्ञीयसाम क. २. भृङ्गग्राहिकया ग.

तथापि साप्तदश्यवत्प्रकृतौ गिरापदं बाध्यत इत्यत्रैव दृष्टान्तः । तथा च "यज्ञायज्ञीये-नाग्नेः पुच्छमुपतिष्ठते" "अग्नावाधीयमाने यज्ञायज्ञीयं गायति" इत्यादौ गिरापदं निविशते । प्रकृतौ विकृतिषु चाग्निष्टोमस्तोत्रसाधने यज्ञायज्ञीये इरापदमेव ॥

इति सप्तदशं यज्ञायज्ञीये इरापदस्य गिरापदबाधकत्वाधिकरणम् ॥१७॥

१८

नियतमिरापदमिति स्थितम् । तत्किमप्रगीतं प्रयोक्तव्यम् ? उत प्रगीतम् ? इति संशये, पूर्वपक्षयति--

अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशात्* ॥४६॥

अप्रगाणादिति प्रपूर्वाद् [१]गातेर्भावे ल्युट् । 'कृत्यचः' इति णत्वम् । ल्यब्लोपे पञ्चमी । अप्रगाणमाश्रित्यैरापदं प्रयोक्तव्यम् । अप्रगीतं प्रयोक्तव्यमित्यर्थः । कुतः ? तथाभूतोपदेशात्-ऐरमित्यनेन इरापदस्याप्रगीतस्यैवोपदेशात् । ऐरमिति हि स्वार्थिकः प्रज्ञाद्यण् । इरापदं कृत्वेत्यर्थः । अण्प्रत्ययप्रकृतिभूतञ्चाप्रगीतमेवेरापदं विवक्षितम्, न तु प्रगीतम् । तथा सति आ इ रमित्यापत्तेः । तथाहि 'वृद्धं तालव्यं प्रथमस्वरञ्च' इति छन्दोगसूत्रम् । 'इचुयशानां तालु' इति तालुस्थानकं तालव्यम् । क्रुष्टप्रथम-द्वितीयतृतीयचतुर्थमन्द्रातिस्वार्या नाम सप्तस्वराः । तत्र क्रुष्टप्रथमद्वितीयाः क्रमेण-उत्क्षिप्ततमः उत्क्षिप्ततरः, उत्क्षिप्तश्च भवन्ति । उदात्ततमः उदात्ततरः उदात्तश्चेति यावत् । चतुर्थमन्द्रातिस्वार्यास्तु क्रमेण-अवक्षिप्तः अवक्षिप्ततरः अवक्षिप्ततमश्च । अनुदात्तः अनुदात्ततरः अनुदात्ततमश्चेति यावत् । तृतीयाख्यस्तु स्वरः उदात्तान्नीचः [२]अनुदात्तादुच्चश्च मध्यम[३] इत्याख्यायते । तालव्यं प्रथमस्वरञ्च वर्णं वृद्धं प्लुतं भवतीत्यर्थः । प्रकृते चेरापदे इकारस्तालव्य उक्तलक्षणप्रथमस्वरकश्च भवति । ऊह-गाने 'योनिवत् स्वराः' इति सूत्रेण गिरापदगतप्रथमस्वरस्य तत्रातिदेशात् । ततश्च 'वृद्धतालव्यमा ई भवति' इति सूत्रान्तरेण तस्य आईभावे सति, आईराशब्दात् स्वार्थिकेऽण्प्रत्यये आईरमिति स्यात् । न च इरापदस्य विकार ऐरमिति विकारार्थे अण् प्रत्ययोऽस्तु । विकारश्च गीतिरेवेति वाच्यम् । न हीरापदस्य विकारो गीतिरेवे-ति निर्धारणमस्ति, चातुस्वर्यादेरपि तद्विकारस्य सत्वात् । तस्मादिरापदमप्रगीत-मेवात्र विधीयते ॥

*तथाभूतोपदेशस्स्यात्. १. गायतेः क, ख. २. अनुदात्तान्नीचः क. ३. सन्मध्यमः क.

अथ सिद्धान्तयति—

**यत्स्थाने वा तद्गीतिस्स्यात् पदान्यत्वप्रधानत्वात् ॥४७॥**

"न गिरा गिरेति ब्रूयात् यद्गिरा गिरेति ब्रूयादात्मानमेव तद्गिरेत्" इति गिरापदनिषेधानुवादबलाद् ( गिरापदस्थाने इरापदं विधीयत इत्यवगतम् । गिरापदस्थाने विध्यभावे हि ) गिरापदनिषेधोऽपि विधेयस्स्यात्, अनुवादत्वासम्भवात् । ततश्च यस्य गिरापदस्य स्थाने इरापदं विहितम्, तदीयगीतिरिरापदे स्यात् । नन्वेवमनुवादबलाद् गिरापदस्थाने विधिः, तत्स्थाने विधौ च गिरापदनिषेधस्य प्राप्तत्वादनुवाद इत्यन्योन्याश्रय [1]इत्यत आह-पदान्यत्वप्रधानत्वादिति । स्थानविशेषासंयोगेन श्रूयमाणस्येरापदस्य[2] यत्स्थाने विधौ सति गिरापदनिषेधस्यानुवादत्वं सम्भवति, तत्स्थाने तादृशपदान्तरविधिपरत्वादित्यर्थः । तथा च भाव्यनुवादत्वतर्कबलादेव[3] तत्स्थाने विधिलाभः, न तु प्रथमत एवानुवादत्वे सति पश्चात्तत्स्थाने विधिः, येनान्योन्याश्रयस्स्यादिति भावः । नन्विरापदस्य विकार ऐरमित्येवमा ई भावं विना अप्रगीतोपदेशादप्रगाणरूपस्यैव तद्धितार्थत्वादप्रगीतविधिनिश्चये, कथं स्थानापत्त्यापि [4]तद्गीतिप्राप्तिरित्यत्राप्येतदेवोत्तरम्-पदान्यत्वप्रधानत्वादिति । प्रकृत्यर्थभूतेरापदान्तरविधिपरमेवेदम्, न त्वप्रगाणलक्षणविकारविधिरपि, वाक्यभेदप्रसङ्गात्; विशिष्टविधिगौरवाच्च । तथा चेरापदविधौ तत्स्थानापत्तिरप्रत्यूहा । किञ्च समस्तेन यज्ञायज्ञीयसाम्ना स्तुतिस्साध्या नैकदेशविकलेन । तत्रेरापदाद् गिरापदे निवृत्ते तद्गतो गीत्यंशो गेयमपेक्षते । इरापदमपि सामसाध्यस्तुतौ सामाभिव्यक्ततामन्तरेण स्तुतिसाधनीभवितुमशक्तं सत् तदभिव्यञ्जकं सामांशमपेक्षते । तयोश्च नष्टाश्वदग्धरथन्यायेन सम्प्रत्ययो भवति । कस्यचिदश्वा नष्टाः, रथस्त्वस्ति । अन्यस्य रथो दग्धः अश्वास्सन्ति । तयोर्यथा परस्परापेक्षया सम्बन्धस्तथेरापदस्य गिरापदगीतेश्च सम्बन्ध इति प्रगीतमेवेरापदं प्रयोक्तव्यम् ॥

इतोऽप्येवमित्याह—

**गानसंयोगाच्च ॥४८॥**

---

( ) गपुस्तके भागोऽयं स्खलितः

१. इति. नास्ति. क.

२. यस्य इरापदस्य. ग.

३. तद्बलेन. क.

४. तद्गीतिरित्यत्रापि. क.

आ इरा इरा इति गेयमिति गानानुवादादपि प्रगीतमेवेरापदम् ॥

अत्राशङ्क्य निराकरोति--

**वचनमिति चेन्न तत्प्रधानत्वात् ॥४९॥**

आ इरा इरा इति गेयमिति विधिरेव, गेयमिति विधौ कृत्यप्रत्ययश्रवणात् । तथा च किमधिकरणप्रवृत्त्येति चेत्तन्न; तत्प्रधानत्वात् । अस्मिन्नेव स्तोत्रे "न प्रप्रेति ब्रूयात् प्रप्रीमिति ब्रूयात्" इति विधेः केवलपदान्तरविधिपरत्वात् । तत्राधिकरण-प्रवृत्तेः फलवत्वात् । न हि गानमिह श्रुतमस्ति । तस्मादिरापदे न्यायप्रदर्शनं फलवत् ॥

इत्यष्टादशं गिरापदस्थानापन्नेरापदे गानकर्तव्यत्वाधिकरणम् ॥१८॥

इति श्रीवासुदेवदीक्षितविरचितायामध्वरमीमांसाकुतूहलवृत्तौ
नवमाध्यायस्य प्रथमः पादः ॥



# अथ नवमाध्यायस्य द्वितीयः पादः

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

अथास्मिन् द्वितीयपादे सामोहश्चिन्त्यते । किं सामशब्देन गीतिविशिष्टा मन्त्रा अभिधीयन्ते ? किं वा गीतय एव ? इति संशये, पूर्वपक्षयति--

**सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥१॥**

मन्त्रमिति सामान्याभिप्रायमेकवचनम् । प्रगीतमन्त्रास्सामनीत्यध्यापकस्मरणाद् "अहे बुध्निय मन्त्रं मे गोपाय यमृषयस्त्रयिविदा विदुः, ऋचस्सामानि यजूंषि" इति मन्त्रे साम्नां मन्त्रविशेषत्वोपदेशाच्च । प्रगीतमन्त्रानेव सामान्येके मन्यन्ते ॥

सिद्धान्तयति--

**तदुक्तदोषम् ॥२॥**

'साम्नोऽभिधानशब्देन प्रवृत्तिस्स्यात्' इति सप्तमद्वितीयाद्याधिकरणे तत्-सामशब्दस्य गीतिविशिष्टमन्त्रवाचित्वम्, उक्तदोषम्, निराकृतमिति यावत् । उत्तरविवक्षया पुनस्स्मार्यत[1] इति न पुनरुक्तिदोषः ॥

इति प्रथमे साम्नां गीतिवाचित्वाधिकरणे प्रथमं वर्णकम् ॥१॥

द्वितीयं वर्णकम्

अधिकरणान्तरमपि वर्णितं भाष्ये । तद्यथा-सामानि द्वेधा, प्रकृतिभागः ऊहभागश्च । तत्र प्रकृतिभागे एकैकस्यां योनिभूतायामृच्येकैकं साम पठ्यते । ऊहभागे तु योन्यामुत्पन्नानि तानि सामानि तृचेषु पठ्यन्त इति स्थितिः । तत्रोह-साम्नां वेदत्वमस्ति ? न वा ? इति संशये, पूर्वपक्षयति--

**सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥**

---

१. समाधीयते. क.

ऊहसामान्यपि वेदमेके मन्यन्ते । कुतः ? स्मृत्युपदेशाभ्याम् , अध्येतृभिरूहभागस्यापि वेदत्वस्मरणात् , 'ऊहश्चिकीर्षितः' इति ब्राह्मणवाक्येनोहभागस्य यज्ञे कर्तुमिष्टत्वोपदेशाच्च । अवेदत्वे सति पौरुषेयत्वेनान्यथाभावशङ्कया तस्य यज्ञे कर्तुमिष्टत्वासम्भवात् ॥

अथ सिद्धान्तयति--

**तदुक्तदोषम् ॥**

तत्-'ऊहश्चिकीर्षितः' इति वाक्यम् उक्तदोषम्--उक्तो दोषो येन तदुक्तदोषम् कर्तुमिष्टत्वप्रतिपादकतया अनित्यत्वेनैवोहभागस्य प्रतिपादकम् । यद्वा-ऊहभागो वेद इत्यङ्गीकरणम् उक्तदोषम् । भावे क्तः । उक्तो दोषो व्याघातो यस्य तत्तथाविधम् । व्याहतमिति यावत् । ऊहगानस्य योनिवदुत्तरयोरप्यनादिसिद्धत्वेऽनाम्नातत्वाभावेनोहत्वस्यैव व्याघातात् । यद्वा, तत्--ऊहभागस्य वेदत्वम् उक्तदोषं-विस्पष्टदोषकम्, "यद्योन्यां तदुत्तरयोर्गायति"इति योनावाम्नानसिद्धस्य साम्न उत्तरयोः पुरुषानुष्ठेयत्ववचनात् । न च यद्योन्यामिति वाक्यमनादिसिद्धस्यैवोत्तरयोर्गानस्यानुवादकमस्त्विति वाच्यम् । तिसृणामप्यृचां सामोत्पत्तिस्थानत्वेन योनितया इयं योनिरिमे उत्तर इति विभागस्यैवाभावेन "यद्योन्यां तदुत्तरयोः" इति निर्देशस्यैवानुपपत्त्या तदनुवादत्वस्याप्ययुक्तत्वात् । कर्तुरस्मरणन्तु चिरकालातीतत्वात् सम्भवति । न चानध्यायवर्जनादिस्वाध्यायधर्मानादरस्स्यादिति वाच्यम् । ऊहभागे हि ऋचस्सामांशाश्च गीतिरूपा अपौरुषेया एव । ऋगन्तरेषु गीतिरचनाप्रकारस्तु पौरुषेयः । ततश्च ऋग्विषये गीतिविषये च तत्र स्वाध्यायधर्म आदर्तव्य एव । स तु गीतिसंसर्गे पौरुषेये नान्तरीयकः । एवञ्चोहपाठस्य पौरुषेयत्वाद्वक्ष्यमाणन्यायविरोधे तदप्रामाण्यमिति फलति ॥

इति द्वितीयं वर्णकम्

इति द्वितीयमूहग्रन्थस्य पौरुषेयत्वाधिकरणम् ॥१॥

३

गीतिस्सामेति स्मारितम् । किन्तद्गानमृचं प्रति कार्यत्वात् प्रधानभूतम् ? उत ऋक्संस्कारकत्वादृचं प्रति गुणभूतम् ? इति संशये, पूर्वपक्षयति—

**कर्म वा विधिलक्षणम् ॥३॥**

वाशब्दस्सम्भावनायाम् । गानाख्यं कर्म ऋचं प्रति [1]प्रधानमेव स्यात् । यतः, प्रधानविधिलक्षणं द्वितीयाश्रवणमस्ति "रथन्तरं गायति" इत्यादि ॥

ननु कथमृचो गानं प्रति शेषतावगमः ? तत्राह-

**तद्द्रव्यं वचनात् पाकयज्ञवत् ॥४॥**

सिद्धरूपस्यैव साधनत्वाद्, द्रव्यमिति साधनं लक्ष्यते। तत्सामगानम् ऋक्साधनकं भवति। कुतः ? वचनात्—'ऋचि गायति' इत्यधिकरणत्वेन ऋचो निर्देशात्, सिद्धरूपस्य चैवाधिकरणत्वात्। ततश्च 'सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपयुज्यते' इति न्यायेन () गानं प्रति ऋचस्साधनत्वं गम्यते, पाकयज्ञवत् । यथा विवाहादौ पाकयज्ञे 'लाजाञ्जुहोति' 'धाना जुहोति' इत्येवमादौ तृतीयाश्रवणाभावेऽपि सिद्धसाध्यसमभिव्याहारात् साधनत्वावगमस्तद्वत् ॥

ननु तर्हि ऋग्विशेषसाधनकं गानमेव साम स्यात्। ततश्च "अभि त्वा शूर नोनुम" इत्यृचि उत्पन्नस्य रथन्तरसाम्नः ऋगन्तरेषु क्रियमाणस्य तदेवेदं रथन्तरसामेति प्रत्यभिज्ञा न स्यात्, तत्राह—

**तत्राविप्रतिषिद्धो द्रव्यान्तरे व्यतिरेकः प्रदेशश्च ॥५॥**

तत्र-तस्मिन् ऋक्साधनत्वे साम्न आश्रीयमाणेऽपि, द्रव्यान्तरे-ऋगन्तरे व्यतिरेकः-संसर्गोऽभेदप्रत्यभिज्ञायाम् अविप्रतिषिद्धः-अविरुद्धः । न हि वयमृग्विशेषसाधनकं गानं सामशब्दवाच्यमिति ब्रूमः, गानमात्रस्यैव सामशब्दवाच्यत्वात्। गानं प्रति ऋचस्साधनत्वमेव ब्रूमः । न हि साधनभेदात् साम भिद्यते। अतो न [2]प्रत्यभिज्ञाविरोधः। एवञ्च प्रदेशश्च-"यद्योन्यां तदुत्तरयोर्गायति" इति योनावुत्पन्नस्य साम्न उत्तरासु क्रियमाणस्य यत्तच्छब्दाभ्यामभेदनिर्देशोऽप्युपपन्नो भवति। तस्मादृचं प्रति साम प्रधानमिति ॥

अथ सिद्धान्तयति--

**शब्दार्थत्वात्तु नैवं स्यात् ॥६॥**

---

१. प्रधानभूतं स्यात्. क.   २. प्रत्यभिज्ञायाः. क.

तुः पक्षव्यावृत्तौ। ऋचं प्रति साम प्रधानमित्येवं न स्यात्। किन्तु ऋक्प्रधानकमेव साम स्यात्। कुतः? शब्दार्थत्वात्-गानस्य ऋगक्षराभिव्यक्त्यर्थत्वात्। साम्ना हि ऋगक्षराणि प्रत्यक्षमेवाभिव्यज्यन्ते। तैश्चाभिव्यक्तैः शब्दैः गुणाभिधानात्मिका स्तुतिः प्रत्यक्षमेव क्रियत इति "आज्यैस्स्तुवते" इत्यादौ गानस्य दृष्टविधया क्रतूपकारकत्वम्। गानस्य ऋचं प्रति प्रधानत्वे तु ऋग्गुणकस्य साम्नः गुणाभिधानात्मिकायां स्तुतावक्षराभिव्यक्तिरूपसंस्कारद्वारा विनियोगाश्रवणाददृष्टविधयैव क्रतूपकारकत्वं स्यात्। तत्र स्तुतिसाधनत्वमृचस्सामर्थ्यादेव गानकृतवर्णाभिव्यक्तिद्वारेति कल्पनायामपि गौरवमेव। तस्माद्दक्संस्कारकं साम॥

अथाक्षराभिव्यक्त्या स्तुतिनिर्वृत्तिमपुरस्कृत्य ऋगधिकरणकं गानं सामेत्येवाभ्युपगमे दोषमाह—

***असम्बन्धश्च कर्मणा शब्दयोः पृथगर्थत्वात्॥७॥**

प्रधानकर्मत्वे हि [1]क्रतोर्बहिः तत्प्रयोगः फलार्थः, क्रतुमध्ये त्वाराादुपकारक इति फलति। ततश्च "रथन्तरं पृष्ठं भवति" इत्यत्र रथन्तरशब्दस्य पृष्ठशब्देन क्रियाविशेषवाचिनान्वयो न स्यात्। तत्र पृष्ठमिति हि स्तोत्रविशेषो गुणाभिधानात्मक उच्यते। रथन्तरशब्दश्च गीतिविशेषे। तयोश्च सामानाधिकरण्येनान्वयो न सम्भवति। कुतः? पृथगर्थत्वात्-भिन्नार्थकत्वात्। नापि रथन्तरशब्दः रथन्तरगुणके पृष्ठे वर्तत इति वक्तुं शक्यम्। असंस्पृश्यैव स्तोत्रनिर्वृत्तिं गानस्य क्रतूपकारकत्वात्। गानस्य ऋगक्षराभिव्यक्तिद्वारा स्तुतिनिर्वर्तनेन क्रतूपकारकत्वे तु रथन्तरशब्दस्य रथन्तरगीत्यभिव्यक्ताक्षरनिर्वृत्त्यै पृष्ठस्तोत्रे प्रवृत्तिसम्भवान्न सामानाधिकरण्यविरोधः॥

अत्र पूर्वपक्षी प्रत्यवतिष्ठते-

**संस्कारस्त्वप्रकरणेऽग्निवत्स्यात् प्रयुक्तत्वात्॥८॥**

तुर्नार्थे प्रत्यवस्थाने च। स्यादित्युभयत्र[2] सम्बध्यते। साम्ना ऋचस्संस्कारः किमक्षराभिव्यक्तिरूपः? उतादृष्टरूपः? उत वोभयरूपः? नाद्य इत्याह-संस्कारस्त्वप्रकरणे स्यादिति। अप्रकरणे-क्रतोर्बहिः अक्षराभिव्यक्तिसंस्कारः प्रयोजनाभावान्न

---

*एतत्पूर्वं 'परार्थत्वाच्च शब्दानाम्' इति सूत्रपाठः.

१. बहिःक्रतु. क. २. उभयत्रापि. ग.

स्यात्। कर्मकाल एव हि ऋगक्षराभिव्यक्तिः क्रियमाणा स्तुतावुपयुज्यते। बहिःक्रतु अभिव्यक्तिरदृष्टार्था, क्रतुमध्ये तु दृष्टार्थेति तृतीयपक्षे तु वैरूप्यापत्तिः। न द्वितीय इत्याह–अग्निवत्स्यात् प्रयुक्तत्वादिति। तथा सति बहिरेव साम्नामदृष्टार्थं प्रयोग-सम्भवात्। तत्संस्कृतान्यक्षराणि अग्न्याधानसंस्कृताग्निवत् क्रतोरुपकुर्वन्तीति क्रतुमध्ये प्रयोगो न स्यात्॥

अथ परिहरति–

**अकार्यत्वाच्च शब्दानामप्रयोगः प्रतीयेत ॥९॥**

चकारस्तुपर्यायः अवधारणे। अकर्मकाले प्रयुक्तानां कर्मकालीनकार्याक्षम-त्वात् कर्मकालेऽप्रयोगोऽवश्यं प्रतीयेत, अकर्मकालीनगानस्य तदानीमेव विनष्टत्वात्॥

नन्वकर्मकालीनं विनष्टमप्यदृष्टद्वारा क्रतोरप्युपकुर्यात्, तत्राह–

**आश्रितत्वाच्च ॥१०॥**

चोऽवधारणे। प्रयोगस्य कर्तृकालाश्रितत्वनियमादिति यावत्। "औदुम्बरीं मध्ये सदसो मिनोति" "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति श्रवणात्। अतो न बहिः-क्रतु गानमग्न्याधेयवत्कल्पयितव्यम्[1]॥

अत्राशङ्क्य परिहरति—

**प्रयुज्यत इति चेद् ग्रहणार्थं प्रयुज्येत ॥११॥**

"प्रौष्ठपद्याः पौर्णमास्या उपरि हस्तनक्षत्रे सामान्युपाकृत्यार्धपञ्चमान् चतुरो मासानधीयीत" इति वचनात् बहिः क्रतु गानं प्रयुज्यत इति तस्यादृष्टार्थत्वं दुर्वार-मिति चेत्–तन्न; यतः तदानीं ग्रहणार्थं गानं प्रयुज्येत। ग्रहणशब्दो धारणस्याप्युप-लक्षणम्। यत्तावद् उपाध्यायादधीते तद्ग्रहणार्थम्, यत्तावद् गृहीतमभ्यस्यति तद्धारणार्थम्। ग्रहणधारणे च भूमिरथिकवत् शुष्केष्टिवच्च प्रयोगार्थे। यथाहि भूमिरथिको भूमौ रथमालिख्य रथकर्मयोग्यतां सम्पादयति, यथा वा प्रयोगग्रन्थ-मधीत्य प्रयोगनैपुण्याय शुष्केष्टिं प्रयुङ्क्ते तद्वत्। ततश्च कर्मकालीनाक्षराभिव्यक्ति-

---

१. कल्पनीयम्. क.

गानस्य दृष्टं प्रयोजनम्, अकर्मकालेऽप्यभ्यासद्वारा तदेव प्रयोजनमिति न क्वाप्यदृष्टं कल्पनीयम्। ननु ऋगक्षराणां न संस्कारभाक्त्वम्, ऋचां विनियोगाश्रवणात्। न च संस्कारविधिरेव संस्कार्यविनियोजकमिति वाच्यम्; "सक्तून् जुहोति" इत्यत्रातिप्रसङ्गादिति चेन्न; "स्तोष्यन्तस्तुत्वा च स्तोत्रीया ऋचो जपन्ति" इति तद्विनियोगश्रवणात्। विनियोगाभावमभ्युपेत्यापि ब्रूमः– यत्र संस्कारविधिर्दृष्टशक्त्याद्यनुसारेण प्रयोजनपर्यवसितः, तस्मिंश्च प्रयोजने संस्कारस्य दृष्टशक्तिविधया सामर्थ्यम्, तत्र संस्कार्यस्यापि तत्प्रयोजने विनियोगं स एव संस्कारविधिः कल्पयति। 'रथन्तरं गायति' इति विधिर्हि अदृष्टकल्पनादौर्बल्याद् दृष्टामेव[1] स्तुतिनिर्वृत्तिं प्रयोजनमङ्गीकरोति। क्वचित्तु प्रत्यक्षवचनेनैव स्तुत्यर्थता। यथा "रथन्तरं पृष्ठं भवति" इत्यादौ। [2]तथा च ऋगक्षराभिव्यक्तिद्वारा साम्ना स्तुतिश्शक्या कर्तुमिति दृष्टशक्त्यनुसारिणस्सामविधेरयमर्थो भवति– साम्ना ऋगक्षराभिव्यक्तिद्वारा स्तुतिं कुर्यादिति, सामसंस्कृतैः ऋगक्षरैः स्तुतिं कुर्यादिति च[3] पर्यवस्यति। एवं स्वाध्यायविधावपि योज्यम्। स हि विधिर्दृष्टशक्त्यनुसारादर्थज्ञानपर्यवसितस्सन् संस्कारप्रयोजनेऽर्थज्ञाने स्वाध्यायशक्ये स्वाध्यायं विनियुङ्क्ते- अध्ययनसंस्कृतेन स्वाध्यायेनार्थज्ञानं कुर्यादिति। सक्तुहोमविधिस्तु न [4]दृष्टशक्तिविधया प्रयोजनपर्यवसित इति न तत्सामर्थ्यबलात् संस्कार्याणां विनियोगकल्पनेति वैषम्यम्। तस्मादृक्संस्कारकं सामेति।

प्रयोजनन्तु साम्नः प्राधान्ये प्रधानगीति[5] विरोधपरिहाराय योनिवर्णवशेनोत्तरासु गानं पूर्वपक्षे। सिद्धान्ते तु ऋगक्षराणां प्राधान्यात् तदनुसारेणोत्तरावर्णवशेनोत्तरासु गानम्, अन्यथाऽक्षरसंस्कारायोगात्॥

इति तृतीयं साम्नामृक्संस्कारकर्मत्वेन प्राधान्याधिकरणम्॥३॥

४

"एकं साम तृचे क्रियते स्तोत्रीयम्" इति श्रुतम्। तिसृणामृचां समाहारः तृचम्। 'ऋक्पूः' इति समासान्तः। 'त्रेस्सम्प्रसारणमुत्तरपदादिलोपश्च' इति

१. दृष्टमेव क.
२. सा च. क.
३. च नास्ति. क.
४. शक्त्यनुसारेण. क, ख.
५. विरोध. नास्ति. क.

वेदभाष्ये भट्टभास्करः। स्तोत्रीयं-स्तोत्रसाधनम्। किमत्रैकस्यामृचि एकस्य साम्नः कश्चिदवयवः, द्वितीयस्यामन्योऽवयवः, तृतीयस्यामितरोऽवयव इत्येवमवयवशस्ति सृष्वृक्ष्वेकं साम व्यासज्य गातव्यम्? उतैकैकस्यामृचि कृत्स्नश एकं सामाभ्यसनीयम्? इति संशये, पूर्वपक्षयति--

**तृचे स्याच्छ्रुतिनिर्देशात् ॥१२॥**

तृचे व्यासज्यैव गातव्यं स्यात्। कुतः? श्रुतिनिर्देशात्- श्रुतीति कर्मणि क्तिन्, साम क्रियत इति सामनिर्वृत्तौ श्रुतायां त्रित्वस्याश्रयभूतऋग्द्वारा साधनत्वेन विधानात्। ऋगाश्रितेन त्रित्वेन स्तोत्रीयं साम निर्वर्तयितव्यमिति हि वचनव्यक्तिः। त्रित्वञ्च व्यासज्यवृत्तीति तिसृभिरप्यृग्भिरेकं साम गातव्यमिति फलति। न च ऋचां गानं प्रति प्राधान्यस्य पूर्वाधिकरणे व्यवस्थापितत्वात् कथं तदाश्रितत्रित्वस्य, तद्द्वारा सामाङ्गत्वमिति वाच्यम्, आर्थिकसाधनत्वाभिप्रायेण तदुपपत्तेः। न च प्रत्यृचं परिसमाप्य गानेऽपि तिसृषु गानात् त्रित्वं गानाङ्गं सम्पत्स्यत इति वाच्यम्, प्रत्यृचं गानपरिसमाप्तौ साम्नां भिन्नत्वेन "एकं साम" इत्यनुपपत्तेः॥

इतोऽप्येवमित्याह--

**शब्दार्थत्वाद्विकारस्य* ॥१३॥**

विकारस्य शब्दशक्यविलक्षणस्याभ्यासस्य करोत्यर्थत्वापाताच्चेत्यर्थः[1]। प्रत्यृचं सामगानपरिसमाप्त्यभ्युपगमे एकस्यैव पुनः प्रादुर्भावात् प्रत्यृचं साम्नः प्रादुर्भावाभावाद् अपूर्वप्रादुर्भावार्थकरोतेस्तृचे सामाभ्यस्येदित्यर्थपर्यवसानावश्यम्भावात्॥

अथ सिद्धान्तयति--

**वाक्यानान्तु विभक्तत्वात्प्रतिशब्दं समाप्तिस्स्यात् संस्कारस्य तदर्थत्वात् ॥१४॥**

प्रतिशब्दम्-प्रत्यृचं साम्नः समाप्तिः-कृत्स्नशस्सम्बन्धः स्यात्, नावयवशः। कुतः? संस्कारस्य-करणे घञ्। अक्षराभिव्यक्तिजनकस्य साम्नः स्तुत्यर्थत्वश्रवणात्। "यज्ञायज्ञीयेन स्तुवीत" इत्यादौ यदि हि त्रित्वं सामनिर्वृत्त्यङ्गत्वाद् व्यासज्य गेयम्,

---

१. अर्थत्वापत्तेश्च क.

*'दर्शयति च' इति सूत्रपाठः,

तर्हि साम्नः कथं स्तुतिसाधनत्वम् ? तद्धि साम्नः [१]स्तुतिसाधनीभवदृगभिव्यञ्जकतयैव, न साक्षात्। स्तुतिश्च गुणबोधनम्। गुणबोधश्च[२] विशिष्टबोधात्मा। स च प्रत्यृचं भिद्यते। कुतः? वाक्यानाम्—ऋगात्मकानां विभक्तत्वात्--भिन्नत्वात्। तिसृणामेकस्तुतिबुद्धिजनकत्वे चैकार्थत्वान्मन्त्रभेदानुपपत्तिः। न हि व्यासज्य गीयमानस्य साम्नः प्रत्येकं स्तोत्रसाधनीभवदृचामभिव्यञ्जनसामर्थ्यमस्ति। ननु यदि न सामोद्देशेन त्रित्वविधिः, तर्हि किमुद्देशेन तद्विधिः? न च ऋगुद्देशेन तत्सम्भवः, एकस्मिंस्तृचपदे ऋगुद्देशेन त्रित्वविधेरसम्भवात्। एकस्य पदस्यैकप्रसरतयोद्देशोपादानलक्षणव्यापारद्वयासम्भवादिति चेत्--सत्यम्; प्रकरणोपस्थितं स्तोत्रीयशब्दोपस्थितं वा स्तोत्रमेवानूद्य तिसृभिस्स्तुवीतेति त्रित्वमङ्गत्वेन विधीयते। तत्र क्रमप्रकरणादिना स्तोत्राङ्गत्वेनावगता ऋचः त्रित्वस्य परिच्छेद्यत्वेनान्वीयन्ते[३]। तदनुवादश्च तृचशब्दावयवर्क्शब्द इति न दोषः। न च स्तोत्राङ्गत्वेन [४]क्रियाविधौ "साम क्रियते" इति किमर्थमिति वाच्यम्, त्रित्वविधिप्राप्तस्य तिसृषु गानस्यानुवादात्। अतस्तृचे प्रत्येकं साम कृत्स्नशः अभ्यसनीयम् ॥

उक्तो न्यायः श्रुतिसम्मत इत्याह--

## तथाचान्यार्थदर्शनम् ॥१५॥

अन्यार्थे-वाक्यशेषे तथैव दर्शनमस्ति। रथन्तरं [५]प्रकृत्य हि श्रुतम्--"अभि त्वा शूर नो नुम इत्यष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति, ईशेति नाजेति च द्व्यक्षरेणोत्तरयोः" इति प्रत्यृचं प्रस्तावभेदश्श्रुतः। एकस्य साम्न एकैव प्रस्तावभक्तिः। तिसृषु व्यासज्य गीयमाने च रथन्तरसाम्नि प्रथमायामेवर्चि प्रस्तावभक्तिस्स्यात्, न तूत्तरयोरिति तद्विरोधस्स्पष्ट एव ॥

इतोऽप्येवमित्याह--

## *उपदेशश्च तद्वत् ॥१६॥

---

१. स्तोत्र. ग.
२. बोधनञ्च. क.
३. विधीयन्ते. क.
४. त्रित्वविधौ. ग.
५. प्रस्तुत्य. क.
*अनवानोपदेशश्च.

उपदेशः–अध्ययनकालीनोऽभ्यासोऽप्युक्तहेतुवादस्य साधकः। स्वाध्यायाध्ययनकाले तावत् प्रत्यृचं कृत्स्नश एव सामगानमभ्यस्यते। व्यासस्य गानमित्यभ्युपगमे तथैवाभ्यस्येत, तदभ्यासस्य प्रयोगार्थत्वात्। तस्मादपि प्रत्यृचं कृत्स्नश एव गेयम्॥

ननु यदि प्रत्यृचं कृत्स्नशो गानम्, तर्हि "तृचे साम क्रियते" इत्यनुपपन्नम्, करोतेरपूर्वप्रादुर्भावार्थकत्वात्। [1]उत्तरयोश्च तदसम्भवात्। तत्राह--

अभ्यासेनेतरा श्रुतिः॥ १७॥

करोतिश्रुतिः, अभ्यासेन–अर्थेन प्रतिपाद्येन इतरा–मुख्यार्थविलक्षणा प्रत्येतव्या। अभ्यासे लाक्षणिकीति यावत्। अनुवादत्वाच्च लक्षणा न दोषः॥

इति चतुर्थं साम्नः प्रत्यृचं समापनाधिकरणम्॥ ४॥

५

तिसृष्वृक्षु प्रत्यृचं [2]कृत्स्नश एकं सामाभ्यसनीयमिति स्थितम्। तत्किं समच्छन्दस्कासु विषमच्छन्दस्कासु वेत्यनियमः? उत समच्छन्दस्कास्वेव? इति संशये, अविशेषादनियमे प्राप्ते, सिद्धान्तयति--

तदभ्यासस्समासु स्यात्॥ १८॥

तदभ्यासः--सामाभ्यासः समच्छन्दस्कास्वेव स्यात्। यदि हि योनावुत्पन्नं साम तदपेक्षया न्यूनच्छन्दस्कयोरुत्तरयोरभ्यस्येत, तदा सामैकदेशेनैव ऋगक्षराणामभिव्यक्तिपूर्तेरवशिष्टस्सामभाग आश्रयाभावाल्लोपात्मिकां हिंसां प्राप्नुयादिति संशरदोषस्स्यात्। शृ हिंसायाम्। 'ऋदोरप्'। यदि तु योन्यपेक्षयाधिकच्छन्दस्कयोरुत्तरयोरभ्यस्येत तदा साम्नोऽल्पत्वादवशिष्ट ऋग्भागस्सामभागरहितत्वादनभिव्यक्त एव स्यादिति विलेशदोषः प्रसज्येत। लिश अल्पीभावे घञ्। अतस्समच्छन्दस्कास्वेवाभ्यस्तव्यम्॥

इतोऽप्येवमित्याह--

लिङ्गदर्शनाच्च॥ १९॥

---

१. इतरयोश्च. क.  २. कृत्स्नशस्साम. क.

"स्थाल्यां हि [1]सक्थ्यवधीयत इत्याहुर्यद् बृहद्गायत्रीषु क्रियते" इति श्रुतम्। बृहदाख्यं साम--"त्वामिद्धि हवामहे" इत्यस्यामृचि एकविंशदक्षरायामुत्पन्नम्। चतुर्विंशत्यक्षरासु गायत्रीषु क्रियत इत्येतत्, स्थाल्यामल्पपरिमाणायां सक्थि स्थूलम् ऊरुप्रदेशभवमांसखण्डात्मकं निधीयत इव भवति। असम्भावितमिति यावत्। तदेवं विषमच्छन्दस्कासु दोषदर्शनाल्लिङ्गादपि समच्छन्दस्कास्वेव गानम्। यद्यप्युत्तराग्रन्थे समच्छन्दस्कानामेव तृचानां क्रतुपाठक्रमेण [ पाठः, तथापि ] यत्र सूर्यस्तुदादिषु [अग्निष्टुदादिषु] ऋच आगमयितव्यास्तद्विषयमधिकरणमित्यदोषः॥

इति पञ्चमं समानच्छन्दस्कासु ऋक्षु गानाधिकरणम्॥ ५॥

६

सामवेदे च्छन्दोनाम्नि ग्रन्थे साम्नां योनय ऋचः पठिताः। उत्तराग्रन्थे त्वेकैकस्य साम्न एकैका योनिस्ततो द्वे द्वे उत्तरे ऋचौ, क्वचिदेकैका ऋक् इत्येवमृचः पठिताः। तत्र "यद्योन्यां तदुत्तरयोर्गायति" इत्यत्र भवति संशयः--किं योनिग्रन्थपठितयोरुत्तरयोरुत्तराग्रन्थपठितयोर्वेत्यनियमः? किं वा उत्तराग्रन्थपठितयोरेव? इति। अविशेषादनियमः। ततश्च योनिग्रन्थे 'अभि त्वा शूर नोनुमः" इति रथन्तरयोनिपाठापेक्षया परतो बृहद्योनेः "त्वामिद्धि हवामहे" इत्यृचः पठितत्वात् तत्र गानम्। उत्तराग्रन्थे तु रथन्तरयोनेः परतो "न त्वा वामन्य" इत्यृचः पाठात् तत्र गानमिति विकल्पः। द्वयोरपि रथन्तरयोन्यपेक्षया उत्तरत्वात्। उत्तराशब्दस्य च सम्बन्धिशब्दत्वादिति प्राप्ते, सिद्धान्तयति--

**नैमित्तिकन्तूत्तरात्वमानन्तर्यात् प्रतीयेत ॥२०॥**

तुरवधारणे। उत्तरात्वम्--उत्तराग्रन्थपठितासूत्तरासु नैमित्तिकं संज्ञानिमित्तमेव प्रतीयेत। कुतः? आनन्तर्यात्--बोधजनने प्रतिसम्बन्ध्यपेक्षाकृतव्यवधानाभावात्। संज्ञाशब्दस्यान्यानपेक्षवृत्तित्वात्। सम्बन्धिशब्दस्य च सम्बन्ध्यपेक्षवृत्तित्वात्। न चोत्तराग्रन्थेऽपि सम्बन्धिशब्दतयैव प्रयोगोपपत्तेः पृथक् शक्तिकल्पने मानाभाव इति वाच्यम्, "उत्तरा अधीते" इत्यादौ प्रतिसम्बन्ध्यनुपादानेनानन्यथासिद्धप्रयोगबलात् संज्ञारूपेण पृथक् शक्तिकल्पनावश्यम्भावात्। तस्मादुत्तराग्रन्थाधीतास्वेव गातव्यम्। एवञ्च उत्तराग्रन्थशब्दस्साधुर्भवति। सम्बन्धिशब्दत्वे

१. सक्त्ववधीयते, क.

हि 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति स्यात्। संज्ञाशब्दत्वे तु सर्वनामत्वाभावान्न पुंवद्भावः, 'संज्ञोपसर्जनीभूता न सर्वादयः' इति हि वैयाकरणमर्यादा ॥

इतोऽप्येवमित्याह–

**ऐकार्थ्याच्च तदभ्यासः ॥२१॥**

उत्तराग्रन्थे तावत् प्रायेण तिस्रस्तिस्र ऋचस्समानदेवत्यास्समच्छन्दस्काश्च पठिताः। छन्दोनाम्नि तु योनयः प्रायेण भिन्नदेवत्या भिन्नच्छन्दस्काश्च पठिताः। तत्रैकदेवत्यत्वलाभात् समच्छन्दोलाभाच्चोत्तराग्रन्थपठितास्वेव गानं युक्तम् ॥

इति षष्ठे संशरविलेशाधिकरणे प्रथमं वर्णकम् ॥६॥

## द्वितीयं वर्णकम्

'तदभ्यासः समासु स्यात्' इत्यादि चतुस्सूत्री अन्यथापि योजिता भाष्यादौ। तद्यथा-अस्ति द्वादशाहे पृष्ठ्यषडहः। तत्रास्ति चतुर्थमहः–"एकविंशष्षोडशी वैराजसामा" इति। एकविंशस्तोमको वैराजपृष्ठक इत्यर्थः। "त्रैशोकं ब्रह्मसाम" इति, "अतिजगतीषु स्तुवते" इति च। उत्तराग्रन्थे च [1]त्रैशोकाख्यसाम्नो "विश्वाः पृतनाः" इत्यतिजगतीच्छन्दस्कां योनिं पठित्वा "नेमिं नमन्ति चक्षसा" इति द्वे बृहतीच्छन्दस्के ऋचौ[2] पठिते। तदेवंविधे तृचे त्रैशोकसाम्नि संशयः–किमन्ये द्वे अतिजगत्यावानीय समच्छन्दस्कासु गानम्? उत पठिते बृहत्यावादाय विषमच्छन्दस्कासु? इति। तत्र पूर्वपक्षयति–

**तदभ्यासस्समासु स्यात् ॥**

बृहत्योरतिजगत्यपेक्षया न्यूनत्वात् तत्रातिजगत्यामुत्पन्नस्य त्रैशोकस्य समावेशे उक्तरीत्या संशरदोषप्रसङ्गादन्ये अतिजगत्यावादाय समास्वेव तत्समावेशः। भाष्यादौ संशरविलेशदोषपरिहारायेति विलेशग्रहणं सम्पातायातम्, बृहत्योरतिजगत्यपेक्षया न्यूनत्वेन विलेशस्यासम्भवात् ॥

इतोऽपि समास्वेवेत्याह–

**लिङ्गदर्शनाच्च ॥**

---

१. त्रैशोकसाम्नः. क. २. ऋचौ नास्ति. क.

उत्तरयोर्बृहत्योर्गानेऽतिजगतीष्विति बहुवचनानुपपत्तिः। अतो बहुवचनादपि लिङ्गादन्येऽतिजगत्यावागमय्य समास्वेव गानम्। बृहत्योः पाठस्तु वाचस्तोमाद्यर्थो भविष्यति। अतिजगतीष्विति बहुवचनबलेन पाठोत्कर्षस्य न्याय्यत्वात्॥

अथ सिद्धान्तयति-

**नैमित्तिकन्तूत्तरात्वमानन्तर्यात् प्रतीयेत॥**

तुरवधारणे। पाठनिमित्तमेवोत्तरात्वं प्रत्येतव्यम्। पठित एवोत्तरे बृहत्यावादाय विषमास्वेव गानमिति यावत्। कुतः? आनन्तर्यात्-पाठक्रमात्॥

ननु बृहत्योः पाठोऽतिजगतीष्विति[1] बहुवचनाद् बाध्यताम्, तत्राह-

**ऐकार्थ्याच्च तदभ्यासः॥**

चो ह्यर्थे। एकशब्दोऽन्यवाची। 'एके मुख्यान्यकेवलाः' इत्यमरः। "एकविंशष्षोडशी" इति षोडशिनोऽह्नः सर्वस्तोत्राणामेकविंशतिकृत्वोऽभ्यासः श्रुतः[2]। तत्र तिसृष्वृक्षु प्रत्यृचं सप्तकृत्वोऽभ्यासादेकस्या अप्यतिजगत्या अभ्यासकृतं बहुत्वमादाय बहुवचनमुपपद्यत इति यावत्। एवञ्च बृहत्योः प्रकृतक्रतावेव समावेशात् प्रकरणानुग्रहश्च। (ततश्च "यद्योन्यां तदुत्तरयोर्गायति" इति वचनबलात् प्रकरणाच्चातिजगत्यन्तरानयनमनादृत्य बृहत्यावादाय संशरदोषमपि सोढ्वा विषमास्वेव गानम्॥)

इति भाष्यमतेन त्रैशोकस्य बृहत्योरेव गानाधिकरणम्॥६॥

७

"अभि त्वा शूर" इत्यस्यामृचि बृहत्यां रथन्तरमुत्पन्नम्। "न, त्वा वामन्ये" इति तस्योत्तरा पङ्क्तिः। "त्वामिद्धि हवामहे"[3]इत्यस्यामृचि बृहत्यां बृहदुत्पन्नम्। "स त्वं नश्चित्र वज्रहस्त' इति तस्योत्तरा पङ्क्तिः। तत्र श्रूयते-"न वै बृहद्रथन्तरमेकच्छन्दस्कं यत्तयोः पूर्वा बृहती ककुभावुत्तरे" इति। बृहच्च रथन्तरञ्च साम एकच्छन्दस्कासु गेयं न भवति। यतः, तयोः साम्नोः पूर्वा ऋग् बृहतीच्छन्दस्का, उत्तरे तु ऋचौ ककुप्च्छन्दस्के इत्यर्थः। तत्र किं पठितामेकैकामपि पङ्क्तिं परित्यज्य द्वयोर्द्वयोः ककुभोरानयनम्? उत पठिते एव पङ्क्ती बृहतीभ्यां प्रग्रथ्य ककुप्च्छन्दस्के

---

१. जगतीष्विति वचनात्. क.
()कपुस्तके भागोऽयं स्खलितः.
२. अभ्यासश्रुतेः. क, ख.
३. इत्यस्यां बृहत्यामृच्युत्पन्नं बृहत् क, ख.

कार्ये; यथा-"अभि त्वा शूर नोनुमो दुग्धा इव धेनवः। ईशानमस्य जगतस्स्वर्दृश-मीशानमिन्द्र तस्थुषः" इति बृहत्यां [1]प्रथमतो रथन्तरं गेयम्। सा तावदेका स्तोत्रीया। ततः "ईशानमिन्द्र तस्थुषः" इति पादं पुनरादाय 'न त्वावामन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते" इत्युत्तरस्या अर्धेन सह गातव्यम्। सैषा त्रिपदा अष्टाविंश-त्यक्षरा ककुब् द्वितीया स्तोत्रीया। ततः "न जातो न जनिष्यते" इति पादं पुनरुपादाय "अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे" इत्युत्तरस्या अवशिष्टार्धेन सहा-परा ककुप् तृतीया स्तोत्रीया। एवं बृहत्यपि योज्यम्? इति संशयः। तत्रान्यासामेव ककुभामानयनमिति ब्रूमः। गायत्र्यादिशब्दानां हि चतुर्विंशत्यादिसङ्ख्यामात्रवाचित्वं निराकृत्य सङ्ख्याविशिष्टाक्षरसमूहविशेषवाचित्वमष्टमे [2]व्यवस्थापितम् ()। ततश्च प्रग्रथनेन ककुप्सम्पत्तेरक्षरसङ्ख्यामात्रेण गौणत्वापत्तेरन्यासामेव ककुभामानयनमिति प्राप्ते, सिद्धान्तयति-

**प्रागाथिकन्तु स्वे प्रगाथे ॥२२॥**

तुरवधारणे। प्रकर्षेण गानं यस्मिन्स प्रगाथः। प्रकर्षश्चोक्तरीत्या पुनरुपादा-नात्मकप्रग्रथनरूपः। प्रगाथयोः ककुभोर्भवं प्रागाथिकं गानम्। पठितयोरेव पङ्क्त्योः प्रग्रथनेन ककुप्त्वं सम्पाद्य तत्र गानं कर्तव्यमिति यावत्। 'काकुभः प्रगाथः' इति स्मरणात्। ककुप्त्वेन प्रग्रथ्य गानमित्यर्थः। प्रग्रथनेन ककुभस्सम्पाद्या इति यावत्। एवञ्च स्वे-स्वीयप्रकरणस्थे उत्तराग्रन्थपठिते तृचे गीतं भवति। ककुबन्तरानयने तु पङ्क्तिपाठस्य वाचस्तोमादावुत्कर्षस्स्यात्। ननु ककुबन्तरानयनेऽपि प्रग्रथ्य गानसम्भवात् "काकुभः प्रगाथः" इत्यविरुद्धमित्यत आह- प्रगाथ इति। पठितयो-रेव (पङ्क्त्योः प्रग्रथने सत्येव प्रगाथे कृतं भवति। ककुबन्तरेषु बृहत्याः प्रग्रथने ककुप्त्वस्यैव व्याघातात्, अक्षराधिक्यप्रसङ्गात्। प्रग्रथने सति प्रगाथसमाख्याते गानं) भवतीति समाख्यानुग्रहश्चेत्यप्यर्थः। तस्मात्पठितयोरेव पङ्क्त्योः ककुप्त्व-सम्पादनमिति ॥

इतोऽप्येवमित्याह-

**लिङ्गदर्शनाव्यतिरेकाच्च ॥२३॥**

---

१. प्रथमं. क. २. स्थापितं. क.

()कपुस्तके भागोऽयं स्खलितः

"एषा वै बृहती प्रतिष्ठिता यत्पादं पुनरारभते" इति बृहतीपादस्य पुनरादानानुवादात्मकलिङ्गदर्शनेनाव्यतिरेकात् प्रग्रथनावगमादपि नान्यानयनम्। ऋगन्तरानयने बृहतीपादपुनरादानानुवादासम्भवात्। व्यतिरेकः-असंसर्गः, स न भवत्यव्यतिरेकः। प्रग्रथनमिति यावत्॥

इति सप्तमे प्रगाथाधिकरणे प्रथमं वर्णकम् ॥७॥

## द्वितीयं वर्णकम्

विषयान्तरेऽप्येतदधिकरणं योजितं भाष्ये। तद्यथा-माध्यन्दिनपवमाने "रौरवयौधाजये सामनी बार्हते तृचे भवतः" इति श्रुतम्। बार्हते-बृहतीच्छन्दस्के। तत्रोत्तराग्रन्थे तावत् "पुनानस्सोम धारय" इत्येषा बृहती पूर्वा पठिता। "दुहान ऊधर्दिव्यम्" इत्येषा द्वितीया विष्टारपङ्क्तिः। तामपनीय तस्यास्स्थाने बृहत्यावागमयितव्ये। "बार्हते तृचे भवतः" इति विशिष्य तृचशब्दश्रवणादिति प्राप्ते, आह-

**प्रागाथिकन्तु स्वे प्रगाथे ॥**

'बार्हतः प्रगाथः' इति स्मरणात् प्रग्रथनेनापि तृचसम्पादनात् प्रग्रथ्य गातव्यमित्यादि पूर्ववद् व्याख्येयम्॥

इतोऽप्येवमित्याह-

**लिङ्गदर्शनाव्यतिरेकाच्च ॥**

"षष्टिस्त्रिष्टभो माध्यन्दिनं सवनम्' इति श्रुतम्। माध्यन्दिनसवनशब्देन माध्यन्दिनसवनावान्तरप्रकरणे उत्तराग्रन्थपठिता ऋचो लक्ष्यन्ते। ताष्षष्टिसंङ्ख्याका इत्यर्थः। यदि ह्यत्र बृहत्यावन्ये आनीयेयातां तत्साम्याच्च रथन्तरादिष्वप्येवञ्जातीयकेषु अन्याः ककुबाद्याः आनीयेरन्। ततश्च उत्तराग्रन्थेऽपठिताभिष्षष्टिसङ्ख्यापूरणप्रसङ्गात्। तत्पठिताभिरेव षष्टिसङ्ख्यानुवादो विरुध्येत। अतो लिङ्गदर्शनेनानेनाव्यतिरेकात् प्रग्रथनावगमादपि नान्यानयनम्।

वस्तुतस्तु पूर्वोदाहरणादिदमुदाहरणं नातिरिच्यते। किञ्च "षष्टिस्त्रिष्टभो माध्यन्दिनं सवनम्" इत्यत्र माध्यन्दिनसवनशब्देन माध्यन्दिनसवनीयाः स्तोत्रीया एव लक्ष्यन्ताम्, न तूत्तराग्रन्थपठिता इत्यपि, तत्र विशेषणगौरवात्। ततश्चान्यासामागमनेऽपि षष्टिसङ्ख्याया अविरोधान्नेदं लिङ्गदर्शनम्॥

इति सप्तमे प्रगाथाधिकरणे द्वितीयं वर्णकम्॥

## तृतीयं वर्णकम्

अन्यत्रापि योजितं भाष्ये। तद्यथा—आर्भवपवमाने "श्यावाश्वान्धीगवे सामनी आनुष्टुभे तृचे भवतः" इति श्रुतम्। उत्तराग्रन्थे च तयोस्साम्नोः [ आश्रये ] तृचे "पुरोजिती वो अन्धसः" इत्यनुष्टुप्पूर्वा पठिता। "यो धारया पावकया" इति द्वितीया गायत्री। "तन्दुरोषमाभी नरः" इति तृतीया गायत्री। तत्रापि समासु गातुमनुष्टुभावन्ये आगमयितव्ये इति प्राप्ते, आह—

### प्रागाथिकन्तु स्वे प्रगाथे ॥

"आनुष्टुभः प्रगाथः" इति स्मरणात् प्रग्रथनेन तृचं कृत्वा अनुष्टुप्कारं गातव्यमित्यादि पूर्ववत् ॥

इतोऽप्येवमित्याह—

### लिङ्गदर्शनाव्यतिरेकाच्च ॥

"चतुर्विंशतिर्जगत्यस्तृतीयसवनमेका च ककुप्" इति श्रुतम्। तृतीयसवनीयानामुत्तराग्रन्थपठितानामृचां जगती [षु] ककुभि [ च सङ्ख्या] रूपं लिङ्गं प्रग्रथन एवोपपद्यते। अनुष्टुबन्तरानयने तूत्तराग्रन्थपठिताभिरेव सङ्ख्यासम्पत्त्यभावात् तदनुपपन्नं स्यादिति। तदनुवादात्मकलिङ्गदर्शनेनाव्यतिरेकात् प्रग्रथनावगमान्नान्यानयनम्। वस्तुतस्त्विदमपि वर्णकं पूर्ववर्णकवत् गतप्रायमेव ॥

इति सप्तमे प्रगाथाधिकरणे तृतीयं वर्णकम् ॥

## चतुर्थं वर्णकम्

अन्यत्रापि योजितं भाष्ये। तद्यथा—अस्ति गवामनयनं संवत्सरसुत्याकम्। तत्राभीवर्ताख्यं ब्रह्मसाम प्रकृत्यामनन्ति "चतुरुशतमैन्द्रा बार्हताः प्रगाथाः" इति। चतुरुत्तरशतसङ्ख्याका इन्द्रदेवत्या बृहतीच्छन्दस्काः प्रगाथा इत्यर्थः। किमिह प्रथमे तृचे गानं कृत्वा तदन्त्यामृचं पुनरादाय द्वे अन्ये ऋचौ गृहीत्वा तृचं कृत्वा तत्र गानं कृत्वा पुनस्तदन्त्यामृचदादाय (द्वे अन्ये ऋचौ गृहीत्वा तृचं कृत्वा) गान-

() कपुस्तके चिन्हान्तर्गतो भागः स्खलितः.

मित्येवं रीत्या ऋक्प्रग्रथनेन तृचेषु गानम्? उत पूर्वपूर्वतृचे गानं कृत्वा तत्तदन्त्यपादं पुनरादायोत्तरे द्वे द्वे ऋचौ प्रग्रथ्य तृचान् कृत्वा गानम्? इत्येवं [1]पादप्रग्रथनेन गानम्? इति संशये, "एकं साम तृचे क्रियते" इति प्राकृतत्रित्वसङ्ख्यायाः पृथक्त्वनिवेशिन्याश्चोदकप्राप्तायाः पादप्रग्रथने सत्यसामञ्जस्यं स्यात्। "बार्हताः प्रगाथाः" इति प्रगाथशब्दस्य ऋक्प्रग्रथनेऽप्युपपत्तेः न पादप्रग्रथनमिति प्राप्ते, आह—

**प्रागाथिकन्तु स्वे प्रगाथे ॥**

पादप्रग्रथनेन प्रगाथीकृते तृचे गानं प्रागाथिकं तदैव भवति, न तु ऋक्प्रग्रथनेन। एवं हि स्वकीये प्रगाथे गानं कृतं भवति। अभीवर्ताख्यब्रह्मसाम्नो हि पादप्रग्रथनेनैव प्रगाथीकृतस्तृचः स्वकीयः, न त्वृक्प्रग्रथनेन कृतः प्रगाथः, "अन्या अन्या ऋचो भवन्ति" इत्येकस्यामृचि पुनर्गानप्रतिषेधात् ॥

ननु पादप्रग्रथनेऽप्ययं दोषस्समान इत्यत आह—

**लिङ्गदर्शनाव्यतिरेकाच्च ॥**

पच्छप्रग्रथने पाद एव पुनर्गानम्, न तु कृत्स्नायामृचीत्यृगन्यत्वमुपपद्यत इति ऋगन्यत्वविध्यात्मकलिङ्गदर्शनस्याव्यतिरेकात्–अविरोधादित्यर्थः। भाष्ये त्वन्यथैवेदं सूत्रं व्याख्यातम्, तत् क्लिष्टत्वादुपेक्षितम्। किञ्च भाष्ये पूर्ववर्णकेषु 'प्रागाथिकन्तु' इति 'स्वे' इति 'प्रगाथे' इति च पृथगुपात्तम्, तत्तु व्याख्यासौकर्याय। अत एवास्मिन्वर्णके एकधैवोपात्तमिति मन्तव्यम् ॥

इति सप्तमे प्रगाथाधिकरणे चतुर्थं वर्णकम् ॥

८

एकैकस्यामेव रथन्तरादिगीतौ कौथुम-जैमिनीय-लाट्यायनीय- सात्यमुग्रीय-राणायनीयादिशाखासु विविधाः प्रकारा दृश्यन्ते। तेषां समुच्चयस्सर्वशाखाप्रत्ययत्वाद् एकैकं प्रकारमाश्रित्य पुनः पुनर्गीतेः कर्तुं शक्यत्वाच्चेति प्राप्त आह—

***एकार्थत्वाद्विकल्पस्स्यात् ॥ २४ ॥**

---

१. पाद. नास्ति. क.

* अर्थैकत्वात्.

विकल्प एव तेषां प्रकाराणां स्यात्। अर्थैकत्वात्, एकैकं प्रकारमाश्रित्य पुनः पुनः गीतेरशक्यत्वाच्च। गीतिः प्रकारैर्न साध्यते, एकेन च प्रकारेण गीतिनिवृत्तेः प्रत्यक्षत्वात्। गुणानुरोधेन च प्रधानावृत्तेरन्यायत्वात् 'एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिस्स्यात् प्रधानस्य' इति द्वादशिकाधिकरणन्यायेन व्रीहियववद्विकल्पस्सिद्ध एव। सामप्रसाङ्गात्तु पुनस्स्मार्यते ॥

इत्यष्टमं शाखाभेदेन गीतीनां विकल्पाधिकरणम् ॥८॥

९

सन्ति प्रकृतिसोमे द्वादश [1]बहिष्पवमानादीनि स्तोत्राणि। कस्मिंश्चित्तु कर्मविशेषेऽप्राकृतानि स्तोत्राण्यधिकृत्यामनन्ति—"यदृचा स्तुवते तदसुरा अन्ववायन्, यत्साम्ना स्तुवते तदसुरा नान्ववायन्, य एवं विद्वान् साम्ना स्तुवीत" इति। तत्र किमप्रगीतया ऋचा साम्ना वा स्तोतव्यमिति विकल्पः? उत साम्नैव? इति संशये, पूर्वपक्षयति—

**अर्थैकत्वाद्विकल्पस्स्यात् ऋक्सामयोस्तत्परत्वात् ॥ २९ ॥**

ऋचा साम्ना वा स्तोतव्यमिति ऋक्सामयोर्विकल्पस्स्यात्। कुतः? अर्थैकत्वात्—एकैव हि गुणाभिधानात्मिका स्तुतिः ऋचा साम्ना च साध्या। ऋचा साक्षात्, साम्ना तु ऋगभिव्यक्तिद्वारा। तत्रान्यतरेण स्तुतिनिर्वृत्तेः प्रत्यक्षत्वात् 'एकार्थास्तु विकल्पेरन्' इति द्वादशिकाधिकरणन्यायेन विकल्पः। न च प्रगीतमन्त्रसाध्यगुणाभिधानस्यैव स्तौतिवाच्यत्वात् कथं तत्राप्रगीताया ऋचस्साधनत्वमिति शङ्क्यम्, [2]स्तौतेरत्र गुणाभिधानमात्रवाचित्वाश्रयणात्। ननु विध्वंसकासुरागमनेन ऋङ् निन्द्यते। साम तु तदनागमनेन स्तूयते। स्तुवीतेति विधीयते चेति कथमृचा विकल्पः? तत्राह—तत्परत्वादिति। वाक्यस्य ऋक्सामोभयविधिपरत्वात्। "य एवं विद्वान् साम्ना स्तुवीत" इति हि न विधिः, यच्छब्दोपबन्धात्। स्तुत्या तु विधिः कल्पनीयः। अविशेषादुभयत्रापि कल्प्यते। तत्र च ऋचा स्तवने विध्वंसका अप्यसुराः वशीकृतास्सन्तो गच्छन्ति। साम त्वनीदृगित्येवं सामनिन्दासहितऋक्स्तुत्या ऋग्विधिः कल्प्यते। ऋचा स्तवने विध्वंसका असुरा आगच्छन्ति साम त्वनीदृगित्येवमृङ्निन्दासहितसामस्तुत्या सामविधिः कल्प्यत इत्यविरोधः। तस्माद्विकल्पः ॥

---

१. बहिष्पवमानादि. ग. २. स्तुतेः ग.

अथ सिद्धान्तयति—

**वचनाद्विनियोगस्स्यात् ॥ २६ ॥**

साम्न एवात्र विनियोगविधिस्स्यात् । कुतः ? वचनात्—साम्न एव प्रशंसावगमात् । असुरा हि विध्वंसकत्वेनैव प्रसिद्धाः । तदागमनेन च ऋचो निन्दैव स्वरसतो गम्यते । साम्नस्तु विस्पष्टमेवोपसंहारे प्रशंसा गम्यते । स्तुतिद्वयोन्नयनेन विधिद्वयकल्पनायां वाक्यभेदश्च, अदृष्टद्वयञ्च कल्प्यम् । तस्मादृङ्निन्दासहितसामस्तुत्या सामैव विधीयत इति साम्नैव स्तोतव्यं न त्वृचा ॥

इति नवमे साम्नैव स्तोतव्यत्वाधिकरणे प्रथमं वर्णकम् ॥

## द्वितीयं वर्णकम्

सूत्रद्वयमिदमन्यत्रापि योजितमाकरे । तद्यथा–सामवेदे कस्मिंश्चित्कर्मविशेषे "अयं सहस्रमानवः" इत्यृक्पठिता । तदाधारकं साम च पठितम् । तत्र श्रूयते– "अयं सहस्रमानव इत्येतयाहवनीयमुपतिष्ठते" इति । तत्र किमप्रगीतया प्रगीतया वेति विकल्पः ? उत प्रगीतयैव ? इति संशये, पूर्वपक्षयति—

**अर्थैकत्वाद्विकल्पस्स्यात् ऋक्सामयोस्तत्परत्वात् ॥**

ऋक्सामयोः प्रगीताप्रगीतयोर्विकल्पस्स्यात् । कुतः ? अर्थैकत्वात्–एकशब्दस्साधारणपर्यायः । यथा प्रयाजादिकमेकं प्रधानानामिति साधारणमिति गम्यते । प्रतीकग्रहणस्यार्थयोः प्रगीताप्रगीतयोः एकत्वात् साधारणतया प्रगीताप्रगीतोभयविधिपरत्वात् ॥

अथ सिद्धान्तयति—

**वचनाद्विनियोगस्स्यात् ॥**

प्रगीताया एव विधिस्स्यात् । 'एतया' इत्यनेन अनन्यार्थायाः प्रगीताया एवाभिधानात् । [1]संहिताग्रन्थे हि अप्रगीतायाः पाठः प्रगाणार्थ एव । तत्पाठस्य ऋक्स्वरूपावधारणद्वारा गीतिनिर्वर्तकत्वात् । न ह्यनवगतस्वरूपायामृचि सुखं गानं

---

१. संहिताग्रन्थेभ्यः प्रगीतायाः, क.

भवति। प्रगीता त्वनन्यार्था प्रयोजनमपेक्षमाणा प्रयोगवचनेन गृह्यत इति प्रगीताया एव विनियोगः न त्वप्रगीतायाः ॥

इति नवमाधिकरणे द्वितीयं वर्णकम् ॥९॥

## तृतीयं वर्णकम्

वर्णकान्तरमपि वर्णितमाकरे। तद्यथा कर्मणि प्रयुज्यमानेषु मन्त्रेषु किं समाम्नायसिद्धं चातुस्वर्यम्? उत 'तानो यज्ञकर्मणि' इत्यैकश्रुत्यम्? इति संशये, पूर्वपक्षयति—

**अर्थैकत्वाद्विकल्पस्स्यात् ऋक्सामयोस्तत्परत्वात् ॥**

ऋक्सामयोरिति चातुस्वर्यैकश्रुत्यपरम्, चातुस्वर्यस्यैकश्रुत्यस्य च तत्परत्वात् अक्षराभिव्यक्तिप्रधानकतया अर्थैकत्वाद् विकल्पः। तयोर्हि अक्षराभिव्यक्तिरेकमेव कार्यम्, अन्यतरेणैव तन्निर्वृत्तेः प्रत्यक्षत्वाद्विकल्पः। 'तानो यज्ञकर्मणि' इति स्मृतिस्तु समाम्नायसिद्धस्वरविरोधादप्रमाणम् ॥

अथ सिद्धान्तयति—

**वचनाद्विनियोगस्स्यात् ॥**

'तानो यज्ञकर्मणि' इति [1]स्मृतिवचनादैकश्रुत्यस्यैव कर्मसु विनियोगः। न हि स्वरविशिष्टतया मन्त्राणां कर्माङ्गत्वबोधिका श्रुतिरस्ति। स्वराध्ययनबलात् तथा कल्प्यम्। न्यायश्च स्मृतितो दुर्बल इत्यैकश्रुत्यमेव। चातुस्वर्याध्ययनन्तु यज्ञादन्यत्र पारायणादौ चरितार्थं भविष्यतीति।

तदिदं भाष्याद्युत्प्रेक्षितं वर्णकमुपेक्ष्यम्। 'भाषास्वरोपदेशादैरवत्प्रवचनप्रतिषेधस्स्यात्' इति द्वादशिकतृतीयपादिकाधिकरणविरोधात्। तत्र मन्त्रसमाम्नायपठितानां मन्त्राणां कर्मणि चातुस्स्वर्यं ब्राह्मणमात्रपठितानां भाषिकस्वर इति व्यवस्थापयिष्यमाणत्वात्। ऋक्सामयोरित्यस्य चातुस्स्वर्यैकश्रुत्यपरतायाः कथञ्चिदप्यसम्भवेन क्लिष्टत्वाच्च। अत्र यद्वक्तव्यं तत्तत्रैव प्रपञ्चयिष्यते ॥

इति नवमाधिकरणे तृतीयं वर्णकम् ॥९॥

---

१. स्मृति. नास्ति. क.

१०

तदेवमाम्नातादन्यदित्यारभ्य वृत्तमौपोद्घातिकं प्रासङ्गिकञ्च। अथेदानीं प्रकृतस्सामोहश्चिन्त्यते। "यद्योन्यां तदुत्तरयोर्गायति" इति श्रुतम्। किमिह योनावुत्पन्नस्य साम्न उत्तरयोरूहोऽस्ति? न वा? इति। तदर्थञ्च किं योनिवर्णवशेन गानम्? उतोत्तरावर्णवशेन? इति। यदि योनिवर्णवशेन गानम्, यथा[1] योनौ यस्मिन् प्रदेशे एकारस्य आइभावः, तस्मिन् प्रदेशे उत्तरयोरसत्यप्येकारे अन्यस्य आइभावमाश्रित्य गानमिति, तदा न भवत्यूहः, योनौ यथा साम गीतं तथैवोत्तरयोरपि गानसत्वेन विकाराभावात्। यदि तूत्तरावर्णवशेन गानम्, यथा योनौ एकारः प्रथमवर्णः, उत्तरयोस्तु एकारश्चतुर्थवर्ण इत्येवं योनौ यस्मिन् प्रदेशे एकारे सन्ध्यक्षरवशेन आइभावः, ततः प्रदेशान्तरेऽपीत्युत्तरयोरेकारे सन्ध्यक्षरवशेन आइभावमाश्रित्य गानमिति, तदा भवत्यूहः, प्रदेशान्तरे आइभावकरणेन योनिगानापेक्षया विकारसद्भावात्। तत्र योनिवर्णवशेनोत्तरयोर्गानादनूह इति पूर्वपक्षयति—

**सामप्रदेशे विकारस्तदपेक्षस्स्याच्छास्त्रकृतत्वात् ॥२७॥**

सामप्रदेशे-योनावुत्पन्नस्य साम्न ऋगन्तरेऽतिदेशे आइभावादिलक्षणो विकारः तदपेक्षः-योन्यपेक्षस्स्यात्। कुतः? शास्त्रकृतत्वात्-तदतिदेशस्य "यद्योन्याम्" इत्यादिशास्त्रकृतत्वात्। योनौ हि यादृशं सामस्वरूपमवगतम्, तादृशमेव सामस्वरूपमुत्तरयोरतिदिश्यते। ततश्च योनौ यत्प्रदेशस्थस्य एकारस्य आइभावोऽवगतः, उत्तरयोरपि तत्प्रदेशस्थस्य यस्य कस्यापि वर्णस्य स्थाने आइभावमाश्रित्य गातव्यम्। ननु 'कर्म वा विधिलक्षणम्' इत्यत्र साम्नामृग्वर्णाभिव्यञ्जकत्वं[2] स्थितम्। ततश्च योनावेकारस्य आइभावेनाभिव्यक्तिरिति वक्तव्यम्। तथा चोत्तरयोरपि यत्रैकारस्तत्रैव आइभावः कर्तव्यः, न तु [3]योनिसमानप्रदेशस्थे वर्णान्तरेऽपि। तथा सत्येकाराभिव्यक्त्यसम्भवादिति चेत्-सत्यम्; विकृतिषु[4] तावदाकाङ्क्षया चोदनासामान्येन चातिदेशः उपकारश्चाकाङ्क्षितो न पदार्थः। ततश्च यथा स[5] उपकारस्सिध्यति तथातिदेष्टव्यम्। प्रकृतिप्रधानेन च विकृतीनां चोदनासामान्यम्, न तु पदार्थविधिभिः। तथा च यथाग्नेयः कृतः तथा सौर्य इति प्रकृतिप्रधानगतः प्रकारो विकृतावतिदिश्यते, न

१. यथा नास्ति. क.
२. श्रुतम्. ग, अ.　　३. योनिसाम्नः. क.
४. विकृतीष्टिषु. क.　　५. सः. नास्ति. क.

स्वरूपेण पदार्थः। एवञ्च प्रकृतिसदृशी विकृतीष्टिः कर्तव्या। प्रकृतिश्च मन्त्रप्रकाशित-देवताका कृतेति विकृतीष्टिरपि तथा कार्या। न चोहादृते तथा कर्तुं शक्यत इति तत्र सिध्यत्यूहः। इह तु यथा योनिस्संस्कृता तथोत्तरे अपि संस्कर्तव्ये इति नैवंविधं वचनमस्ति, येनोहस्स्यात्। "यद्योन्याम" इति वचनं हि सामस्वरूपमेव योन्युत्तरा-साधारणीकृतम्। ततश्च वचनसामर्थ्याद्यस्मिन् प्रदेश एकारस्य योनौ आइभावः उत्तरयोरपि तत्प्रदेशस्थस्य वर्णस्य यस्य कस्यापि आइभावः, न त्वेकारस्यापि सतः प्रदेशान्तरस्थस्य। तथा सति वाचनिकसामस्वरूपस्यान्यथाभावप्रसङ्गात्। सामस्व-रूपस्य च तस्याविकृतस्यानुष्ठाने एकारादन्यस्य योनिसमानप्रदेशस्थस्य कस्य चिदाइ-भावेनाभिव्यक्त्यलाभेऽपि तदंशेऽदृष्टमेव द्वारमाश्रयणीयम्, वचनबलात्। 'कर्म वा विधिलक्षणम्' इति साम्न ऋगक्षराभिव्यञ्जकत्वन्तु वर्णलोपस्थले। स्तोभादौ चाक्षराभिव्यक्त्यसम्भवेन तदितरविषयत्ववद् योनिमात्रविषयतयापि सङ्कोच्यम्। तस्माद्योनिवर्णवशेनैव गानमिति नोहः॥

अथ सिद्धान्तयति—

**वर्णे तु बादरिर्यथाद्रव्यं व्यतिरेकात् ॥२८॥**

तुरवधारणे। यथाद्रव्यम्-उत्तरावर्णानुरोधेनैव। वर्णे-यत्रक्वचित्प्रदेशे विद्यमाने एकारे आइभावः, न तु योनिवर्णवशेन उत्तरयोर्योनिगतैकारसमानप्रदेशस्थस्य यस्य कस्यचिद्वर्णस्येति बादरिराचार्यो मन्यते। तदेव युक्तम्। कुतः? व्यतिरेकात्-यदि ह्येकारः अकारादिकाराच्च व्यक्त्यन्तरं भवेत् तञ्च लोपयित्वा तत्स्थाने यद्यपूर्व आइभावः क्रियेत, तदा एकारादन्यस्यापि आइभावस्स्यात्। नैवम्, न ह्येकारः अकारादिकाराच्च व्यक्त्यन्तरम्, किन्तु तावुभौ वर्णौ संश्लिष्टौ एभावमापद्येते। तयोश्च संश्लिष्टयोर्योनौ गीत्या आइभावेन विशेषात्मा व्यतिरेकः क्रियते। तथा च उत्तर-योरपि यत्रक्वचित्प्रदेशे स्थितस्य[1] एकारस्यैव आइभावः, न तु वर्णान्तरस्य योनिसमानप्रदेशस्थस्य। एवञ्च "यद्योन्यां तदुत्तरयोः" इति समञ्जसं भवति। योनौ [2]ह्येकारस्य विश्लेषाख्यो गुणः कृतः, न त्वेकारलोपेनापूर्ववर्णागमः। उत्तरास्वपि तथैव कर्तव्यम्, अन्यथा वैरूप्यप्रसङ्गात्। व्यतिरेकादित्यस्य वैरूप्यप्रसङ्गादित्यप्यर्थः।

---

१. प्रदेशस्थस्य. क.　　२. हि. नास्ति. क.

यदि[1] तु महाभाष्यरीत्या एकारो व्यक्त्यन्तरमेव, न तु संश्लिष्टवर्णद्वयात्मकम्, तदैवं व्याख्येयम्-यद्युत्तरयोर्यत्र क्वचित्प्रदेशे एकारस्य आइभावस्स्यात्, न तु योनिसमानप्रदेशस्थवर्णान्तरस्यैव; तदा अक्षराभिव्यक्त्या साम्नस्तुतिसाधनत्वं दृष्टविधयोपपद्येत, अन्यथादृष्टार्थत्वापातः। सम्भवति च दृष्टे नादृष्टकल्पना युज्यते। व्यतिरेकादित्यस्य दृष्टार्थत्वबाधाभावादित्यर्थः। तथा च यद्योन्यामिति शास्त्रस्य दृष्टार्थत्वाय[2] यथा योनिस्साम्नाभिव्यक्ता, तथोत्तरेऽप्यव्यञ्जनीये इत्युपकारातिदेशकत्वमेव वक्तव्यम्। अस्तु वा यद्योन्यामिति सामस्वरूपातिदेशः, तथापि न ऋक्स्वरूपमात्रे साम्नः पर्यवसानम्, किन्तु तद्द्वारा 'स्तोत्रे स्तोत्रीयम्' इति वचनात् स्तोत्रसाधनता चाक्षराभिव्यक्तिद्वारैवेति सिध्यत्येवोहः। न चोत्तरयोर्यत्र कचित् प्रदेशे एकारस्य आइभावाश्रयणे[3] योनौ क्लृप्तः क्रमो बाध्यतामिति वाच्यम्, प्रधानभूतऋगक्षरसंस्कारानुरोधेनाङ्गभूतक्रमबाधस्य न्याय्यत्वात्। तस्मादुत्तरावर्णवशेनैव गानमिति भवत्यूहः॥

इति दशमं योनिसाम्न उत्तरावर्णवशेन गानाधिकरणम् ॥१०॥

११

"यद्योन्यां तदुत्तरयोर्गायति" इत्यत्र स्तोभानामतिदेशोऽस्ति? न वा? इति संशये, पूर्वपक्षयति—

**स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् ॥२९॥**

स्तोभस्येति सामान्याभिप्रायमेकवचनम्। योनावुत्पन्नस्य साम्नः द्रव्यान्तरे ऋगन्तरेऽतिदेशविधौ हुंफडादिस्तोभानामतिदेशनिवृत्तिमेके आचार्या मन्यन्ते। गीत्याख्यं हि सामैवात्रातिदिश्यते, गायतिशब्दात्, न तु स्तोभाः। तेषां गीतिशब्दवाच्यत्वाभावात्। स्तोभानामृगक्षराभिव्यक्तावनुपयोगाच्च। ऋगक्षराभिव्यक्तिरूपोपकारमुखेनैव सामातिदेशस्य पूर्वाधिकरणे स्थितत्वात्। ऋग्वत् यथा योन्यक्षराणामणीतित्वादृगक्षरानभिव्यञ्जकत्वाच्च निवृत्तिस्तद्वत्॥

---

१. यदि तु. नास्ति. ग.

२. दृष्टार्थत्वात्. ग.

३. योन्यां गाने. ग.

अथ सिद्धान्तयति—

**सर्वातिदेशात्तु सामान्याल्लोकवद्विकारस्स्यात् ॥३०॥**

तुरवधारणे। स्तोभानामपि विकारः अतिदेशस्स्यादेव। कुतः ? सर्वातिदेशात्। "यद्योन्यां तदुत्तरयोर्गायति" इति गीतेः स्तोभानाञ्चातिदेशात्। यद्यपि स्तोभा न गीतिशब्दवाच्याः, नाप्यृगक्षराण्यभिव्यञ्जयन्ति, तथापि तेषां गीत्यङ्गतया प्रधानभूतगीत्यतिदेशादेवातिदेशो भवति। रथन्तरादिगीतिर्हि [1]ऋगक्षराभिव्यक्त्यर्थं ऋगपेक्षयापि दीर्घकाला। सा च कैश्चिदंशैः ऋगक्षराण्याश्रयति। अवशिष्टतदंशस्तु स्तोभाक्षराण्याश्रयति। ततश्च स्तोभानां गीतिपरिपूरकतया तदङ्गत्वाद्भवति गीत्यतिदेशे तदतिदेशः। ऋगक्षराणान्तु सामापेक्षया प्रधानत्वान्न सामातिदेशेनातिदेश इति वैषम्यम्। यत्तूक्तमृगक्षराभिव्यक्तिरूपोपकारमुखेनैव साम्नोऽतिदेशात्, स्तोभानाञ्च ऋगक्षराभिव्यक्तावनुप्रयोगान्नातिदेश इति, तत्राह—सामान्यादिति। योन्युत्पन्नसामसादृश्यादित्यर्थः। योनौ हि साम ऋगक्षराभिव्यञ्जकांशेन स्तुतौ दृष्टविधयोपाकरोति। स्तोभाक्षराभिव्यञ्जकांशेन त्वदृष्टविधयोपकरोतीति क्लृप्तम्। तद्यदि उत्तरयोस्स्तोभा नातिदृश्येरन्, तर्हि तन्निवृत्त्या सामांशस्यानतिदेशस्स्यात्। ततश्च तत्साध्यादृष्टवैकल्येन स्तुतेर्वैगुण्यं प्रसज्येत। ततश्च ऋगक्षरानभिव्यञ्जकस्यापि स्तोभांशस्यादृष्टरूपस्त्युपकारार्थमतिदेशे सिद्धे, तन्निर्वर्तकतया स्तोभानामप्यतिदेश आवश्यकः। ननु ऋगक्षराभिव्यञ्जकसामाख्यगीतिमार्चिकपदैरनन्वितास्स्तोभाः कथं पूरयेयुः ? तत्राह—लोकवदिति। लोके हि गद्यपद्यादिगीतं तदनन्विता अनर्थका अपि शब्दाः पूरयन्तो दृश्यन्ते, तद्वदत्रापि ॥

इतोऽप्येवमित्याह—

**अन्वयश्चापि दर्शयति ॥३१॥**

क्वचिद् वाक्यशेषे "यत्रार्चिकानि पदानि निवर्तन्ते स्तोभा गेष्णाश्चानुयान्ति" इति श्रुतम्। गेष्णाः गेयाः स्तोभा अनुवर्तन्ते न त्वृगक्षराणीत्यर्थः। अतोऽपि स्तोभा [न] ? अतिदिश्यन्ते ॥

---

१. ऋगक्षराभिव्यक्त्यर्थत्वात्. क.

अत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**निवृत्तिर्वार्थलोपात् स्यात् ॥३२॥**

स्तोभानामुत्तरयोर्निवृत्तिस्स्यात्-नातिदेशः। कुतः? अर्थलोपात्-कचिदृगर्थेऽन्वयासम्भवात्। ज्योतिष्टोमे हि "अग्निं होतारं मन्ये दास्वन्तम्" इत्याग्नेय्यामृचि अवभृथसाम समाम्नातम्। तस्मिंश्च सामनि 'अग्निष्टपति प्रतिदहति' इत्यादि स्तोभास्सन्ति। क्वचिच्च विकृतिसोमे ऐन्द्र्यामवभृथसाम विहितम्। ऐन्द्र्याञ्चाग्निष्टपतीत्यादीनां न [1]सम्भवत्येकवाक्यता। एवञ्च तत्रासम्भवात् स्तोभानामनतिदेश इति ॥

अथ सिद्धान्ती निराचष्टे—

**अन्वयो वार्थवादत्वात् ॥३३॥**

वाशब्दोऽवधारणे। स्तोभानामतिदेशस्स्यादेव। कुतः? अर्थवादत्वात्। ऋगनन्वितार्थवादत्वस्यैव बहुलं स्तोभेषूपलम्भात्। किञ्च ऋगर्थैव गीतिः। सामलक्षणगीत्यभिव्यक्तया ऋचा अर्थावगतिं साधयेदिति च पर्यवसानमिति स्थितम्। स्तोभविषयगीत्यंशश्च नान्तरीयकः, अदृष्टविधयैव स्तुतावुपकरोति च। अतोऽपि स्तोभानामृगर्थानन्वितार्थाभिधायित्वादैन्द्र्यामप्यवभृथसाम्नि अग्निष्टपतीत्यादिस्तोभानामतिदेशाविरोधादितरत्रापि तदतिदेशस्य न विरोधः ॥

इत्येकादशं स्तोभातिदेशाधिकरणम् ॥११॥

१२

अथ प्रसङ्गात्स्तोभलक्षणमाह—

**अधिकश्च विवर्णश्च जैमिनिस्तोभशब्दत्वात् ॥३४॥**

गेयवाक्ये वर्णेभ्योऽधिको वर्णः गेयवाक्याक्षरविलक्षणश्च। तादृशं वर्णं स्तोभशब्दवाच्यं जैमिनिर्मन्यते। कुतः? स्तोभशब्दत्वात्। देवदत्तो बहु स्तोभं प्रायुङ्क्तेत्यत्र प्रकृतवाक्याक्षराधिके [2]प्रकृतवाक्याक्षरविलक्षणे चाक्षरे स्तोभशब्दकत्वदर्शनात्। तद्व्यवहारदर्शनादिति यावत्। "अग्न आयाहि" इत्यृचि अग्ने

१. भवति. क. २. प्रकृतवाक्यार्थ. क.

इति पदे अकारस्य ओकारम्, एकारस्य आइभावञ्चाश्रित्य ओग्नाइ इति गीतौ ओकारेऽतिव्याप्तिवारणायाधिकमिति। तावत्युक्ते "पिबा सोमम्" इत्यृचि वैराजसाम्नि श्वाद्रीः श्वाद्रीरित्यभ्यासस्यान्यतरखण्डेऽतिव्याप्तिवारणाय विवर्णमिति। तस्य[1] गेयवाक्यवर्णत्वान्नातिव्याप्तिः। न चाभ्यासान्यतरखण्डस्यापि प्रकृतगेयवाक्याक्षरतया ततोऽधिकत्वाभावादेवातिव्याप्तिनिरासाद्विवर्णपदवैयर्थ्यं शङ्क्यम्। प्रकृतगेयवाक्यार्थाभिधानानुपयुक्तत्वस्यैवाधिकपदेन विवक्षितत्वात्॥

इति द्वादशं स्तोभलक्षणाधिकरणम् ॥१२॥

१३

तदेवं मन्त्रोहस्सामोहस्संस्कारोह इति त्रिविधस्योहस्य प्राकृतदेवतादिस्थानापन्ने वैकृतदेवतादौ प्रवृत्तिः प्रपञ्चिता। इदानीं स्थानापत्तिरस्ति न वेति विचार्यते। राजसूये "बार्हस्पत्यं नैवारञ्चरुं निर्वपति, सौम्यं श्यामाकं चरुं निर्वपति, रौद्रं गावीधुकं चरुं निर्वपति" इत्यादि श्रुतम्। तत्र नीवारादीनां व्रीहिकार्यकारित्वलक्षणतत्स्थानापत्तिबोधकप्रमाणाभावाद् "व्रीहीन् प्रोक्षति" "व्रीहीनवहन्ति" इत्यादिना व्रीहिषु विहिता धर्मा नीवारादिषु[2] न प्रवृत्तिमर्हन्ति। तथा द्वादशाहे श्रुतम्—"पृष्ठ्यषडहे" संस्थिते षडहे "मध्वाशये घृतं वा" इति। अत्रापि मध्वशनं षडहस्थानापन्नमित्यत्र न किञ्चित्प्रमाणं दृश्यते। अतो न षडहधर्मास्तत्र प्रवर्तन्ते। तथा "नैर्ऋतञ्चरुं निर्वपति नखावपूतानाम्" इति श्रुतम्। नखविदलितानामित्यर्थः। अत्रापि नखानामुलूखलमुसलस्थानापत्तौ न किञ्चित्प्रमाणं दृश्यते। अतस्तद्धर्माः प्रोक्षणादयस्तत्र[न] भवेयुः। तथा सौमिकचातुर्मास्येषु श्रुतम्—"परिधौ पशुं नियुञ्जीत" इति। अत्रापि नियोजनक्षमस्थूलदृढप्राकृतपरिधिविशिष्टनियोजनान्तरविध्युपपत्तेर्न परिधेर्यूपस्थानापत्तिरिति न परिधौ यूपधर्मास्स्युः। तथा ज्योतिष्टोमे यज्ञायज्ञीयं साम प्रकृत्य श्रुतम्—"न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम्" इति। अत्रापीरापदस्य गिरापदस्थानापत्तिं विनापि स्वातन्त्र्येण पृथग्गानार्थत्वसम्भवात् तत्र गिरापदगीतिप्रवृत्तिर्नेति प्राप्ते, आह—

**धर्मस्यार्थकृतत्वाद्द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धस्समवायात् ॥३४॥**

१. तस्य. नास्ति. क. २. निवृत्तिमर्हन्ति. क, ख.

नीवारादिद्रव्ये, मध्वशनादौ गुणे, नखविदलनादौ विकारे-संस्कारे, परिध्यादौ व्यतिक्रमे-यूपं व्यतिक्रम्य नियोजनसाधनतया श्रुते, गिरापदं प्रतिषिध्य विहिते इरापदे च चोदनानुबन्धः—चोदनेति कर्मणि ल्युट्। चोद्यमानप्रोक्षणादि-धर्मसम्बन्धस्स्यात्। कुतः? धर्मस्यार्थकृतत्वात्—प्रोक्षणादिधर्मस्य तण्डुलभावादि-द्वारकापूर्वप्रयुक्तत्वात् तादृशकार्यकारित्वलक्षणस्थानापत्तेश्च नीवारादिष्वपि सम-वायात्-सत्वात्। तथाहि-प्रत्यक्षम्, अनुमानम्, प्रत्यक्षवचनम्, प्रत्यक्षवचनावगतनि-वृत्त्यनुमितशब्दः, अभावे विधिश्चेति प्रमाणभेदात् स्थानापत्तिः पञ्चधा। तत्र बार्हस्पत्यं नैवारं चरुमिति देवतासंयोगेन चरोर्यागीयहविष्ट्वं[1] नैवारमिति विकार-तद्धितेन नीवाराणाञ्चरुप्रकृतित्वं च गम्यते। अत्र चरोः पुरोडाशस्थानापत्तौ प्रत्यक्षवचनं प्रमाणम्, चरोर्हविष्ट्वेन विधानात्। नीवाराणान्तु व्रीहिस्थानापत्तौ प्रत्यक्षमेव प्रमाणमिति विवेकः। "संस्थिते षडहे मध्वाशयेत्" इति[2] षडहे संस्थिते-निवृत्ते, तदभावे सतीति यावत्। यदभावे सति यस्य समावेशः, तत्तस्य स्थान इति गम्यते। मध्वशनं हि षडहाभावे तत्कार्यस्य साधनापेक्षायां विधीयमानं कार्यापेक्षं सत् षडहीयमेव कार्यमवलम्बते। ततश्चाभावे विधिरत्र स्थानापत्तौ बीजम्। तत्र यागाभावात् तन्निमित्तग्रहादयो[3] न प्रवर्तन्ते, ग्रहचमसाभावाच्च स्तोत्राभावः, तदभावाच्च शस्त्राभावः, "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्" "स्तुतमनुशंसति" इत्यादिवचनात्। सवनाभावाच्च न सवनीयाः। ततश्च व्रतानि नियमाश्च प्रवर्तन्ते। 'यच्चान्यदनर्थलुप्तम्' इति भाष्यम्। यद्यपि "द्वादशाहेन प्रजाकामं याजयेत्" इति [4]द्वादशदिनसुत्याकसोमयागानामेव फलार्थत्वमवगतम्, मध्वशनस्य च षडहकार्ये विधौ सति तद्विरोधस्स्यात्। अतष्षडहे समाप्ते तदङ्गत्वे-नैव मध्वशनस्य विधिरिति न तत्स्थानापत्तिः; तथाप्यभावे विधिरिति कृत्वा चिन्तेयमिति तन्त्ररत्नादौ स्थितम्। "यस्सत्रायागूर्य न यजेत स विश्वजिता यजेत" इति विश्वजितस्सत्रस्थानापन्नतया "शिखामनुप्रवपन्तः" इत्यादिसत्रधर्मास्तत्रापि वेदितव्या इत्याद्युदाहार्यम्। न च इष्ट्यभावे विहितायाः पूर्णाहुतेरपीष्टिस्थान-पन्नत्वात्[5] तद्धर्मापत्तिरिति शङ्क्यम्। न हीष्ट्यभावे पूर्णाहुतिर्विहिता, ऐतरेयादि-

१. हविष्कत्वं. क. २. इति श्रुतम्। षडहे. क, ग, अ.
३. ग्रहणादयः. क, ख. ४. सुत्यात्मक. ग.
५. स्थानापत्या. क.

ब्राह्मणेषु तत्तत्प्रायश्चित्तेष्टीर्विधाय "आहुतिं वा जुहुयादग्नये व्रतपतये स्वाहा" इत्यादि विधानात्। प्रायश्चित्तेष्टीनां स्थाने "तस्यै तस्यै देवतायै पूर्णाहुतिं जुहुयात्" इत्यादि कल्पसूत्रे साङ्गेष्टिस्थाने पूर्णाहुतिं दार्विहोमिकधर्मिकां कुर्यादित्येवं परं योज्यम्। उलूखलमुसलाभ्यां तावदवघातः। तेन तुषविमोकः क्रियते। नखैस्तु अवदलनेन तुषविमोकः क्रियते। तत्रावहननात् तुषविमोकं दृष्ट्वा अवहननत्वेनावहननार्थता-मुलूखलमुसलयोर्नाध्यवस्यति, किन्तु यया क्रियया तुषविमोचनं भवति तदर्थमुलूखल-मुसलमित्येवाध्यवस्यति। ततो नखविदलनस्यापि तुषविमोकार्थत्वमुलूखलमुसल-कार्ये नखा वर्तन्त इत्यनुमीयत इत्यनुमानमेवात्र स्थानापत्तौ प्रमाणम्। "परिधौ पशुं नियुञ्जीत" इति नियोजनकार्ये परिधेः प्रत्यक्षवचनादेव स्थानापत्तिः, विशिष्ट-विधौ गौरवात्। गिरापदकार्ये च इरापदप्रापकं प्रत्यक्षवचनं नास्ति, किन्तु गिरा-पदनिषेधात् [1]गिरापदे निवृत्ते गिरापदकार्यस्य साधनापेक्षायां विधीयमानमिरापदं कार्यापेक्षं सद् गिरापदकार्येण साधनापेक्षेण सम्बध्यते। ततश्च प्रत्यक्षवचनावगत-निवृत्त्यनुमितशब्द एवात्र स्थानापत्तौ प्रमाणम्। गिरापदनिषेधानुवादाच्च तत्स्थान एवेरापदविधिः, न तु स्वातन्त्र्येणेत्यादि पूर्वपादे व्यक्तीकृतमेव। अत्र भाट्टदीपिकायां तत्कार्यकारित्वं स्थानापत्तिर्न भवतीत्युक्त्वा अन्यथैव स्थानापत्ति-र्निरुक्ता, सा तत एवावगन्तव्या ॥

इति त्रयोदशं स्थानापत्त्यधिकरणम् ॥१३॥

१४

"परिधौ पशुं नियुञ्जीत" इत्यत्र परिधौ यूपधर्मा भवन्ति न वेति संशये, पूर्वपक्षयति--

## तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात् स्यात् ॥३५॥

परिधौ यूपधर्माणां छेदनतक्षणाष्टाश्रीकरणप्रोक्षणादीनां निवृत्तिस्स्यात्। कुतः ? तदुत्पत्तेः-परिधेः परार्थोत्पन्नत्वात्। परिधिशब्देन हि आहवनीयपरिधानार्थोत्पन्नः परिधिर्नियोजने विधीयते। तस्मिंश्च यूपधर्मा न भवन्ति। कुतः ? तत्कृतत्वात् यत्पशुनियोजनद्वारेण पश्वपूर्वाङ्गतयोत्पादितं तत्प्रयुक्तत्वाद्यूपधर्माणाम् ॥

---

१. गिरापदनिवृत्तेः. क, ख.

अथ सिद्धान्तयति--

**आवेशो वार्थधर्मत्वात् संस्कारस्य तदर्थत्वात् ॥३६॥**

वा शब्दोऽवधारणे । [1]परिधौ परिव्ययणसंस्कारस्य यूपधर्मजातस्य आवेशः–प्रवृत्तिस्स्यादेव । कुतः ? अर्थधर्मत्वात्-यस्मिन्द्रव्ये पशुनियोजनं क्रियते तदर्थत्वात् यूपसंस्काराणाम्, न तु नियोजनार्थत्वेनोत्पन्नं यत् तदर्था यूपधर्मा इति । कुतः ? तदर्थत्वात्–यद्द्रव्यं पशुनियोजनं साधयति तदर्था यूपधर्माः । अपूर्वप्रयुक्ता हि यूपधर्मास्तत्र साक्षादसम्भवन्तस्तत्साधनं द्वारमाश्रयन्ति । तदर्थतयोत्पन्नत्वमपि तत्र न तन्त्रम् । नियोजनसाधनता च परिधेरप्यस्तीति भवन्त्येव तत्र यूपधर्माः । ननु परिधिस्सत्वक्कश्शयानश्च । तत्र कथं तक्षणाष्टाश्रीकरणोच्छ्रयणादयो यूपधर्माः प्रवर्तेरन्निति चेन्न; परिधिधर्मैरविरुद्धा ये यूपधर्माः प्रोक्षणाञ्जनादयस्तेषां प्रवृत्तिसम्भवात् । वक्ष्यति च द्वादशस्य द्वितीये 'यूप्यस्तु विरोधे स्यान्मुख्यानन्तर्यादितरो वा तत्र तस्य विधानात्' इत्यत्र ॥

नन्वेवमपि "यूपायाज्यमानायानुब्रूहि" इत्यादिमन्त्राः कथं तत्र भवेयुः ? यूपशब्दस्य छेदनाष्टाश्रीकरणप्रोक्षणादिदृष्टादृष्टसकलसंस्कारनिबन्धनत्वादित्यत आह—

**आख्या चैवं तदावेशाद् विकृतौ स्यादपूर्ववत् ॥३७॥**

एवमुक्तरीत्या परिधौ तदावेशात्—परिधिधर्मैरविरुद्धानां समावेशात्, यूपाख्या च—यूपशब्दोऽपि स्यात् । अपूर्ववत्—प्रकृतिवत् । प्रकृतौ ह्यग्नीषोमीयपशौ दृष्टादृष्टसकलसंस्कारनिचये यूपशब्दः प्रयुक्तः । परिधौ चात्र सम्भाविनः कतिपयसंस्कारनिचयस्याभिधायकपदान्तरं न दृश्यते । अवश्यञ्च प्रकृतिवत् तद्रूपप्रकाशनं कर्तव्यमिति यूपशब्द एवालब्धसकलार्थोऽपि प्रयोक्तव्यस्तत्प्रकाशनाय । तदेवं परिधिधर्मैरविरुद्धा यूपधर्माः प्रवर्तन्ते । तत्र परिधौ यूपधर्माः प्रवर्तन्त इत्येतदेवैतदधिकरणप्रमेयम् । परिधिधर्मैरविरुद्धा यूपधर्मा इति वक्ष्यमाणद्वादशिकाधिकरणसिद्धमिति न पुनरुक्तिः ॥

इति चतुर्दशं परिधौ यूपधर्मानुष्ठानाधिकरणम् ॥ १४ ॥

---

१. परिधौ संस्कारस्य. ग, परिधौ नास्ति. क. २. त्वेवम्.

१५

अभ्युदयेष्टौ श्रुतम्—"इन्द्राय प्रदात्रे दधंश्चरुम्, विष्णवे शिपिविष्टाय शृते चरुम्" इति। दधन् इति लुप्तसप्तमीकम्। शृतमिति पय उच्यते। पयः प्रकृत्य "इन्द्रियं वावास्मिन् वीर्यं तदश्रयन्, तच्छृतस्य शृतत्वम्" इति निर्वचनात्। किमत्र शृतदध्नोः प्रणीताधर्मास्सन्ति? न वा? इति संशये, पूर्वपक्षयति—

**परार्थे त्वर्थासामान्यात् संस्कारस्य तदर्थत्वात् ॥ ३८ ॥**

तुर्वैषम्ये। परिधेर्यूपकार्ये नियोजने विनियोगवचनात् भवन्तु तत्र यूपधर्माः। इह तु शृते दधनि च प्रणीताधर्माः "चमसेन प्रणयति" इत्यादयो न स्युः। कुतः? अर्थासामान्यात्—दधिशृतयोः प्रणीताभिः कार्यसाम्याभावात्। ननु हविश्श्रपणलक्षणकार्यसाम्यमुभयत्राप्यस्तीत्यत आह—संस्कारस्य तदर्थत्वादिति। संस्कारस्य—प्रणीताधर्मस्य तदर्थत्वात्—श्रपणसाधनत्वेन यद्विनियुक्तं तदर्थत्वात्। न हि परिधिनियोजनकार्य इव दधिशृतयोः प्रणीताकार्ये [1]श्रपणे वचनमस्ति। तस्मान्न दधिशृतयोः प्रणीताधर्माः ॥

अथ सिद्धान्तयति—

**क्रियेरन्वार्थनिर्वृत्तेः ॥ ३९ ॥**

वाशब्दोऽवधारणे। दधिशृतयोः क्रियेरन्नेव प्रणीताधर्माः। कुतः? अर्थनिर्वृत्तेः—प्रणीताकार्यस्य श्रपणस्य दधिशृताभ्यां प्रत्यक्षमेव निष्पत्तेः। साधनत्वमात्रं [2]धर्मप्रवृत्तेस्तन्त्रम्, न तु वाचनिकमेव साधनत्वमित्याशयः ॥

इति पञ्चदशमभ्युदयेष्टौ दधिशृतयोः प्रणीताधर्मानुष्ठानाधिकरणम् ॥१५॥

१६

ज्योतिष्टोमे श्रुतम्—"रथन्तरं पृष्ठं भवति, बृहत्पृष्ठं भवति" इति। तथा "रथन्तरे प्रस्तूयमाने सन्मीलयेत्, स्वर्दृशं प्रति वीक्षेत, नोच्चैर्गेयम्, न बलवद्गेयम्" इत्यादयो रथन्तरशब्दसंयुक्ताः कतिपये धर्माः श्रुताः। "बृहति गीयमाने समुद्रं

---

१. श्रपणवचनं. क.।　　२. धर्मप्रवृत्तौ. ख.

मनसा ध्यायेत्, उच्चैर्गेयम्, बलवद्गेयम्" इत्यादयो बृहत्संयुक्ताश्च। किमेते उभयेऽपि धर्मा उभयत्र कर्तव्याः ? उत यथाश्रुति व्यवस्थया ? इति संशये, पूर्वपक्षयति--

**एकार्थत्वादविभागस्स्यात् ॥ ४० ॥**

बृहद्रथन्तरयोः पृष्ठाख्यैकस्तोत्रलक्षणकार्यकत्वाद्धर्माणामेषामुभयत्र संस्कारस्स्यात्। ननु रथन्तरस्य "अभि त्वा शूर नोनुमः" इत्यृगभिव्यञ्जकस्य शूरत्वादिना स्तुतिसाधनत्वम्। बृहतस्तु "स त्वन्नश्चित्र वज्रहस्त" इत्यृगभिव्यञ्जकस्य चित्रत्वादिना स्तुतिसाधनत्वमिति स्तुतिसाधनताप्रकारभेदान्न धर्मसङ्कटः। रथन्तरस्य शूरत्वादिप्रकारकस्तुतिसाधनतयैव सम्मीलनादिधर्मसम्बन्धात्। बृहतश्च चित्रत्वादिप्रकारकस्तुतिसाधनतैव समुद्रध्यानादिधर्मसम्बन्धात्। यथा व्रीहीणां स्रुवादीनाञ्चाग्नेयाद्यपूर्वसाधनत्वेऽपि हविःप्रकृतितयापूर्वसाधनत्वरूपेण व्रीह्यन्वितानामवघातादीनां तद्रूपरहितेषु स्रुवादिषु न प्रवृत्तिः तद्वदिति चेन्न; वैषम्यात्। रथन्तरबृहतोर्हि शास्त्रतात्पर्यावगतं यत्साधनत्वरूपं तदेव धर्मविधिषूपजीव्यम्। रथन्तरादिशास्त्रस्य च ऋगक्षराभिव्यञ्जकत्वमात्रे तात्पर्यम्, न तु शूरत्वादिप्रकारभेदेऽपि, [1]आर्थिकत्वात्। व्रीह्यादिशास्त्रस्य तु हविःप्रकृतित्वे तात्पर्यात्, तेनैव रूपेण धर्मान्वयावश्यम्भावान्न स्रुवादिसाधारण्यमिति। तथा व्रीहीणां कठिनतण्डुलद्वारा यवानां [ मसृण ] तण्डुलद्वारा पुरोडाशसाधनत्वेन साधनताप्रकारभेदे सत्यपि तस्यार्थिकतया शास्त्रीयहविःप्रकृतित्वमादाय व्रीहिसंयुक्तानामप्यवघातादिधर्माणां व्रीहियवसाधारण्यम्, तद्वदेव रथन्तरसंयुक्तानां बृहत्संयुक्तानाञ्च धर्माणामुभयत्र सङ्कर इति ॥

अथ सिद्धान्तयति--

**निर्देशाद्वा व्यवतिष्ठेरन् ॥ ४१ ॥**

वा शब्दोऽवधारणे। सम्मीलनादिधर्माणां रथन्तरशब्देन, समुद्रध्यानादिधर्माणाञ्च बृहच्छब्देन निर्देशात्—विधानात्, तदुभये धर्मा व्यवतिष्ठेरन्-- रथन्तरशब्दसंयुक्ता धर्मा रथन्तरे, बृहच्छब्दसंयुक्ता धर्मा बृहतीत्येवं व्यवस्थयैव[2] प्राप्नुयुः, न तु सङ्कीर्येरन्। व्रीहिग्रहणं हि तावन् हविःप्रकृतिभूतद्रव्योलक्षणमिति

---

१. आधिक्यात्. ग, अ. २. एव. नास्ति. क.

यवेष्वपि व्रीहिसंयुक्ता[1] धर्माः प्रवर्तन्त इति युक्तम्। व्रीहिशब्दस्यैव धर्मविधिषु श्रुतत्वात्। यवशब्दस्य च कतिपयधर्मविधिष्वश्रुतत्वात्। इह तु यदि सम्मीलनादिविधिषु रथन्तरग्रहणं पृष्ठाख्यस्तोत्रसाधनमात्रोपलक्षणं स्यात्, तदा धर्मविधिषु सर्वत्र रथन्तरशब्दमात्रं बृहच्छब्दमात्रं वा गृह्येत। क्वचित्तु धर्मेषु रथन्तरम्, क्वचिच्च बृहद्गृह्यते। अतो गम्यते सम्मीलनादिविधिषु पृष्ठस्तुतिसाधनत्वं रथन्तरस्वरूपञ्च विवक्षितम्। समुद्रध्यानादिविधिषु तु बृहत्स्वरूपमपि विवक्षितमिति। तस्माद्यथानिर्देशं धर्मा व्यवतिष्ठेरन्निति।

ननु रथन्तरबृहत्स्वरूपविवक्षायां कण्वरथन्तरे उभयधर्मा भवन्तीत्युत्तराधिकरणे वक्ष्यमाणं विरुध्येतेति चेत्—अतएव सूत्रमिदमन्यथापि[2] व्याख्यातमाकरे। तद्यथा—अन्यान्यस्तुतिलक्षणकार्ययोरेव बृहद्रथन्तरयोर्निर्देशात्–उत्पत्तिविधेः तद्धर्मा व्यवतिष्ठेरन्निति। "रथन्तरं पृष्ठं भवति" इत्येकमुत्पत्तिवाक्यम्। अत्र पृष्ठशब्देन माहेन्द्रग्रहयज्याभ्यासीयं स्तोत्रमुच्यते, वाक्यशेषे तथाविधस्तुतेः कीर्तनात्। ततश्च रथन्तरसाधनिकां पृष्ठाख्यां स्तुतिं कुर्यादित्यर्थः। सा च स्तुतिरदृष्टार्थेति स्तुतशास्त्राधिकरणे स्थितम्। "बृहत्पृष्ठं भवति" इत्यन्यदुत्पत्तिवाक्यं पूर्वमेव व्याख्यात प्रायम्। पृष्ठशब्दाभ्यासाच्च स्तुतिभेदो गम्यते। स च शूरत्वादिना चित्रत्वादिना च साधनताप्रकारभेदादेवोपपाद्यः। एतेन साधनताप्रकारभेदस्यार्थिकत्वान्न तत्कृतस्तुतिभेद इति निरस्तम्। ततश्चान्यैव पृष्ठाख्या स्तुतिः रथन्तरेण साध्यते, अन्यैव बृहतेति नानयोरेककार्यत्वम्। अतः कार्यभेदनिबन्धना धर्मव्यवस्थेति युक्तम्। न चोभयोरपि पृष्ठयोस्तुतिरूपयोस्स्तुतशस्त्राधिकरणन्यायेनादृष्टार्थत्वात् समुच्चयस्स्यादिति वाच्यम्। बृहत्पृष्ठं वा रथन्तरपृष्ठं वेति वचनादेव विकल्पोपपत्तेः। तथाविधवचनञ्च मीमांसकसम्प्रदायात् क्वचिच्छाखायामुन्नेयम्।

स्यादेतत्; "पृष्ठैस्स्तुवते" इत्यैवोत्पत्तिवाक्यमस्तु। उत्पन्नपृष्ठानुवादेन च "रथन्तरं पृष्ठं भवति" इति "बृहत्पृष्ठं भवति" इति च वाक्यद्वयं रथन्तरबृहत्सामलक्षणगुणविधायकं भविष्यतीति न रथन्तरबृहतोरेककार्यकरत्वम्। यद्यपि पृष्ठानुवादेन रथन्तरबृहद्विधाने सत्यपि नैककार्यकरत्वं सिध्यति, पृष्ठैरित्युत्पत्तिगतबहुत्व-

---

१. संयुक्तश्रुताः. ग, अ. २. अपि. नास्ति. क.

सङ्ख्याया पृथक्त्वनिवेशित्वात् 'सङ्ख्यया कर्मभेदस्स्यात्'इत्यधिकरणन्यायेन ( ) पृष्ठभेदे सत्येकत्र पृष्ठे रथन्तरस्य साधनत्वम् अत्यत्र बृहत इत्युपपत्तेः, तथापि सत्यपि पृष्ठभेदे बृहद्रथन्तरयोरेककार्यत्वं नापैति । माहेन्द्रस्तोत्रव्यतिरिक्तस्तोत्राणां नौधसादि-सामान्तरावरुद्धत्वेन तदनवरुद्धे माहेन्द्रस्तोत्र एवैकस्मिन् बृहद्रथन्तरविध्योः पर्यव-सानात् । ततश्चैककार्यत्वमेव बृहद्रथन्तरयोरिति धर्मसङ्कटो दुर्वार इति चेत्---अत्र वदन्ति; यदि "पृष्ठैस्स्तुवते" इत्युत्पत्तिस्स्यात्, तर्हि सङ्ख्याधिकरणन्यायेनोत्पत्ति-गतबहुत्वसङ्ख्यया ज्योतिष्टोमे बहूनि पृष्ठानि स्युः । न चेष्टापत्तिः; साप्तमिक-सूत्रभाष्यविरोधात् । सप्तमस्य हि तृतीये-'विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाज्ज्यौति-ष्टोमिकानि पृष्ठान्यस्ति च पृष्ठशब्दः' इति पृष्ठशब्दस्य "पृष्ठैस्स्तुवते" "सप्तदशानि पृष्ठानि" इति माहेन्द्रस्तोत्रे 'माध्यन्दिनीयमैत्रावरुणाद्युक्थ्यस्तोत्रेष्वपि दर्शनात् "विश्वजित्सर्वपृष्ठः" इत्यत्रापि सर्वपृष्ठशब्दः प्राकृतपृष्ठचतुष्टयानुवाद इत्याशङ्क्य, 'षडहाद्वा तत्र हि चोदना' इति सूत्रेण "विश्वजिति सर्वपृष्ठः" इति सर्वपृष्ठशब्दष्षाड-हिकानि होतुःपृष्ठानि रथन्तरबृहद्वैरूपवैराजशाक्वररैवतान्यभिधत्ते । बहूनां पृष्ठानां तत्रैव हि विधिरस्ति, न तु ज्योतिष्टोम इति समाहितम् । न च ज्योतिष्टोमे पृष्ठबहुत्वमस्ति, येनायमनुवादस्स्यात् । षडहे तु तदस्तीत्यादि भाष्ये व्यक्तीकृतञ्चैतत् । न चैवमपि रथन्तरं पृष्ठं बृहत्पृष्ठमिति सामानाधिकरण्यात् सामवाचक एव पृष्ठशब्दः, न तु स्तुतिपरः । ततश्च पृष्ठाख्यस्तुतौ रथन्तरबृहतोर्विकल्प इत्ययुक्तमिति वाच्यम्, वाक्यशेषे माहेन्द्रस्तुतेः कीर्तनेन पृष्ठशब्दे स्तुतिपरत्वावधारणस्योक्तत्वात् । तादृशवाक्यशेषस्तु मीमांसकसम्प्रदायादुन्नेयः । "सप्तदशानि पृष्ठानि" इति सप्तदश-स्तोमकत्वरूपगुणविधानाच्च । स्तोमे डविधिरिति सप्तदशत्वसङ्ख्यायाः[2] स्तोत्रीय-परिच्छेदकत्वावगमात्, "पृष्ठैस्स्तुवते" इति विस्पष्टमेव स्तुतिसामानाधिकरण्यानु-वादाच्च । तस्माद्बृहद्रथन्तरवाक्याभ्यां तयोर्भिन्नकार्यकरत्वाद् व्यवतिष्ठेरन् धर्माः । एवञ्च धर्मविधिषु बृहद्रथन्तरनिर्देशभेदस्यापि भिन्नस्तुतिसाधनत्वनिबन्धनत्वोप-पत्तेर्न तत्स्वरूपविवक्षाप्रसङ्गोऽपीति न कण्वरथन्तरे उभयधर्मपरोत्तराधिकरण-विरोधोऽपीति भष्याद्यनुयायी पन्थाः । कौस्तुभे तु "पृष्ठैस्स्तुवते" इत्येवोत्पत्ति-वाक्यं रथन्तरादिवाक्यद्वयन्तु नास्त्येवेत्यादि प्रपञ्चितम् । तत्सूत्रभाष्याक्षरानानु-गुणत्वादुपेक्षितम् ॥

इति षोडशं बृहद्रथन्तरधर्माणां व्यवस्थितत्वाधिकरणम् ॥ १६ ॥

---

१. गपुस्तके पदमिदं स्खलितम्. २. सप्तदशकसङ्ख्यायाः, क.

१७

वैश्यस्तोमे श्रुतम्--"कण्वरथन्तरं पृष्ठं भवति" इति। कण्वरथन्तराख्यसामसाधनिकां पृष्ठाख्यस्तुतिं कुर्यादित्यर्थः। प्रकृतिप्राप्तपृष्ठस्तुतौ बृहद्रथन्तरयोस्स्थाने कण्वरथन्तरविधिरयम्। तत्र किं रथन्तरधर्मा बृहद्धर्माश्च विकल्पेरन्? उत समुच्चीयेरन्? इति संशयः। रथन्तरबृहद्धर्माणां प्रकृतौ व्यवस्थितत्वेनैकत्र स्तुतौ समुच्चयाभावादिहापि तथैव समुच्चयाभावाद्विकल्पः। न च प्रकृतौ समुच्चयाभावेऽपि इह चोदकतो धर्मद्वयग्रहणात् समुच्चयोऽस्त्विति वाच्यम्। प्रकृतौ हि निरपेक्षमेव स्तुतिसाधननिवेशिनो धर्माः क्लृप्ताः। अतस्तान्विकल्पेनैव चोदको गृह्णातीति न समुच्चय इति प्राप्ते, सिद्धान्तयति--

**अप्राकृते तद्विकाराद्विरोधाद् व्यवतिष्ठेरन् ॥ ४२ ॥**

अप्रकृतिः विकृतिः, तत्र विहिते कण्वरथन्तरे तद्विकारात्—बृहद्रथन्तरोभयकार्यपृष्ठस्तुतिकारितया तदुभयस्थानापत्तेस्समुच्चीयेरन्नेव धर्माः, न तु विकल्पेरन्। प्रकृतौ हि धर्मविधिषु क्वचिद्रथन्तरग्रहणात्, क्वचिच्च बृहद्ग्रहणाद् व्यवस्था धर्माणामास्थिता। इह तु व्यवस्थाहेतुभूतनिर्देशाभावादुभयस्थानापन्ने उभयधर्मसमुच्चयो न विरुध्यते। तत्र 'बलवद्बृहद्गेयं न बलवद्रथन्तरं गेयम्' इत्यादयो धर्माः व्यवतिष्ठेरन्-विकल्पेरन्नेव। एकस्मिन् विरोधादिति भाष्यकृतः।

वार्तिके त्विदमधिकरणमन्यथा योजितम्। तद्यथा—कण्वरथन्तरस्य बृहद्रथन्तरकार्यकारितया तदुभयस्थानापत्तेस्तदुभयधर्मा अविरुद्धास्समुच्चीयेरन्निति प्राप्ते, आह--

**अप्राकृते तद्विकाराद्विरोधाद् व्यवतिष्ठेरन् ॥**

वैकृते कण्वरथन्तरे बृहद्रथन्तरधर्माः व्यवतिष्ठेरन्-विकल्पेरन्, अन्यतरधर्माः भवेयुः। कुतः? तद्विकारात्---वैश्यस्तोमस्य ज्योतिष्टोमविकारत्वात्। उच्चैर्नीचैरित्यादिकतिपयधर्माणां विरोधाच्च। प्रकृतौ हि ज्योतिष्टोमे रथन्तरबृहद्वाक्याभ्यां द्वे पृष्ठस्तुती उत्पन्ने विकल्पेते इति पूर्वाधिकरणे प्रपञ्चितम्। ततश्च विकृतौ वैश्यस्तोमे चोदकप्राप्तवैकल्पिकपृष्ठद्वयानुवादेन कण्वरथन्तरविधिः। ततश्च तत्र कण्वरथन्तरसाधनके द्वे पृष्ठे विकल्पेते। तयोश्च प्रयोगभेदेन विकल्पेनानुष्ठीयमानयोस्साधनतया विधीयमानं कण्वरथन्तरमन्यतरधर्मानेव गृह्णाति।

कण्वरथन्तरं ह्येकस्मिन्वैश्यस्तोमप्रयोगे एकपृष्ठस्तुत्यपूर्वं साधयति। प्रयोगान्तरे त्वपरपृष्ठस्तुत्यपूर्वं साधयतीति तत्साधनरूपप्रयुक्तान्धर्मान् विकल्पेनैव गृह्णाति, न तु समुच्चयेनेति ॥

इति सप्तदशं कण्वरथन्तरे विकल्पेन पृष्ठधर्मातिदेशाधिकरणम् ॥ १७ ॥

१८

'संसव उभे कुर्यात्' इति श्रुतम्। एकस्यां जनतायां एकस्मिन् काले द्विषतोर्यजमानयोस्सुत्या संसव इत्युच्यते। "अविद्विषाणयोर्न संसवो विद्यते" इति कङ्कतिब्राह्मणम्। तत्र किमुभयोरपि बृहद्रथन्तरयोस्साम्नोः एकैकस्मिन् साम्नि उभयधर्माः कर्तव्याः? उत रथन्तरे रथन्तरधर्मा एव बृहति बृहद्धर्मा एवेति संशये, पूर्वपक्षयति--

**उभयसाम्नि चैवमेकार्थापत्तेः ॥ ४३ ॥**

उभे बृहद्रथन्तरसाम्नी यस्य सः उभयसामा, तस्मिन् संसवे। एवं कण्वरथन्तरवदेकैकस्मिन्साम्नि उभयधर्माः कर्तव्याः। कुतः? एकार्थापत्तेः--एकैकस्मिन् पृष्ठे उभयोस्साम्नोर्विधानात्। प्रकृतौ हि ज्योतिष्टोमे रथन्तरसाधनकं बृहत्साधनकञ्चेति द्वे पृष्ठे उत्पन्ने वचनाद्विकल्पिते। ततश्चैकैकं पृष्ठमेकैकसामकमिति स्थितिः। संसवेऽपि तथैवैकैकस्मिन् पृष्ठे एकैकस्य साम्नः प्राप्तौ "संसव उभे कुर्यात्" इत्येकैकस्मिन् पृष्ठे द्वे द्वे सामनी समुच्चिते विधीयेते। ततश्च यद् बृहतः कार्यं पृष्ठम्, तदुभाभ्यां सामभ्यां समुच्चिताभ्यां [साध्यते] तथा रथन्तरकार्यमपि। एवञ्च सहितयोरेव साम्नोरेकैकपृष्ठस्तोत्रसाधनतया तत्तत्पृष्ठप्रयुक्ता धर्मा उभयत्रापि कार्याः ॥

अथ सिद्धान्तयति--

**स्वार्थत्वाद्वा व्यवस्था स्यात् प्रकृतिवत् ॥ ४४ ॥**

वाशब्दोऽवधारणे। रथन्तरे रथन्तरधर्माः, बृहति बृहद्धर्मा इति व्यवस्थैवाश्रयणीया। कुतः? स्वार्थत्वात्। एवं सत्येव साम्नोः प्राकृतकार्यकरत्वसम्भवात्। अन्यथाप्राकृतकार्यकरत्वप्रसङ्गात्। प्रकृतौ हि रथन्तरं साम "अभि त्वा शूर नोनुमः" इत्यृगभिव्यक्त्या शूरत्वादिप्रकारिकां पृष्ठस्तुतिं दृष्टविधया साधयति। बृहत्तु-

"स त्वन्नश्चित्र" इत्यृगभिव्यक्त्या चित्रत्वादिप्रकारिकां स्तुतिं दृष्टविधया साधयतीति स्थितिः। यदि ह्यत्र रथन्तरकार्ये पृष्ठे रथन्तरं बृहच्च विधीयेयाताम्, तर्हि बृहता शूरत्वादिप्रकारकस्तुतेर्दृष्टविधया असम्भवाददृष्टद्वारव तस्य पृष्ठस्तुतिसाधनता[1] स्यात्। एवं बृहत्कार्ये पृष्ठे उभयविधौ, रथन्तरेण चित्रत्वादिप्रकारकस्तुतेर्दृष्टविधया असम्भवाददृष्टद्वारैव, पृष्ठसाधनत्वं स्यात्। ततश्चोभयोरपि साम्नोरप्राकृतकार्यकरत्वापत्तिः। अतो नात्र कण्वरथन्तरवत् प्राकृतपृष्ठानुवादेनोभयसामविधिः। किन्तु प्राकृतयोः पृष्ठस्तोत्रयोः प्रकृतिवदेव विकल्पप्राप्तौ समुच्चयो विधीयते। तयोश्च पृष्ठस्तोत्रयोः प्रकृतौ भिन्नादृष्टसाधनत्वाद्यथाप्राप्त एव व्यवस्थितधर्मके प्रकृतिवत् प्रयोक्तव्ये। "उभे बृहद्रथन्तरे भवतः" इति वचनान्तरन्तु साममुखेन तत्साध्यपृष्ठयोरेव समुच्चयविधिपरम्, तथा सत्यप्राकृतकार्यकरत्वदोषस्योक्तत्वात्। किञ्च स्तोत्रयोस्समुच्चयमात्रविधानाल्लाघवम्। साम्नोस्तु परस्य कार्ये परस्यापि विधानाद् गौरवम्। तस्मादुभयपृष्ठे संसवे रथन्तरे रथन्तरधर्माः, बृहति बृहद्धर्मा इति स्थितम्।

यद्यपि छन्दोगब्राह्मणतत्सूत्रेषु संसवादावुभयसाम्नि क्रतौ सर्वत्रान्यतरसामकमेव पृष्ठम्, अन्यतरत्तु पवमानस्तोत्रे निवेशितं दृश्यते, तथापि तच्छाखान्तरमूलकमेव। जैमिनेस्तु एकैकस्मिन्नेव पृष्ठे साम्नोस्समुच्चयः, दशमस्य षष्ठे तथा वक्ष्यमाणत्वात्। उभयसामकपृष्ठकः कश्चित् क्रतुश्शाखान्तरेऽन्वेष्टव्यः॥

इत्यष्टादशं संसवाधिकरणम्॥१८॥

१९

तदेवमूहसिध्यर्थमवान्तरकार्यनिरूपणे प्रस्तुते तत्प्रसङ्गात् पार्वणहोमयोरवान्तरकार्यं निरूपयितुमिदमारभ्यते। दर्शपूर्णमासयोः श्रूयते- "पार्वणौ होमौ जुहोति" इति। पर्वदेवता यस्य होमस्य स पार्वणः। पार्वणश्च पार्वणश्च पार्वणौ होमौ जुहोति कुर्यादित्यर्थः। सामान्यविशेष[2]भावादपुनरुक्तिरिति 'टित्करणं करोती'ति महाभाष्यव्याख्यावसरे कैयटः। किमनयोर्होमयोस्सौर्यादिषु विकृतिष्वतिदेशोऽस्ति? न वा? इति संशये, सिद्धान्तेनोपक्रमते—

**पार्वणहोमयोस्त्वप्रवृत्तिस्समुदायार्थसंयोगादभीज्या हि॥४९॥**

---

१. साधनत्वं. क. २. विशेषभावान्न पुनरुक्तिः. क, ख.

विकृतिषु प्राकृता धर्माः प्रवर्तन्ताम्, पार्वणहोमयोस्तु विकृतिष्वतिदेशो न भवति। कुतः? समुदायार्थसंयोगात्–पृणातेर्दानार्थकात् भावे 'अन्येभ्योऽपि दृश्यन्ते' इति वनिपि व्युत्पन्नस्य पर्वशब्दस्य पूर्णमासत्रिके दर्शत्रिके च आग्नेयादिसमुदायेऽर्थे वाचकतया संयोगात्। ततश्च पार्वणशब्देन देवतातद्धितान्तेनाग्नेयादिसमुदायस्यात्र देवतात्वावगमाद् विकृतौ च समुदायाभावान्न पार्वणहोमयोस्तत्र प्रवृत्तिः। 'कर्मणस्त्वप्रवृत्तित्वात् फलनियमकर्तृ[1]'समुदायस्यानन्वयस्तद्बन्धनत्वात्' इत्यष्टमाद्यपादीयाधिकरणे विकृतिषु प्राकृताग्नेयादियागसमुदायस्याप्रवृत्तेरुक्तत्वात्। ननु पर्वशब्दः पौर्णमास्याममावास्यायाञ्च काले प्रचुरं प्रयुज्यते। 'पर्वणि सुत्या दीक्षा वा' 'पर्वण्युपोष्य श्वोभूते यजते' 'पर्वणि नाधीयीत' 'षष्टिदण्डमखण्डं पर्व' 'अद्य त्रिंशद्दण्डं पर्व' इत्यादौ। आग्नेयादियागसमुदाये तु पर्वशब्दो न प्रचुरं प्रयुज्यते। अद्य पर्वेष्टिरिति क्वचिदेव प्रयुज्यते। ततश्चात्र पार्वणशब्देन पौर्णमास्यमावास्या च काल एव देवता गम्यते। स च कालो विकृतिष्वप्यस्त्येव, य इष्ट्यादिवाक्येन विकृतीनां पर्वकालकत्वनियमात्। एवञ्च स्यादेव विकृतिषु पार्वणहोमयोरतिदेशः। नैमित्तिकविकृतीनान्तु निमित्तानन्तरमेव कर्तव्यानामन्यकालकत्वेऽपि "ऋषभं वाजिनं वयं पूर्णमासं यजामहे, अमावास्या सुभगा सुशेव" इति तन्मन्त्रयोरूहसम्भवान्न तदतिदेशविरोध इत्यत आह-तदभीज्या हीति। [2]हि यतः, आग्नेयादियागसमुदायदेवताकत्वे [3]पार्वणौ होमौ तदभीज्या-आग्नेयादियागसमुदायसंस्कारः सम्पद्यते। सन्निपत्योपकारकत्वं लभ्यत इति यावत्। देवतोद्देशेन त्यज्यमानहविःप्रक्षेपात्मके होमे त्यागप्रक्षेपांशयोस्तत्संस्कारकत्वासम्भवेऽपि उद्देशांशे तत्संस्कारकतासम्भवात्। कालदेवताकत्वे तु कालस्यासंस्कार्यतया होमयोरारादुपकारकता स्यात्। सम्भवति च सन्निपत्योपकारकत्वे आरादुपकारकत्वाश्रयणं न युक्तमाश्रयितुम्। ततश्च पार्वणहोमयोराग्नेयादियागसमुदायदेवताकत्वात् समुदायस्य च विकृतिष्वभावान्नातिदेशः॥

ननु पॄ धातोर्दानार्थत्वं[4] धातुपाठे क्वापि न दृष्टम्। पॄ पालनपूरणयोः, पृङ् आयाम इत्याद्यर्थान्तरस्यैव तत्र दर्शनात्। क्वापि लोके पॄ धातोर्दाने प्रयोगादर्शनाच्च। अतो न पर्वशब्दो यागपरः। किन्तु [5]प्रचुरप्रयोगात् कालविशेषपर

---

१. समुदायस्याप्रवृत्तेरुक्तत्वात्. क. २. हि यतः. नास्ति. क. ३. पार्वणहोमौ. क.
४. दर्शनार्थत्वं. क. ५. प्राचुर्य. ग.

एवास्थेयः। अद्य पर्वेष्टिरित्यत्रापि लक्षणया पर्वणि कर्तव्येष्टिरित्युपपत्तेः। न चैवं सति होमयोः कालदेवताकत्वापत्तौ कालस्य संस्कार्यत्वासम्भवाद् आराद्पकारकत्वं होमयोः प्रसज्येतेति वाच्यम्, पर्वदेवतोद्देश्यकहविःप्रक्षेपात्मकहोमे उद्देशांशेन 'तत्स्मरणरूपदृष्टसंस्काराधायकतया सामवायिकत्वोपपत्तेः। न च 'कर्मारम्भे स्मरेत् कालम्' इत्यादि स्मृत्या कालस्योपक्रम एव प्रतीक्ष्यतया तत्स्मरणवैयर्थ्यम्, पार्वणहोमयोः प्रयोगमध्यवर्तित्वादिति वाच्यम्। उपक्रमे स्मृतस्यापि कालस्य स्मृतिविच्छेदे सत्यकालकृतत्वसम्भावनानिमित्तकाश्रद्धापरिहारेण प्रयोगमध्येऽपि तत्स्मरणस्यार्थवत्त्वात्। ततश्च पार्वणहोमयोः कालविशेषदेवताकत्वाद्विकृतिष्वपि तत्सत्त्वात् स्यादेवातिदेश इति प्रत्यवतिष्ठमानं पूर्वपक्षिणं निराचष्टे—

**कालस्येति चेन्नाप्रकरणत्वात् ॥४६॥**

उक्तरीत्या कालस्यैव संस्कारकौ पार्वणहेमाविति चेत्-तन्न; कुतः? अप्रकरणत्वात्-न विद्यते प्रकरणं यस्य कालस्येति विग्रहः। कालस्य प्रकरणाभावादित्यर्थः। इतिकर्तव्यतालक्षणं हि प्रकरणं यागानामेव फलवत्वाद्विद्यते। यागैः फले भाव्यमाने इतिकर्तव्याकाङ्क्षोत्थितेः। यैश्चाकाङ्क्ष्यन्ते धर्मास्तेष्वेव धर्मा उपकुर्वन्ति। अतो न पार्वणहोमौ कालस्य संस्कारकौ, येन विकृतावपि कालस्य सत्वादतिदिश्येयाताम्। ननूक्तरीत्या काले पर्वशब्दस्य मुख्यत्वात् कालसंस्कारकत्वे श्रुत्यनुग्रहः। तदनुसारेण प्रकरणबाधो युज्यते, प्रकरणाच्छ्रुतेर्बलीयस्त्वात्। प्रकरणानुसारेण पर्वशब्दस्य लक्षणया कर्मपरत्वे तु प्रकरणाच्छ्रुतिबाध. प्रसज्येत इति चेदत्र ब्रूमः-सत्यं पॄधातोः पालनपूरणार्थनिर्देशो[3] धातुपाठे दृश्यते, दानार्थकत्वञ्च न दृश्यते, तथापि वैदिकप्रसिध्या पृणातेः दानेऽपि वृत्तिरास्थेया। "पितृभ्यो निपृणीयात्" इति ब्राह्मणे पृणातेर्दाने श्रवणात्। आश्वलायनसूत्रे 'पिण्डान्निपृणीयात् प्रेतेभ्य एव निपृणीयादिति तौल्वलिः' इत्यादिदर्शनाच्च। 'पृणातिर्दाने वर्तते' इति भाष्याच्च। धातुपाठेऽर्थनिर्देश आधुनिकः प्रायिकश्चेति वैयाकरणसिद्धान्ताच्च। ततश्च पर्वशब्दो भावसाधनो यागे मुख्यः। चन्द्रमाः पूर्यतेऽस्मिन्निति, मासः पूर्यतेऽस्मिन्निति च व्युत्पत्त्या शुक्लपञ्चदशीप्रतिपत्सन्धौ कृष्णपञ्चदशीप्रतिपत्सन्धौ च पर्वशब्दो मुख्यः। तद्युक्ताहोरात्रे तु तद्योगादेव

१. तत्. नास्ति. क. २. फलवद्विद्यते. क, ख.
३. पूरणाद्यर्थ. ग.

गौण इति प्रपञ्चितमेव पञ्चमोपान्त्याधिकरणे। ततश्च प्रकृते पर्वशब्दस्य कालपरत्वे कर्मपरत्वे च श्रुत्यनुग्रहस्तुल्य एव। कर्मपरत्वे तु प्रकरणमप्यनुगृह्यत इति कर्मपरत्वमेवास्थेयम्। नन्वस्तु पर्वशब्दो यागवचनः, तथापि न पर्वत्वं व्यासज्य वृत्ति, येन समुदायरूपेण संस्कार्यत्वाद्विकृतौ तदभावात् पार्वणहोमयोरप्रवृत्तिस्स्यात्। पर्वत्वस्य दानत्वपर्यायस्य प्रत्येकमाग्नेयादिवृत्तित्वादिति चेन्न; दर्शशब्दवत् पूर्णमासशब्दवच्च समुदितरूपेणैव यागेषु पर्वशब्दस्य वैदिकप्रसिद्धेः॥

इतोऽप्यत्र पर्वशब्दः कर्मपर एवेत्याह—

**मन्त्रवर्णाच्च ॥४७॥**

"ऋषभं वाजिनं वयं पूर्णमासं यजामहे" इति होममन्त्रे पूर्णमासशब्दस्य यजिसमानाधिकरणतया पूर्णमासशब्दस्य यागसमुदायपरत्वेनावधारिततया 'च्छागो वा मन्त्रवर्णात्' इति षष्ठान्त्याधिकरणन्यायेन()विधिगतपर्वशब्दस्यापि कर्मपरत्वावश्यम्भावादपि यागसमुदायाभीज्यैव पार्वणहोमौ, न तु कालाभीज्या। न चैवमपि 'विधिशब्दस्य मन्त्रत्वे भावस्स्यात् तेन चोदना' इति दाशमिकाधिकरणे विधिगतशब्देनैव प्रयोगे देवतानिर्देशस्य वक्ष्यमाणतया त्यागवेलायां 'पर्वण इदं न मम' इत्येव निर्देशस्स्यात्। 'पूर्णमासायेदं न मम' 'अमावास्याया इदं न मम' इति याज्ञिकसमाचारश्च दुराचारस्स्यादिति वाच्यम्, इष्टापत्तेः। वस्तुतस्तु पार्वणशब्दः "पूर्णमासं यजामहे, अमावास्या सुभगा" इति मन्त्रवर्णप्राप्तां पूर्णमासीशब्दिताम् अमावास्याशब्दिताञ्च देवतां तत्पर्यायेण पर्वशब्देनानुवदन्नामधेयमेव, न तु देवताविधिरिति न याज्ञिकाचारविरोधः॥

नन्वेवमपि समुदायस्य फलसाधनत्वाभावात् तत्संस्कारो व्यर्थः। ततश्च मन्त्रवर्णाद्यनुसारादाग्नेयादियागसमुदायो होमयोर्देवतेत्येतावदवगतम्। स च समुदायो विकृतावसन्नपि तत्रत्यहोमयोरनयोर्देवता भवितुमर्हतीत्याशङ्क्य निराकरोति—

**तदभावे ऽग्निवदिति चेन्नाधिकारिकत्वात् ॥४८॥**

तदभावे-सौर्यादिविकृतावाग्नेयादियागसमुदायस्याभावेऽपि, देवतात्वसम्भवात् स्यादेव होमयोरतिदेशः, अग्निवत्। अग्निग्रहणमुपलक्षणम्। दर्शपूर्णमासतद्विकृतिष्वग्न्यादय आवाहनेन सन्निहिता देवता भवन्ति। दर्विहोमेषु त्वसन्निहिता

देवता भवन्ति। तद्वदत्रापि होमयोः प्रकृतौ सन्निहित एवाग्नेयादियागसमुदायो देवता। विकृतौ त्वसन्निहित एव तत्समुदायो देवता भविष्यतीति चेत्-तन्न; कुतः? आधिकारिकत्वात्-प्रकृतौ हि दर्शपूर्णमासयोष्षडुत्पत्त्यपूर्वाणि, त्रिकद्वयतोऽवान्तर-समुदायापूर्वं, परमापूर्वमेकमिति नवापूर्वाणि। तत्र पार्वणहोमयोरवघातादिवन्नो-त्पत्त्यपूर्वोपयोगितया सन्निपातित्वम, किन्तु समुदायसंस्कारमुखेन समुदायापूर्वो-पयोगित्वम्। विकृतौ चावान्तरसमुदायरूपद्वाराभावान्न[1] होमयोः प्रवृत्तिः। विकृतिषु वैकृतयागसमुदायस्य सत्वेऽप्यवान्तरसमुदायापूर्वाभावादित्यलम्॥

अथ समुदायानभीज्येति [2]पूर्वपक्षे प्रयोजनान्तरमाह--

उभयोरविशेषात्॥४९॥

उभावपि पार्वणहोमौ उभयोरपि पूर्णमासप्रयोगदर्शप्रयोगयोर्भवतः, अवि-शेषात्-प्रयोगभेदेन तद्व्यवस्थापकप्रमाणाभावात्। तयोर्होमयोः कालदेवताकतया कालस्मरणार्थत्वे उभयत्रापि प्रयोगयोः कालद्वयस्य समुदायसम्भवात् समुदायो देवतैव। न तु संस्कार्य इति पक्षेऽप्युभयत्रापि प्रयोगयोस्समुदायद्वयस्य देवतात्वे-नान्वयसम्भवाच्च॥

अथ यागसमुदायाभीज्येति सिद्धान्तेऽपि प्रयोजनान्तरमाह—

यद्भोज्या वा तद्विषयौ॥५०॥

वा शब्दोऽवधारणे। यस्मिन् प्रयोगे यस्समुदायस्संस्क्रियते तस्मिन् प्रयोगे तत्समुदायदेवताको होम इत्येवं व्यवस्थिताविर्त्यर्थः। संस्कारस्य संस्कार्याधीनप्रवृत्ति-कत्वादिति भावः॥

इत्येकोनविंशं पार्वणहोमाधिकरणम्॥१९॥

२०

दर्शपूर्णमासयोः प्रयाजाः श्रूयन्ते—"समिधो यजति" "तनूनपातं यजति" इत्यादयः। किमिह समिदादिदेवतासंस्कारार्थयागविधिः? उतारादुपकारकयाग-विधिः? इति संशये, पूर्वपक्षमुपक्षिप्य प्रतिक्षिपति--

---

१. द्वराभावान्न. क, २. पक्षे. क,

## प्रयाजेऽपीति चेन्नाचोदितत्वात् ॥५१॥

प्रयाज इत्येकवचनं सामान्याभिप्रायम्। प्रयाजेष्वपि समिदादिशब्दैराग्नेययागीयाग्निलक्षणदेवतामुद्दिश्य 'तत्संस्कारकतया विधानं प्रत्येतव्यम्, समिध इत्यादिद्वितीयाश्रुतेः। "समिधो अग्न आज्यस्य वियन्तु, तनूनपादग्ने, इडो अग्ने, बर्हिरग्ने" इत्येवं सामानाधिकरण्येन समिदादिशब्दानामग्निपरतया प्रज्ञातत्वात्। एवञ्च पार्वणहोमवत् सामवायिकत्वमपि लभ्यत इति चेत्तन्न; कुतः? अचोदितत्वात् आग्नेययागे हि न समिदादिशब्दैरग्निश्चोद्यते, किन्त्वग्निशब्देनैव। ततश्च स्तुतशस्त्राधिकरणगुणसूत्रसिद्धेन्द्रन्यायेन() आग्नेययागीयस्याग्नेस्समिदादिशब्दवाच्याद्भिन्नतया कथमिह समिदादिशब्दैराग्नेययागीयाग्नेर्निर्देशस्स्यात्, येन तत्संस्कारत्वं प्रयाजानां लभ्येत। किञ्च समिदादिदेवतानामप्राप्तत्वात् ता अनूद्य तत्संस्कारार्थतया प्रयाजादिविधिः, अत्रैव समिदादिदेवतानामपि विधौ वाक्यभेदात्। न च "समिधो अग्न आज्यस्य" इत्यादियाज्यामन्त्रवर्णात् तल्लाभश्शङ्क्यः, उत्पन्नेष्वेव हि प्रयाजेषु मन्त्राणामङ्गत्वेनान्वयः। ततश्च देवतालाभो न तूत्पत्तेः प्राक्। ततश्चोत्पत्तिवाक्येष्वेतेषु कथं तदनूद्य तत्संस्कारविधिः? न च संस्कार्यत्वेन समिदादिदेवताविशिष्टप्रयाजविधानान्न दोष इति वाच्यम्, विशिष्टविधौ गौरवात्, संस्कार्यत्वावेदकप्रमाणाभावाच्च। न च समिध इत्यादिद्वितीयाश्रुतिस्तत्र प्रमाणं भवितुमर्हति, यागेषु समिदादीनां देवतात्वेन कर्मत्वानुपपत्तेः। न चोद्देशांशे कर्मत्वं सम्भवतीति शङ्क्यम्। देवतोद्देश्यकद्रव्यत्यागवाचिना [2]यजिना त्यागांशस्य प्राधान्येन उद्देशांशस्य तद्गुणत्वेन प्रतीयमानतयोद्देशांशे समिदादीनां कर्मत्वेऽपि यागे कर्मत्वाभावात्। "विष्णुं यजति" इत्यादौ तु वाक्यान्तरप्राप्तत्वान्न दोषः। अनुवादे लक्षणाया अदोषत्वात्। तस्माद् देवतासंयोगरहिताः केवलयागा आरादुपकारका इह विधीयन्ते। समिदादिशब्दास्तु मन्त्रवर्णगम्यदेवतापुरस्कारेण तत्प्रख्य[3]न्यायान्नामधेयानि। यदि त्वत्यन्ताप्रसिद्धत्वान्न नामधेयत्वमिति, तर्हि मन्त्रवर्णप्राप्तदेवतानुवादे त्वनुवादत्वाच्च चतुर्थ्यर्थे द्वितीयाया लक्षणा न दोषाय। तस्मादा-

---

१. संस्कारार्थतया. ग. २. यजिना, नास्ति. क.

३. न्यायेन. क.

रादुपकारका एवैते यागाः, न त्वग्निलक्षणप्रधानदेवतासंस्कारकाः। प्रयोजनं पूर्वपक्षे-विकृतावैन्द्राग्नादीष्टौ प्रयाजाभावः। सिद्धान्ते तु तत्प्रवृत्तिरिति ॥

इति विंशं प्रयाजादीनामारादुपकारकत्वाधिकरणम् ॥२०॥

इति श्रीवासुदेवदीक्षितविरचितायामध्वरमीमांसाकुतूहलवृत्तौ

नवमाध्यायस्य द्वितीयः पादः ॥



# अथ नवमाध्यायस्य तृतीयः पादः



निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

तदेवं नवमस्य प्रथमपादे मन्त्रोहविचारो वृत्तः । तदवान्तरसङ्गतिलोभेन द्वितीयपादे सोपोद्घातं सामोहविचारश्च वृत्तः, तत्सङ्गत्या संस्कारोहविचारश्च । अथास्मिंस्तृतीयपादे स एव मन्त्रोहविचारः प्रस्तूयते । न चैवं सति कथं पादान्तरत्वमिति शङ्क्यम् । मन्त्रोहो ह्यष्टधा-प्रकृत्यूहः, वचनोहः, लिङ्गोहः, प्रकृतिवचनोहः, प्रकृतिलिङ्गोहः, प्रकृतिलिङ्गवचनत्रितयोहः, कृत्स्नपदाभ्यासलक्षणः, कृत्स्नवाक्याभ्यासश्चेति । तत्र प्रायेण प्रकृत्यूहः प्रथमपादे विचारितः । अत्र तु पादे प्रायेण वचनोहो विचार्यते । प्रकृत्यूहस्त्वल्पश इति पादभेदः । सन्ति दर्शपूर्णमासयोर्निर्वापादिमन्त्रा अग्निपदसंयुक्ताः । ते च मन्त्राः विकृतिषु सौर्यादीष्टिषु चोदकतः प्राप्नुवन्ति । तत्राग्निपदस्थाने सूर्यादिपदमूहितव्यं न वेति संशये, पूर्वपक्षमुपक्षिप्य प्रतिक्षिपति —

**प्रकृतौ यथोत्पत्ति वचनमर्थानां तथोत्तरस्यां ततौ**
**तत्प्रकृतित्वादर्थे चाकार्यत्वात् ॥१॥**

तत्प्रकृतित्वादित्यन्तं पूर्वपक्षपरम् । प्रकृतौ यथोत्पत्ति-यत्पदयुक्ता मन्त्रा उत्पन्नाः, तत्पदानतिक्रमेणैव मन्त्रैरर्थानां वचनम्-अभिधानं प्रकाशनं कृतम्, तथा-तेनैव प्रकारेणाग्निपदयुक्ततयैव मन्त्रैः सूर्यादिप्रकाशनं कर्तव्यम् । कुतः ? तद्विकृतित्वात् विकृतेः प्रकृत्युपदिष्टधर्मकत्वात् । न चाग्निपदेन सूर्यादेः प्रकाशनं कथं स्यादिति वाच्यम् । "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इतिवत् गौण्या वृत्त्या तत्सम्भवात् । अर्थे-चाकार्यत्वादिति सिद्धान्तपरम् । चकारो नञर्थे । नैतदेवम्; अर्थेऽकार्यत्वात्-सूर्यादिरूपेऽर्थेऽग्निपदेन प्रकाशनस्य कर्तुमशक्यत्वात् । विकृतौ ह्युपकारा एवाकाङ्क्षावशाच्चोदकतोऽतिदिश्यन्ते, न तु तज्जनकाः पदार्था अपि पृथगतिदिश्यन्ते ।

तथा सति चरौ लुप्तोपकाराणां पेषणादिमन्त्राणामप्यतिदेशबलेनादृष्टार्थत्वकल्पनया प्रयोगप्रसङ्गात् । ततश्चोपकारातिदेशादेवार्थात् तन्मुखेन पदार्थानामतिदेशो वक्तव्यः । तथा चोपकारजननाय प्रकृतौ यद्रूपविवक्षया मन्त्रेऽग्निपदपाठः, तद्रूपेणैवातिदेशः । उपकारजनने च प्रकृतावपूर्वीयदेवतावाचकपदयुक्तत्वमेव प्रयोजकम्, न त्वग्निपदरूपेणाग्निपदयुक्तत्वम्[1], अग्निपदरूपस्याविवक्षितत्वाद् गौणीमपि वृत्तिमाश्रित्याग्निपदेनैव सूर्यादयः प्रकाशनीया इत्यत्र न किञ्चित्प्रमाणमस्ति । ऐन्द्री तु स्वरूपेण विनियुज्यत इति वैषम्यम् । (एवञ्च प्रकृतावग्निर्देवता पदरूपेणाग्नि) शब्दप्रकाशितेति विकृतिषु सूर्यादयोऽपि सूर्यादिशब्देनैव प्रकाश्या इति सिद्ध ऊहः ॥

इतोऽप्येवमित्याह —

### लिङ्गदर्शनाच्च ॥२॥

[2]अग्नीषोमीये पशौ "दैव्याश्शमितारः" इत्याद्यध्रिगुप्रैषे "अन्वेनं माता मन्यतामनु पिता" इति पठितम् । तत्रैकादशिन्यां मातृशब्दस्य पितृशब्दस्य च बहुवचनान्ततयोहः प्रसक्तः प्रतिषिध्यते—"न माता वर्धते न पिता" इति । अतोऽपि विज्ञायतेऽन्येषामेवञ्जातीयकानां विकृतावूहोऽस्तीति । स्थितमेतदपर्यवसितम् ।

### इति प्रथमं वचनोहाधिकरणम् ॥१॥

२

अथान्तरा, अधिकरणान्तरमारभ्यते । इदमामनन्ति—"मौद्गं चरुं निर्वपेत् श्रीकामः" इति । तत्र श्रुतम् "पौण्डरीकाणि बर्हींषि भवन्ति" इति । अस्ति होतृषदने वेदिस्तरणे मन्त्रः "स्तृणीत बर्हिः परिधत्त वेदिं जामिं मा हिंसीरमुया शयाना । दर्भैस्तृणीत हरितैस्सुपर्णैः निष्का इमे यजमानस्य ब्रध्ने" इति । सोऽयं मन्त्रश्चोदकतोऽत्र प्राप्तः । तत्र दर्भैरिति जातिशब्दः, हरितैरिति गुणशब्दः । तत्र दर्भशब्दस्थाने पुण्डरीकशब्द ऊहनीय इत्युक्तन्यायात् सिद्धमेव । हरितपदस्थाने रक्तपदमूहनीयं न वेति संशये, प्रकृतौ दर्भशब्देनैव दर्भाणां प्रकाशनसिद्धेर्हरितशब्देन तदभिधान-

---

१. अग्निपदयुक्तमिति. क.

() गपुस्तके स्खलितोऽयं भागः.　　२. प्रकृतावग्नीषोमीय. क, ख.

मदृष्टार्थमिति विकृतावपि हरितवर्णलक्षणगुणो हरितपदेनाभिधातव्य इति नोह इति प्राप्ते, सिद्धान्तयति—

**जातिनैमित्तिकं यथास्थानम् ॥३॥**

जातिनिमित्तकदर्भशब्दो द्रव्ये, वर्णविशेषलक्षणगुणनिमित्तकहरितशब्दो गुणे इत्येवं यथास्थानमूहितव्यम्। प्रकृतौ दर्भशब्देन दर्भाणां स्मरणे वृत्तेऽपि हरितपदस्य गुणद्वारा द्रव्याभिधानस्य तत्स्मृतिदार्ढ्यार्थत्वान्नादृष्टार्थता, कथञ्चिदपि दृष्टसम्भवेऽदृष्टकल्पनायोगात्। ततश्चात्रापि पुण्डरीकाण्यपि स्वगुणद्वारा प्रकाशयितुं रक्तपदमागमयितव्यम्। 'पुण्डरीकं सिताम्भोजम्' इत्यमरकोशस्तु वैदिकसार्वभौम भाष्यवार्तिककारादिप्रयोगविरोधादुपेक्ष्यः॥

इति द्वितीयं मौद्गचरौ हरितपदस्थाने रक्तपदोहाधिकरणम् ॥२॥

अथ पूर्वाधिकरणशेषः प्रस्तूयते—'अग्नये जुष्टम्'' इत्यग्निपदस्य[1] सौर्यादिषु भवत्यूह इति स्थितम्। तत्र विमतमुपक्षिपति--

**अविकारमेकेऽनार्षत्वात् ॥४॥**

'अग्नये जुष्टम्'' इत्यग्निपदस्य सौर्यादिष्वविकारम्—अनूहमेके मन्यन्ते। कुतः? अनार्षत्वात्--ऊह्यमानपदस्य 'अनाम्नातेष्वमन्त्रत्वम्' इति द्वैतीयीकन्यायेन() अवैदिकतया तद्युक्तस्याप्यग्नये जुष्टमित्यादिवाक्यस्यामन्त्रत्वापत्तेः। न च मन्त्रसमाम्नायेऽग्निपदस्यापूर्वीयदेवतापदरूपविवक्षया प्रयुक्तत्वात् सूर्यादिपदमप्याम्नातप्रायमेवेति वाच्यम्, एवं सति सूर्यादिपदस्यापि कदाचिदध्ययनापत्तेः। ततश्च स्वरूपविवक्षयैवाग्निपदं प्रयुक्तमिति, तस्य सौर्यादिष्वपि चोदकप्राप्तस्यैन्द्रीन्यायेन() गौण्या वृत्त्या सूर्यादिप्रकाशकतासम्भवान्नोहः॥

इतोऽप्येवमित्याह--

**लिङ्गदर्शनाच्च ॥५॥**

---

१. शब्दस्य. क.

प्रकृतावग्नीषोमीयपशौ "अग्नीषोमाभ्यां छागस्य वपाया मेदसोऽनुब्रूहि" इति मन्त्राम्नाने सत्यपि वैकृते आग्नेये सवनीयपशौ "अग्नेः च्छागस्य वपाया मेदसोऽनुब्रूहि" इति पठ्यते। तदिदं विकृतावूहाश्रयणेऽनर्थकं स्यात्। अतोऽपि नोहः। किञ्चाग्नीषोमीयपशौ श्रूयते-"यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्, यदि द्वौ एतौ ते वायू इति, यदि बहूनेते ते वायव इति ब्रूयात्" इति। अत्राप्यूहेनैव सिद्धेरेतौ ते इत्यादिपाठो व्यर्थस्स्यात्। अतोऽपि नोहः॥

तदेतद्भिमतं प्रतिक्षिपति—

**विकारो वा तदुक्तहेतुत्वात् ॥६॥**

वाशब्दोऽवधारणे। विकारः-ऊहः स्यादेव। कुतः? तदुक्तहेतुत्वात्-तस्यार्थस्य 'अर्थे चाकार्यत्वात्' इत्युक्तन्यायकत्वात्। अग्निपदं हि न स्वरूपविवक्षया प्रयुक्तं मन्त्रे[१], किन्त्वपूर्वीयदेवतापदरूपविवक्षयैव। ततश्च सूर्यादिशब्दस्यापि प्रकृतावपूर्वीयदेवतापदरूपेण पठितत्वात् नानार्षत्वम्। [२]परन्तु विशिष्यापठितस्य सूर्यादिदेवतापदविशेषरूपस्य व्याकरणाद्यनुरोधेन प्रक्षेप्तुं शक्यत्वाल्लौकिकत्वव्यवहारः। अतः "मा भेर्मा संविक्त्थाः" इत्यत्र भेरिति विक्त्था इति छान्दसे पदे मा भैष्टं, मा संविजिध्वमित्यूह्यते। न चापूर्वीयदेवतावाचिपदरूपस्यैव विवक्षितत्वे "अग्नये जुष्टम्" इत्यत्र सूर्यादिपदस्यापि कदाचिदध्ययनापत्तिरिति वाच्यम्, यस्य कस्यचिदेवतावाचिपदस्याध्ययने प्रसक्ते प्रकृतावाग्नेयचोदनायामग्निशब्दस्यैव श्रुतत्वेन तस्यैव तत्र देवतावाचितया प्रथमोपस्थितातिक्रमे[३] कारणाभावेन तस्यैवाध्येतव्यत्वात्॥

अथ यदुक्तम् "अग्नये छागस्य" इति क्वचिद्विकृतावूह[४]दर्शनादितरत्र नोह इति, तत्राह-

**लिङ्गं मन्त्रचिकीर्षार्थम् ॥७॥**

ऊहादेव सिद्धे "अग्नये छागस्य" इति वचनम् अनूहे लिङ्गत्वेन यदुदाहृतम्, तदग्निपदघटितमन्त्रस्याध्ययनचिकीर्षार्थम्। अध्ययनलाभार्थमिति यावत्। अन्यथा वैकृतसूर्यादिशब्दवदग्निशब्दस्याप्यध्ययनं न स्यात्। अतो न लिङ्गमेतत्॥

"यदि द्वौ" इत्याद्यपि न लिङ्गमित्याह—

**नियमो वोभयभागित्वात् ॥८॥**

---

१. मन्त्रैः. ग.
२. किन्तु. क.
३. अतिक्रमणे ग.
४. विधानात्. ग.

वाशब्दोऽवधारणे। स्यादेवोहः। ''यदि द्वौ'' इत्यादिवाक्याभ्यान्तु नियमो विधीयते। प्रकृतौ 'एतावेते' इति मन्त्रौ मा भूतामिति नियमनार्थं तयोर्विधानम्। अन्यथा उभयभागित्वात्-भागः भजनं प्राप्तिः अस्यास्तीति भागि प्रसक्तम्, एतावेते इति मन्त्रयोर्विधानाभावे प्रकृतावेकयूपस्पर्शने एतावेते इति मन्त्रयोरपि प्रसक्तत्वादिति यावत्। प्रकृतौ ह्यग्नीषोमीये पशौ ''एष ते वायो एतौ ते वायू एते ते वायव इति त्रयोऽपि मन्त्राः पठिताः। ''यद्येकमुपस्पृशेदेष ते वायो इति ब्रूयात्'' इत्येतावत्युच्यमाने प्रकृतावेकयूपस्पर्शने एतौ ते, एते ते इत्यपि मन्त्रौ प्रकरणपाठसार्थक्याय पाशाधिकरणन्यायेन() प्रसज्येयाताम्। तन्माभूत्। एकादशिन्यां द्विबहुयूपस्पर्शन एव द्विबहुवचनयुक्तौ मन्त्रौ यथा स्यातामित्येदतदर्थं तदुभयविधानमिति नैतदप्यनूहे लिङ्गमिति भाष्यम्।

ननु मन्त्रसमाम्नाये ''एष ते वायो'' इत्येव पठ्यताम्, न तु द्विबहुवचनयुक्तौ मन्त्रौ। ब्राह्मणेन च ''यद्यूपमुपस्पृशेदेष ते वायो इति ब्रूयात्'' इत्येव विधीयताम्। द्विबहुयूपस्पर्शने तु ऊहत एव द्विबहुवचनयुक्तौ मन्त्रौ भविष्यत इति तदुभयविनियोगविधिर्व्यर्थ एव स्यादिति भवत्यनूहे लिङ्गमित्यत्राप्येतदेवोत्तरम्—

## नियमो वोभयभागित्वात् ॥

इति। नियमः नियमनं विधानमिति यावत्। ऊहसत्वेऽपि '[1]द्विवचनबहुवचनयुक्तमन्त्रयोर्द्विबहुयूपस्पर्शने विधानमावश्यकम्। कुतः? उभयभागित्वात्-द्वियूपस्पर्शने बहुयूपस्पर्शने चोभयस्मिन्नावृत्तेरेव प्रसक्तत्वादित्यर्थः। यद्येकमुपस्पृशेदित्यादिविधयो लौकिके यूपस्पर्शने पुरुषार्थतया प्रायश्चित्तविधानार्था इत्यग्रिमाधिकरणे वक्ष्यते। प्राकृतस्य हि विकृतावूहः। न चात्र प्रकृतिविकृतिभावोऽस्ति। ततश्च ''यद्येकमुपस्पृशेत्'' इत्येतावत्युक्ते द्विबहुयूपस्पर्शने प्रतिनिमित्तं नैमित्तिकावृत्तिरिति, प्रतिप्रधानं गुणावृत्तिरिति च न्यायेन प्रतियूपस्पर्शनम् एष ते वायो इत्यस्यावृत्तिः प्रसज्येत। अतस्तद्विधानमावश्यकमिति न तदप्यनूहे लिङ्गम्। तस्मात् ''अग्नये जुष्टम्'' इत्यग्निशब्दस्य भवति विकृतावूहः। 'नियमो वा तथाविधत्वात्' इति क्वचित्पाठः।

---

१. द्विबहुवचन. ग.

तथेत्यनन्तरमपिशब्दोऽध्याहार्यः। तथापि विकृतावूहसत्वेऽपि 'द्विवचनबहुवचनयुक्तयोरनयोर्मन्त्रयोरुक्तरीत्या विधेयत्वावश्यम्भावादूहस्य नियम इति कथञ्चिद्व्याख्येयम् इति पूर्वतराधिकरणशेषः ॥

इति प्रथमाधिकरणशेषः ॥

३

पूर्वाधिकरणे "यद्येकं यूपमुपस्पृशेत्" इत्याद्युदाहृतम्। किमत्र यूपोच्छ्रयणादिकालीनयूपस्पर्शने निमित्ते वैदिके नैमित्तिकविधिः? उत रागप्राप्ते लौकिके यूपस्पर्शने? इति संशयः। तत्र प्रकृतावग्नीषोमीये पशौ एकयूपके एकवचनयुक्तमन्त्रस्य प्रकरणाद्वैदिकोपस्पर्शननिमित्तकत्वनिश्चये सति तदवैरूप्याय [2]द्विवचनबहुवचनयुक्तमन्त्रयोरप्यनेकयूपकक्रतुनिविष्टयोर्वैदिकनिमित्तकत्वमेव युक्तमाश्रयितुम्, लौकिकनिमित्तकत्वे फलान्तरकल्पनापाताच्च। वैदिकनिमित्तकत्वे तु, क्रत्वङ्गतया क्रतुफलेनैव फलवत्वान्न फलान्तरकल्पनम्। तस्माद्वैदिकनिमित्तकत्वमेवेति प्राप्ते, सिद्धान्तयति—

**लौकिके दोषसंयोगादपवृक्ते हि चोद्यते निमित्तेन प्रकृते स्यादभागित्वात् ॥९॥**

लौकिके यूपस्पर्शन एव निमित्ते नैमित्तिकमिह विधीयते। कुतः? दोषसंयोगात्- "यूपो वै यज्ञस्य दुरिष्टमामुञ्चते यद्यूपमुपस्पृशेदरिष्टं यज्ञस्यामुञ्चते। तस्माद्यूपो नोपस्पृश्यः" इति दोषसङ्कीर्तनपूर्वकं यूपस्पर्शनं प्रतिषिध्य, "इष्टे यद्यूपमुपस्पृशेत्" इत्यादिना तद्दोषनिर्घातार्थं प्रायश्चित्तं पुरुषार्थमाम्नातम्। अतो लौकिक इति गम्यते। यज्ञस्य दुरिष्टम्-विध्यपराधजं दोषम् स्वस्मिन्नामुञ्चते सङ्क्रामयति। यूपोऽपि स्वस्य स्प्रष्टरि दोषं सङ्क्रामयेदित्यर्थः। ननु "वज्रो वा आज्यं तत्स्पृष्ट्वा सोममुपस्प्रक्ष्यन्नप उपस्पृशेत्" इतिवद् वैदिके निमित्ते क्रत्वर्थमेवेदं प्रायश्चित्तमस्तु[3]। तत्राह अपवृक्ते हीत्यादि। हि यतः, इष्टे-यद्यूपमित्यादिना समाप्ते क्रतौ, नैमित्तिकं यूपस्पर्शने निमित्ते विधीयते। अतः प्रकृते वैदिके यूपोपस्पर्शने नैमित्तिकमिदं न

१, २. द्विबहुवचन. ग.

१. अस्त्विति, क.

स्यात् । ( ननु 'सा लिङ्गादार्त्विज्ये स्यात्' इति नाश्वप्रतिग्रहवद् वैदिकमेव यूपस्पर्शनं निमित्तं स्यादित्यत आह-- )अभागित्वादिति । अभागित्वात्-क्रतोर्बहिः वैदिकोपस्पर्शनस्याप्रसक्तत्वेन प्रतिषेधानर्हत्वात् । तस्माद् बहिःक्रतु लौकिक एव, यूपोपस्पर्शने प्रायश्चित्तमिदमिति श्रुतिसूत्रभाष्याक्षरानुसारी पन्थाः । क्रतुमध्येऽप्युच्छ्रयणाञ्जनादियूपकार्यकालान्यकालेऽविहितयूपस्पर्शनेऽपि नैमित्तिकमेतदिति तु वार्तिकच्छाया लक्ष्यमाणापि श्रुतिसूत्रभाष्याक्षराननुगुणत्वादुपेक्ष्या ॥

इति तृतीयं लौकिकयूपस्पर्शे प्रायश्चित्तविधानाधिकरणम् ॥३॥

४

अग्नीषोमीये पशौ कचिच्छाखायां [1]पशुपाशविमोचनमन्त्रः श्रुतः--"अदितिः पाशं प्रमुमोक्तु" इति । शाखान्तरे तु "अदितिः पाशान्" इति पठ्यते । तयोश्च विकल्पेन समावेशोऽग्रिमाधिकरणे वक्ष्यते । अस्ति च विकृतिर्द्विपशुका "मैत्रं श्वेतमालभेत, वारुणं कृष्णमपाञ्चौषधीनाञ्च सन्धावन्नकामः" इति ।[2] तत्रैतौ मन्त्रौ चोदकतः प्राप्तौ । तत्र संशयः किमेकवचनान्तपाशमन्त्रस्य निवृत्तिः, बहुवचनान्तपाशमन्त्रस्त्वनूहेन प्रवर्तते ? उत बहुवचनान्तपाशमन्त्रस्य निवृत्तिरेकवचनान्तपाशमन्त्रस्तूहेन प्रवर्तते ? अथवैकवचनान्तपाशमन्त्रो द्विवचनेन ऊह्यः, बहुवचनान्तपाशमन्त्रस्त्वविकृत एव प्रवर्तते ? यद्वा उभावपि मन्त्रौ द्विवचनेनोहनीयौ ? इति । [3]तत्र प्रथमपक्षयति—

## अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य ॥१०॥

प्रकृतौ तावदेकपशौ पाशैकत्वमस्तीति तत्रैकवचनान्तः पाशशब्दस्समवेताभिधायी । स च विकृतौ द्विपशौ पाशद्वित्वं नाभिधातुं शक्नोतीति निवर्तते । बहुवचनान्तपाशशब्दस्तु प्रकृतौ अन्यायः---'बहुषु बहुवचनम्' इति शास्त्रमर्यादा यस्मिन्नास्ति तथाविधः । बहुवचनं तत्राविवक्षितार्थकमिति यावत् । अतो बहुवचनस्य प्रकृतावसमवेतार्थकतया विकृतावपि पाशद्वित्वेऽविकारेण-अनूहेन बहुवचनान्तपाशमन्त्रः प्रवृत्तिमर्हति । ननु पाशानिति बहुवचनं विवक्षितार्थकमेवास्तु । न चैवं सति पाशैकत्वात्प्रकृतौ कथं तत्समावेश इति वाच्यम् । अत एव

१. प्रमोचन. ग. २. तत्र तौ. क.
३. ततः. क, ख, ग. () गपुस्तके भागोऽयं स्खलितः.

पूषानुमन्त्रमन्त्रवद् बहुपशुविकृतावुत्कर्षसम्भवात्[1]। तत्राह–अदृष्टप्रतिघातित्वादिति। प्रकृतौ पाशैकत्वे बहुवचनस्याग्निमाधिकरणरीत्या अदृष्टप्रतिहतिकत्वात्। ननु प्रकृतौ बहुवचनस्यासमवेतार्थकत्वेऽपि, विकृतौ पाशद्वित्वे द्विवचनेनोहः कुतो न स्यादित्यत आह–अविशेषाच्च तेनास्येति। अस्य च वैकृतपाशद्वित्वस्य तेन–प्राकृतपाशैकत्वेन, अविशिष्टत्वात्–साम्यात्। प्रकृतौ पाशैकत्वस्य बहुवचनेनाभिधानाभावेन विकृतावपि पाशद्वित्वस्याभिधानानपेक्षत्वादिति यावत्। न च पाशद्वित्वे[2] बहुवचनान्तमन्त्रस्य भवत्वनूहः, प्रकृतावसमेताभिधायित्वात्। एकवचनान्तपाशमन्त्रस्य तु स्यादेवोहात् प्रवृत्तिरिति वाच्यम्। प्रत्यक्षपठितबहुवचनान्तमन्त्रत एवाभिधानसम्भवे एकवचनान्तपाशमन्त्रस्य विकाराश्रयणायोगात्। तस्मात् पाशद्वित्वे एकवचनान्तपाशमन्त्रस्य निवृत्तिः। बहुवचनान्तपाशमन्त्रस्त्वविकारेणैव प्रवर्तेत इति प्रथमः पक्षः॥

अथ द्वितीयपक्षमुपक्षिपति–

### विकारो वा तदर्थत्वात्॥ ११॥

वा शब्दस्सम्भावनायाम्। सूत्रमिदमावर्तते। एकवचनान्तपाशमन्त्रस्य विकारः–द्विवचनेनोहस्स्यात्। कुतः? तदर्थत्वात्–मन्त्रस्य समग्राभिधानार्थत्वात्। पाशमिति हि सङ्ख्याविशिष्टपाशोऽभिधीयते, न तु पाशमात्रम्। समग्राभिधानसम्भवे विकलाभिधानस्यान्याय्यत्वात्। अतो द्वित्वसङ्ख्याविशिष्टपाशप्रकाशनायैकवचनान्तपाशशब्दो द्विवचनेनोहमर्हति। बहुवचनान्तपाशमन्त्रस्य तु विकारः–निवृत्तिस्स्यात्। कुतः? तदर्थत्वात्–बहुवचनान्तपाशशब्दस्याविवक्षितसङ्ख्याकपाशमात्रवाचित्वात्। तस्मादेकवचनान्तपाशमन्त्रस्य द्विवचनेनोहः, बहुवचनान्तपाशमन्त्रस्य तु निवृत्तिरिति द्वितीयः पक्षः॥

अथ तृतीयपक्षयति–

### अपि वा त्वन्यायसम्बन्धात् प्रकृतिवत्परेष्वपि यथार्थं स्यात्॥ १२॥

पूर्वस्मिन् द्वितीयपक्षे एकवचनान्तपाशमन्त्रस्य द्विवचनेनोहात् प्रवृत्तिरित्येतद् गृह्णीमः। बहुवचनान्तपाशमन्त्रोऽपि प्रवर्तेत इति ब्रूमः। मुख्यवृत्त्यान्यायस्य-असमवे-

---

१. बहुपाश. क, विकृतौ प्रकर्ष. ग. २. द्वये. क.

तार्थकस्यापि बहुवचनस्यावयवबहुत्वाभिप्रायेण प्रकृतौ सम्बन्धाद्--एकस्मिन्नपि[१] पाशे प्रयुक्तत्वात्। अतः प्रकृतिवत्परेष्वपि-विकारेष्वपि द्विपशुषु चोदकाबाधाय बहुवचनान्तपाशमन्त्रस्यानूहेन, एकवचनान्तपाशमन्त्रस्य तु द्विवचनेनोहेनेत्येवं यथार्थं-प्रसिद्धार्थानतिक्रमेणोभयोरपि मन्त्रयोर्विकल्पेन प्रवृत्तिस्स्यात् ॥

अथ सिद्धान्तयति--

**यथार्थन्त्वन्यायस्याचोदितत्वात् *छन्दसि यथादृष्टम् ॥ १३ ॥**

तुरवधारणे। एकवचनान्तपाशमन्त्रः बहुवचनान्तपाशमन्त्रश्च, द्विपशौ यथार्थं-पाशद्वित्वानुसारेण द्विचनोहात् प्रवर्तते। न च प्रकृतावेकपशौ बहुवचनस्यावयवबहुत्वाभिप्रायकत्वाद् द्विपशावपि तथा सम्भवान्नोह इति वाच्यम्। तथा सत्येकपशावपि विकृतौ पाशैकत्वे बहुवचनान्तपाशमन्त्रस्य प्रसङ्गात्। न चैवं सति प्रकृतावेकस्मिन् बहुवचनस्यावयवबहुत्वाभिप्रायकत्वाभावेन निर्देशमात्रार्थतया विवक्षितार्थत्वाभावात् कथं तस्य विकृतावूह इति वाच्यम्। प्रकृतौ बहुवचनस्य विवक्षितार्थत्वाभावेऽपि विकृतौ केवलप्रकृतेः प्रयोगानर्हत्वेन तत्साधुत्वाय द्विचनोहस्यावश्यकत्वात्। न च प्रकृतावेकस्मिन्निव विकृतौ द्वयोरपि बहुवचनस्य साधुत्वं किं न स्यादिति वाच्यम्। छन्दसि ह्येकस्मिन् बहुवचनस्य प्रयोगदर्शनेन 'दृष्टानुविधिश्छन्दसि' इति वैयाकरणमर्यादया सुब्विभक्त्याश्रयणेन प्रकृतावेकत्वे बहुवचनस्य साधुत्वं [२]सम्भवति। ( तमेव च प्राकृतं प्रयोगमादायैकपशुकविकृतावपि सम्भवति साधुत्वम्। द्वयोस्तु बहुवचनस्य प्रयोगादर्शनाद् व्यत्ययाश्रयणे किञ्चिदपि प्रमाणं नास्तीत्यसाधुत्वमेव स्यादिति द्विवचनोह आवश्यकः। ननु चोदकबलेन द्वित्वेऽपि ) बहुवचनस्य प्राप्त्या प्रत्यक्षप्रयोगाभावेऽपि चोदकापादितः प्रयोग एव व्यत्यये प्रमाणमित्यत आह--अन्यायस्याचोदितत्वादिति। प्रकृतौ बहुवचनस्य 'बहुषु बहुवचनम्' इति व्याकरणमर्यादापेतस्य समवेतार्थकत्वरूपेण विकृतौ द्विपशौ चोदकतः प्राप्तत्वाभावादित्यर्थः। चोदको हि न मन्त्रं स्वरूपेण प्रापयति, येन

---

१. अपि. नास्ति. क.

२. भवति. क.

*भाष्ये पृथक्सूत्रमिदं परिगणितम्.

( ) चिन्हान्तर्गतो भागो गपुस्तके स्खलितः.

द्वित्वेऽपि[1] बहुवचनप्रयोगश्शास्त्रीयस्स्यात्[2]। किन्त्वपूर्वप्रकाशकत्वरूपेण। तत्र च यदि प्राकृतो मन्त्रस्तथाविधवैकृतपाशप्रकाशने समर्थः, तदा तद्रूप एव विकृतावुपादेयः। अन्यथा तत्समर्थरूपान्तरेणोपादेयः। ततश्च स्वायत्ते वैकृतशब्दप्रयोगे सति बहुवचनस्य द्वित्वेऽसाधुत्वात्। प्रत्युत प्रकृतापूर्वीयपाशप्रकाशकमन्त्रप्रापकचोदकस्य द्विवचनप्रयोग एव तात्पर्यान्नोह एव युक्तः। तस्मात्पाशद्वित्वे एकवचनान्तपाशमन्त्रस्य बहुवचनान्तपाशमन्त्रस्य[3] च द्विवचनोहात् प्रवृत्तिरिति स्थितम्। वस्तुतस्तु पाशमन्त्रः पशुपाशप्रमोचने करणत्वेन विनियुक्तः। तेन च मन्त्रेण द्वौ [4]पशुपाशौ युगपत् प्रमोक्तुं न शक्येते। ततश्च पर्यायेण प्रयोज्यतया युगपत् पाशद्वयाभिधानाभावात् कथमिदमूहोदाहरणम्। उदाहरणान्तरमन्वेषणीयम्॥

इति चतुर्थं पाशमन्त्रयोर्विकृतावूहाधिकरणम्॥४॥

५

तदेवं पूर्वस्मिन्नधिकरणे "अदितिः पाशान्" इति बहुवचनान्तपाशमन्त्रस्य प्रकृतावग्नीषोमीयपशौ समावेशं सिद्धवत्कृत्य विकृतौ द्विपशौ तदूहस्सिद्धान्तितः। इदानीं तस्य बहुवचनान्तपाशमन्त्रस्य प्रकृतौ समावेशोऽस्ति [5]नास्तीति चिन्त्यते। नास्ति प्रकृतौ तस्य समावेश इति ब्रूमः। तत्र पाशस्यैकत्वेन बहुवचनस्य समावेशायोगात्। ततश्च यत्र बहुपशौ विकृतौ बहवः [6]पशुपाशास्सन्ति, तत्रैव लिङ्गाद् बहुवचनान्तपाशमन्त्र उत्कृष्यते। एकवचनान्तपाशमन्त्र एव तु प्रकृतौ प्रवर्तत इति प्राप्ते, सिद्धान्तयति--

**विप्रतिपत्तौ विकल्पस्स्यात् समत्वाद्गुणे त्वन्याय्यकल्पनैकदेशत्वात् ॥१४॥**

प्रकृतौ पाशैकत्वे पाशानिति बहुवचनस्य विप्रतिपत्तौ-विरोधे सत्येकवचनान्तपाशमन्त्रेण बहुवचनान्तमन्त्रस्य विकल्पस्स्यात्। कुतः? समत्वात्—प्रमोचनक्रियायां कर्मत्वेन पाशाभिधानस्योभयोरपि मन्त्रयोरविशिष्टत्वात्। ननु बहुवचनस्य

---

१. अपि. नास्ति. क.
२. स्यादित्यर्थः. क.
३. शब्दस्य. ग.
४. पशु. नास्ति. क.
५. न वेति. क.
६. पशु. नास्ति. क.

कथं प्रकृतौ पाशैकत्वे निवेशः, तत्राह—गुणे त्वन्याय्यकल्पनैकदेशत्वादिति। गुणे तु वस्तुतो बहुत्वसङ्ख्यात्मकगुणवाचिनि तु[1] बहुवचने अन्यायकल्पना—अन्यायेति भावप्रधानो निर्देशः। 'बहुषु बहुवचनम्' इति व्याकरणमर्यादातिलङ्घनेनान्याय्यत्वस्याविवक्षितार्थकत्वलक्षणस्य कल्पना उचिता। पाशानिति पदेन हि पाशः कर्मत्वं बहुत्वमिति त्रयं प्रतीयते। तत्र सङ्ख्या प्रादिकार्थश्च[2] मिथोऽनन्वितौ परस्परवार्तानभिज्ञावेव कारकेणान्वीयेते। ततः प्रातिपदिकार्थे सङ्ख्या अरुणैकहायनीन्यायेन पार्ष्ठिकान्वयं लभत इति पश्वेकत्वाधिकरणे ग्रहैकत्वाधिकरणे च स्थितम्। तत्र कारकापेक्षया प्रातिपदिकार्थस्य गुणत्वेऽपि सङ्ख्यापेक्षया आश्रयत्वात् प्रधानत्वमेव। सङ्ख्या च प्रातिपदिकार्थमाश्रयतीति तद्गुण एव। किञ्च प्रातिपदिकार्थः प्रथमोपस्थितः। सङ्ख्या तु चरमोपस्थिता। ततश्च बहुत्वगुणवाचिबहुवचनं विकृतावुत्कृष्यमाणं न प्रातिपदिकोत्कर्षाय प्रभवति। नापि प्रातिपदिकं विना कृतं बहुवचनमात्रं विकृतावुत्कर्षमर्हति। विभक्त्यन्तपदस्यैव प्रयोगार्हतया बहुवचनमात्रस्य च पदैकदेशत्वेन प्रयोगानर्हत्वात्। प्रातिपदिकन्तु प्रकृतौ निविशमानं सद् बहुवचनमविवक्षितार्थं कृत्वा निवेशयति, न तु बहुवचनं विना तत्र निविशते। केवलप्रकृतेरपि पदैकदेशत्वेन प्रयोगानर्हत्वात्। न च प्रकृतावेकस्य पाशस्योन्मोचनीयतया एकत्वस्मृत्यभावेऽनुष्ठानासिद्धिः, एकत्वे बहुवचनस्य लक्षणैव किं न स्यादिति वाच्यम्। प्रातिपदिकार्थस्मृतौ द्वित्वादिवदन्यसापेक्षत्वाभावेन स्वारसिकत्वादेवैकत्वस्मृत्युपपत्तौ क्लेशेन साधनीयाया बहुवचनलक्षणाया अयुक्तत्वात्। न च बहुवचनस्याविवक्षितार्थत्वे कथं पूर्वाधिकरणे द्विपशौ तदूहप्रतिपादनमिति वाच्यम्, तत्रैव दत्तोत्तरत्वादिति दिक्॥

इतोऽप्येवमित्याह—

**प्रकरणविशेषाच्च॥१५॥**

प्रकृतावग्नीषोमीयपशौ प्रातिपदिकार्थः पाशो विद्यते। बहुवचनार्थस्तु पाशबहुत्वं विकृतौ। अतः प्रकरणबलादपि प्रातिपदिकेन बहुवचनमविवक्षितार्थं कृत्वा आकृष्यते, न तु प्रातिपदिकं बहुत्वेनोत्कृष्यते। तथा सति बहुवचनान्त-

---

१. तु. नास्ति. क, ख. २. प्रातिपदिकश्च. क.

पाशमन्त्रस्य समस्तस्यैवात्यन्तं प्रकरणपाठानर्थक्यात् तद्वरं बहुवचनमात्रस्याविवक्षितार्थत्वाश्रयणम् ॥

अत्र[1] शङ्कते[2]—

*उत्कर्षो वा ग्रियज्ञवत् ॥१६॥

वा शब्दश्शङ्कायाम्। "युवं हि स्थ स्वर्पतीति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्" इति द्वयोर्यजमानयोर्यज्ञे श्रुतस्य प्रतिपद्विधेरिव प्रकरणादुत्कर्षः किं न स्यात्? ॥

समाधत्ते—

अर्थाभावात्तु नैवं स्याद् गुणमात्रमितरत् ॥१७॥

तुर्वैषम्ये। प्रकृतौ ज्योतिष्टोमे यजमानद्वित्वरूपार्थस्याभावाद् बहुयजमानायां विकृतौ प्रतिपद्विधानमुत्कृष्यत इत्येवं युक्तं स्यात्। इह तु बहुत्वरूपगुणमात्रं नास्ति। इतरत्तु-प्रातिपादिकार्थः कर्मत्वञ्चेति द्वयमस्ति। न चैकेन बहुत्वेनोत्कृष्यमाणेनानेकोत्कर्षो युक्तः ॥

पुनराशङ्क्य[3] परिहरति—

द्यावोस्तथेति चेन्नोत्पत्तिशब्दत्वात् ॥१८॥

तथा-बहुवचनान्तपाशमन्त्रस्यानुत्कर्षे सति "द्यावापृथिव्योरहं देवयज्ययोरुभयोर्लोकयोः ऋध्यासम्" इति हुतानुमन्त्रणस्यापि प्रकृतौ पठितस्योत्कर्षो न स्यादिति चेत्तन्न; कुतः? उत्पत्तिशब्दत्वात्-उत्पत्तौ प्रकृतौ समवेतार्थकशब्दत्वात्। पाशशब्दस्य तदनुसारेण बहुवचनमप्यविवक्षितार्थकं भूत्वा तत्रैव निविशत इति युज्यते। उक्तस्तु हुतानुमन्त्रणमन्त्रः द्यावापृथिव्ययागप्रकाशनार्थः। नहि प्रकृतौ दर्शपूर्णमासयोर्द्यावापृथिव्ययागोऽस्ति। अतः प्रकृतावसमवेतार्थकत्वाद्विकृतौ तदुत्कर्ष इति वैषम्यम्। सूत्रे द्यावोरित्यस्य द्यावापृथिव्योरित्यर्थः। क्वचित्तु द्यावापृथिव्योरित्येव पाठो दृश्यते। वार्तिकेऽपि व्याकरणाधिकरणे द्यावोरित्येव पाठमनूद्य तत्रापशब्दं पूर्वपक्षे प्रतिपादितम् ॥

इति पञ्चमं पाशाधिकरणम् ॥५॥

---

१. तत्र. क. २. शङ्क्यते. ग. ३. अत्राशङ्क्य. क.

*भाष्ये सूत्रत्वेनेदं न समुद्धृतम्.

६

दर्शपूर्णमासयोरस्ति सम्प्रैषः—"पत्नीं सन्नह्य" इति। सन्ति च तत्रैकद्विबहुपत्नीकप्रयोगाः। तत्र द्विबहुपत्नीकप्रयोगयोः पत्नीशब्दो द्विवचनबहुवचनाभ्यामूहितव्यो न वेति संशयः। तत्रैकपत्नीकप्रयोगे तावदेकवचनं समवेतार्थकम्, न तु पाशानिति बहुवचनवत् सर्वथा प्रकृतावविवक्षितार्थकम्। तच्चैकवचनं सङ्ख्यावाचिविभक्तिरूपविवक्षयैव पठितम्। यथा "अग्नये जुष्टम्" इत्यत्राग्निपदं देवतावाचिरूपविवक्षया पठितम्, तद्वत्। ततश्चैकपत्नीकप्रयोगे पत्न्येकत्वस्य सङ्ख्यावाचिविभक्त्यभिहितत्वाद् द्विबहुपत्नीकप्रयोगयोरपि तद्द्वित्वबहुत्वयोस्सङ्ख्यावाचिविभक्त्या अभिधानाय द्विबहुवचनाभ्यामूहितव्यः पत्नीशब्द इति प्राप्ते, सिद्धान्तयति—

## अपूर्वे त्वविकारोऽप्रदेशात् प्रतीयेत ॥ १९ ॥

तुरग्निपदवैषम्ये। दर्शपूर्णमासयोस्तावत् प्रयाजादिधर्मा दर्शपूर्णमासमात्रशेषत्वविवक्षया पठिताः, न तु विकृतिसाधारण्येनापि। तथा सति प्रकृतिविकृतिभावोच्छेदापत्तेः। तथा च दर्शपूर्णमासयोरेव धर्मग्राहितया तत्र च "अग्नये जुष्टम्" इत्यग्निपदस्यापूर्वीयदेवतावाचित्वविवक्षयैव पठितत्वाद् विकृतावपि चोदकप्राप्ततन्मन्त्रेऽपूर्वीयदेवतावाचिपदेन वैकृतदेवताभिधानाय सूर्यादिपदोह इति युक्तम्। इहापि यदि पत्नीमित्यस्यैकपत्नीकप्रयोगमात्रशेषत्वविवक्षया पाठस्स्यात्, तदैकपत्नीकप्रयोगस्यैव धर्मग्राहितया तत्र चैकवचनस्य सङ्ख्यावाचित्वविवक्षया पठितत्वाद् द्विबहुपत्नीकप्रयोगयोरपि द्वित्वबहुत्वाभिधानाय द्विवचनबहुवचनोहस्सिध्येत्। नैवमस्ति; एकद्विबहुपत्नीकप्रयोगाणां त्रयाणमपि व्रीहियवप्रयोगवत् समानविधानतया पत्नीमित्यस्यैकपत्नीकप्रयोगमात्रशेषत्वविवक्षया अनाम्नातत्वेनैकपत्नीकप्रयोगस्य प्रकृतित्वाभावे सति सर्वप्रयोगार्थतयाम्नातस्य पत्नीमित्यस्य द्विबहुपत्नीकप्रयोगयोरपि प्रवृत्तेर्दुर्वारत्वात्। न च तत्र कथमेकवचनस्य ( समावेश इति वाच्यम्, 'पाशान्' इति बहुवचनवदविवक्षितार्थतया समावेशोपपत्तेः। न च प्रकृतौ पाशबहुत्वस्य ) सर्वथैवाभावाद् बहुवचनस्याविवक्षितार्थत्वेऽपि प्रकृते एकवचनस्यैकपत्नीकप्रयोगविषये समवेतार्थतया तदविवक्षानुपपत्तेः। द्विबहुपत्नीकप्रयोगयोः पत्नीमित्यस्य निवृत्तिरेव स्यादिति वाच्यम्। प्रयोगत्रयसाधारण्येन पाठबला-

() गपुस्तके भागोऽयं स्खलितः.

देवैकबचनस्य पत्न्येकत्वेऽप्यविवक्षितार्थकत्वाश्रयणाद् गुणभूतसङ्ख्यावचनानुसारेण प्रातिपदिकनिवृत्तेरन्यायत्वाच्च। प्रातिपदिकार्थप्राबल्यस्य पूर्वाधिकरणे प्रतिपादितत्वात्। न चाविवक्षितार्थकत्वे एकवचनस्य प्रयोगवैयर्थ्यं शङ्क्यम्, साधुत्वार्थत्वात्। न चैवं सति वचनान्तरं किं न स्यादिति वाच्यम्, [१]एकत्वे द्विबहुवचनयोरदर्शनात् जात्यभिप्रायेण प्रयोगत्रयेऽप्येकवचनोपपत्तेः। तथा चापूर्वे–प्रकृतौ पत्नीमित्यस्य द्विबहुपत्नीकप्रयोगयोरपि अविकारः–अनूहः प्रतीयेत। कुतः ? अप्रदेशात्। प्रयोगत्रयस्यापि समानविधानत्वेन द्विबहुपत्नीकप्रयोगयोरतिदेशाभावादिति सूत्रार्थः॥

इति षष्ठं दर्शपूर्णमासयोः द्विबहुपत्नीकप्रयोगे पत्नीमन्त्रस्यानूहाधिकरणम्॥६॥

७

"पत्नीं सन्नह्य" इति [२]प्राकृतः सम्प्रैषश्चोदकतो विकृतावपि द्विबहुपत्नीकप्रयोगयोः प्राप्तः। तत्र किं पत्नीशब्दो द्विवचनबहुवचनाभ्यामूहितव्यो न वेति संशयः। पाशानिति बहुवचनस्य प्रकृतावसमवेतार्थकत्वेऽपि विकृतौ द्वयोः पाशयोर्यथा द्विवचनोहः, तथा प्रकृतावविवक्षितार्थकत्वेऽप्येकवचनस्य द्वित्वबहुत्वयोर्विकृतावूहस्स्यादिति प्राप्ते, सिद्धान्तयति—

**विकृतौ चापि तद्वचनात्॥ २०॥**

चापीति समुदायः अप्यर्थे। यथा प्रकृतौ द्विबहुपत्नीकप्रयोगयोरेकवचनस्य न विकारः, तद्वद् विकृतावपि न विकारः। कुतः? तद्वचनात्––द्वित्वबहुत्वयोरप्युक्तरीत्या एकवचनसम्भवात्। प्रकृतौ ह्येकवचने एकद्विबहुपत्नीकप्रयोगसाधारण्येनाम्नानबलाच्छान्दसत्वेन द्वित्वबहुत्वयोः कल्प्यमानं साधुत्वमविशेषात् प्रकृतिविकृतिसाधारण्येन कल्प्यते, न तु प्रकृतिमात्रविषयतया। तथा च विकृतावप्येकवचनस्य द्वित्वबहुत्वयोरपि साधुत्वोपपत्तेर्नोहः। पाशानित्यत्र त्वेकस्मिन्पाशे बहुवच-

---

१. एकत्वे द्विबहुवचनयोरदर्शनात्. नास्ति. क.　　　　२. प्राकृतप्रैषः, ग.

नस्य प्रकृतौ प्रयोगबलात् विकृतावप्येकपाशे साधुत्वेनैवैकवचनस्योपपत्त्योहाभावेऽपि द्वयोर्बहुवचनस्य छान्दसप्रयोगादर्शनेनासाधुत्वात्, साधुत्वार्थं द्विवचनोह इति वैषम्यम् ॥

इति सप्तमं विकृतौ बहुपत्नीकप्रयोगे पत्नीमन्त्रानूहाधिकरणम् ॥ ७ ॥

८

ज्योतिष्टोमेऽग्नीषोमीयसवनीयानुबन्ध्यपशूनां सामानविध्यं पूर्वपक्षयित्वाग्नीषोमीयपशोरेव पशुधर्मग्राहित्वं सिद्धान्तितं तृतीयस्य षष्ठे 'तुल्यस्सर्वेषां पशुविधिः प्रकरणाविशेषात्' इत्यत्र। सन्ति च सवनीयाः पशवः—"आग्नेयमग्निष्टोम आलभते ऐन्द्राग्नमुक्थ्ये द्वितीयमैन्द्रं वृष्णिं षोडशिनि तृतीयं सारस्वतीं मेषीं चतुर्थीमतिरात्रे" इति। तत्र सवनीयपशूनां सामानविध्यपक्षे उक्थ्यषोडश्यतिरात्रेषु द्विबहुसवनीयपशुषु "दैव्याश्शमितारः" इत्याद्यध्रिगुप्रैषे "प्रास्मा अग्निं भरत" इत्यत्र चतुर्थ्येकवचनान्तस्य पशुवाचकस्येदंशब्दस्य [1]द्विवचनबहुवचनाभ्यामूहो भवति न वेति संशयः। तत्र समानविधानत्वे अस्मै इति पुल्लिङ्गनिर्देशात् सारस्वत्यां मेष्यामप्रवृत्तिरित्युक्तमत्रैव प्रथमपादे 'लिङ्गविशेषनिर्देशात् समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात्' इत्यत्र। तद्वद् बहुवचननिर्देशादुक्थ्यादिषु द्विबहुसवनीयपशुषु तन्निवृत्तिस्स्यादिति प्राप्ते, सिद्धान्तयति—

**अध्रिगुस्सवनीयेषु तद्वत् समानविधानाश्चेत् ॥ २१ ॥**

सवनीयपशूनां समानविधानत्वेऽध्रिगुसम्प्रैषगतः अस्मै इति शब्दः द्विबहुपत्नीकप्रयोगयोः पत्नीमितिवन्नोहनीयः। पुल्लिङ्गनिर्देशादस्मा इत्यस्य मेष्यामत्यन्तासम्भवादप्रवृत्तिर्युक्ता। एकवचनन्तु प्रतिव्यक्तिगतैकत्वाभिप्रायेण द्विबहुपशुष्वपि कथञ्चित्सम्भवान्नात्यन्तानुपपन्नमिति तत्प्रवृत्तिरविरुद्धा। पाशानिति बहुवचनमेकस्मिन् पाशेऽवयवाभिप्रायं तद्वत् ॥

इत्यष्टमं पशुधर्माणां सामानविध्यपक्षे प्रास्माशब्दस्यानूहाधिकरणम् ॥ ८ ॥

---

१. द्विबहु. ग.

९

दर्शपूर्णमासयोरश्रुतम्--"व्रीहिभिर्यजेत" इति । अस्ति च तत्र पुरोडाशप्रतिष्ठापनमन्त्रः--"तस्मिन् सीदामृते प्रतितिष्ठ, व्रीहीणां मेध सुमनस्यमानः" इति । श्रुतद्रव्यालाभे द्रव्यान्तरं प्रतिनिधातव्यमिति षष्ठस्य तृतीये स्थितम्—'आगमो वा चोदनार्थाविशेषात्' इति । तत्र व्रीह्यलाभे नीवारद्रव्ये प्रतिनिहिते "व्रीहीणां मेध" इति मन्त्रो 'नीवाराणां मेध' इत्यूहितव्यो न वेति संशयः । तत्र व्रीहीणामित्यस्य नीवारेष्वत्यन्तासम्भवात् तदभिधानाय 'नीवाराणां मेध' इत्यूहनीयमिति प्राप्ते, सिद्धान्तयति--

**प्रतिनिधौ चाविकारात् ॥ २२ ॥**

ल्यब्लोपे पञ्चमी । पत्नीमित्यस्य द्विबहुपत्नीकप्रयोगयोरिव व्रीहीणामित्यस्यापि प्रतिनिधावविकारमाश्रित्य प्रयोगः, न तूहः । सिद्धान्तप्रतिज्ञासूत्रमेतत् ॥

ननु द्विबहुपत्नीकप्रयोगयोरपि पत्नीति प्रातिपदिकस्य मुख्यवृत्त्या समवेतत्वात् तदनुसारेणैकवचनस्य कथञ्चित्प्रत्येकगतैकत्वाभिप्रायेण गौण्या वृत्त्या साधुत्वार्थतया प्रयोगसम्भव इति युक्तम् । व्रीहिशब्दस्य तु प्रातिपदिकस्यैव [1]'नीवारेष्वत्यन्तासम्भवः । न हि मुख्यवृत्त्या नीवारेषु व्रीहिशब्दोऽस्ति, नीवारेषु व्रीहित्वाभवात् । 'अर्थाभिधानसम्बन्धान्मन्त्रेषु शेषभावस्स्यात् तस्मादुत्पत्तिसम्बन्धोऽर्थेन नित्यसंयोगात्' इति तृतीय [ द्वितीया ] द्याधिकरणन्यायेन () व्रीहिशब्दस्य व्रीहिप्रयोगे मुख्यवृत्त्या लब्धसमवायस्यान्यत्रापि गौण्या प्रवृत्तेरनुपपत्तेः । नापि 'वचनात्त्वयथार्थमैन्द्री स्यात्' इति तदुत्तराधिकरणन्यायेन () गौण्याश्रयणसम्भवः, "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यैन्द्र्या गार्हपत्ये विनियोगवचनबलेन हि तत्र मन्त्रगतेन्द्रशब्दस्य गार्हपत्ये गौण्याश्रयणम् । न चात्र "व्रीहीणां मेध" इति 'नैवारं पुरोडाशमुद्वासयति' इति वचनमस्ति । तस्मादत्र नीवारेषु व्रीहिशब्दासम्भवात् तदभिधानाय नीवाराणामित्यूहनीयमिति पूर्वपक्षी प्रत्यवतिष्ठते--

**अनाम्नानादशब्दत्वमभावाच्चेतरस्य स्यात् ॥ २३ ॥**

---

१. नैवारेषु. ग.

व्रीहिमन्त्रस्य नैवारपुरोडाशोद्वासने अनाम्नानात्—विधानाभावाद्, अशब्दत्वम्—व्रीहिशब्दघटितमन्त्रवत्वं गौण्या न सम्भवति। इतरस्य-नीवारद्रव्यस्य[1] व्रीहित्वाभावाच्च न मुख्यया वृत्त्या तत्सम्भवः[2]। अतो भवेदूह इत्यर्थः। भाष्ये तु यदि मन्त्रे व्रीहिशब्दानाम्नानं स्यात्, यदि च नेदं नीवाराख्यं स्यात्, तदा भवेदनूहः। नेदमुभयमस्ति। तस्मादभिधानसिद्धये ऊहितव्यो नीवारशब्द इति क्लिष्टं योजितम्। तदेतन्नाक्षरपथमारोहतीत्युपेक्ष्यम्॥

अथ सिद्धान्ती स्वाशयमाविष्करोति—

**तादर्थ्याद्वा तदाख्यं स्यात् संस्कारैरविशिष्टत्वात्॥ २४॥**

नीवारगतव्रीह्यवयवजातमेव व्रीहिशब्दप्रतिपाद्यं स्यात्। कुतः? तादर्थ्यात्—व्रीहिशास्त्रे व्रीहिशब्दस्य व्रीह्यवयवपरत्वात्। [3]व्रीहिशब्दो हि आकृत्यधिकरणन्यायेन [4]जातिपरः। व्रीहित्वस्य चावहननादिप्रणाड्या यागसाधनत्वासम्भवात्। तत्परिच्छिन्नव्रीहितदवयवतण्डुलपिष्टप्रणाडिकया [5]यागसाधनत्वं वाच्यम्। ततश्च व्रीह्यवयवानां नीवारगतानामपि व्रीहिगतैस्तदवयवैस्संस्कारैः—संस्कार्यैः व्रीहिशब्दस्मार्यतया अविशिष्टत्वान्न भवत्यूहः॥

ननु नीवारेषु व्रीह्यवयवानुस्यूतौ किं प्रमाणम्? तत्राह—

**उक्तश्च तत्त्वमस्य॥ २५॥**

अस्यार्थस्य तत्त्वम् प्रमाणानुयायित्वं विस्तरेणोक्तं षष्ठस्य तृतीये 'सामान्यं तच्चिकीर्षा हि' इत्यत्र॥

इति नवमं नीवारादिप्रतिनिधिप्रयोगे व्रीह्यादिपदानामनूहाधिकरणम्॥९॥

१०

अस्त्यग्नीषोमीयपशावध्रिगुर्नाम प्रैषः। "दैव्याश्शमितारः, उत मनुष्या आरभध्वम्" इत्यादिः। तत्र पठ्यते—"उदीचीनामस्य पदो निधत्तात्, सूर्यं चक्षुर्गमयतात्, वातं प्राणमन्ववसृजतादिशश्श्रोत्रम्" इत्यादि। अस्य पशोस्संज्ञप्यमानस्य

१. शब्दस्य. क.
२. अत्यन्तसम्भवः. ग.
३. व्रीह्यादिशब्दाः क.
४. जातिपराः. क.
५. याग. नास्ति. ग.

पदः-पादान् उदग्ग्रान् निधत्तात्। चक्षुरिन्द्रियं सूर्यं गमयतात्—तेनैकीकुरुत संज्ञपनेन। प्राणाख्यं नासिकावायुं भौतिकवातमनु तं लक्षीकृत्य अवसृजतात्—तेनैकीकुरुत। श्रोत्रेन्द्रियं दिशोऽनु अवसृजत—ताभिरेकीकुरुतेत्यर्थः। तत्र द्विबहुपशुषु चक्षुःप्राणश्रोत्रशब्दा द्विवचनबहुवचनाभ्यामूहितव्या न वा इति संशयः। द्विबहुपशुषु चक्षुरादीनामनेकत्वाच्चक्षुरित्याद्येकवचनेन तदभिधानासम्भवादूह इति ब्रूमः। न च प्रकृतावेकपशौ [1]चक्षुर्द्वित्वात्तत्र चैकवचनस्याविवक्षितार्थकत्वात् कथं द्विबहुपशुषु तदूह इति वाच्यम्। घृततैलादिवत् तेजःप्रभृतीनि हि संसर्गिद्रव्याणि संयुक्तानामेकीभावात्। घटादयस्तु संयुक्ता अपि नैकीभवन्तीति न ते संसर्गिणः। संसर्गिद्रव्याणाञ्च स्वतस्सङ्ख्यान्वयासम्भवात्। 'शरावे उदके' 'नाक्षत्राणि तेजांसि' इत्यादिवदुपाधिकृतस्सङ्ख्यान्वयो वक्तव्यः। चक्षुःप्राणादीनि च [2]तेजोवाय्वादिरूपाणि संसर्गिद्रव्याणि। तेषाञ्च गोलकाद्यधिष्ठानापेक्षया एकवचनोपात्तसङ्ख्यान्वयः प्रकृतौ न सम्भवति, गोलकाद्यधिष्ठानानामनेकत्वात्। अतो गोलकाद्यधिष्ठानौपाधिकत्वं परित्यज्य पशूपाधिकमेवैकत्वं तत्र विवक्षितम्। "उदीचीनामस्य" इति पूर्ववाक्ये अस्येति पशोस्सन्निहितत्वाच्च। अतो द्विबहुपशुष्वपि पशुभेदाद्भवेदूह इति प्राप्ते, सिद्धान्तयति—

**संसर्गिषु चार्थस्यास्थितपरिमाणत्वात् ॥ २६ ॥**

चकार उक्तसमुच्चये। प्रतिनिधौ मन्त्रस्यानूह उक्तः। चक्षुरादिष्वपि संसर्गिद्रव्येषु नोहः। कुतः? अर्थस्य—तेजःप्रभृतेः अस्थितपरिमाणत्वात्—स्वतोनियतसङ्ख्याकत्वात्। तथा च संसर्गिद्रव्येषु चक्षुरादिषु सङ्ख्यानियमस्यौपाधिकत्वाद् उपाधिभूतद्विबहुपशुतो वियुक्तानां तेषां प्रदीपप्रभावदेकत्वसम्भवान्नोहः, अधिष्ठानवियोगे सति स्वारसिकैकत्वसम्भवे पशूपाधिकृतस्य सङ्ख्याविशेषस्याग्राह्यत्वात्। तस्माच्चक्षुरादिपदानां नोहः ॥

इतोऽप्येवमित्याह—

**लिङ्गदर्शनाच्च ॥ २७ ॥**

---

१. चक्षुषो. ग.

२. तेजोऽवयवादि. क. तेजोवायूपाधि. ग.

"न नाभिर्वर्धते प्राणो हि सः" इति। नाभिशब्दो न वर्धते—नोह्यते, यतस्सः-नाभिः प्राणः, "नव वै पुरुषे प्राणाः, नाभिर्दशमी" इति नाभेरपि प्राणत्वात्। प्राणवाचकशब्दस्य चानूह्यत्वादित्याशयः। प्राणत्वस्य च नाभिशब्दानूहे हेतुत्वदर्शनं लिङ्गम्, प्राणवाचिनामन्येषां चक्षुरादिशब्दानामनूह इति॥

इति दशममध्रिगुप्रैषे चक्षुरादिपदानामनूहाधिकरणम्॥ १०॥

११

तत्रैवाध्रिगुप्रैषे पठ्यते—"एकधाऽस्य त्वचमाच्छयतात्" इति। हे शमितारः, अस्य पशोः त्वचम्। एकधा-एकेन प्रकारेण 'सङ्ख्याया विधार्थे धा' इति धाप्रत्ययः। आच्छयतात्--आच्छन्दत। छो छेदने श्यन्विकरणः। अत्र द्विबहुपशुषु अस्येति त्वचमिति चैकवचनान्तं द्विचनबहुवचनाभ्यामूह्यमित्यविवादम्। एकधेति किमविकारेण प्रयुज्यते? उत एकधैकधेत्यभ्यासात्मकविकारेण? इति संशयः। तत्र सिद्धान्तेनोपक्रमते--

**एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यादसर्वविषयत्वात्॥ २८॥**

एकधेत्यस्य अभ्यासेन—द्विर्वचनेन द्विबहुपशुत्वकच्छेदनाभिधानं स्यात्। कुतः? सकृत्प्रयुक्तस्यैकधाशब्दस्य असर्वविषयत्वात्—द्विबहुपशुत्वक्च्छेदनविषयत्वासम्भवात्। कुतः? [एकसंयोगात्-] एकशब्दस्य योगात्। धाप्रत्ययो ह्ययमेकशब्देन युज्यते। स च विधार्थे। विधा प्रकारः प्रयत्न इति अनर्थान्तरम्। यावता व्यापारेणैकस्य पशोस्त्वक् कृत्स्ना अखण्डा छिद्यते, न तु खण्डशः, तावानेकः प्रयत्नः। [1]एतादृशमेकप्रयत्नसाध्यत्वमेकधेत्यनेन लभ्यते। तस्य च द्विबहुपशुषु सकृत्प्रयुक्तेनैकधेत्यनेनाभिधानं न सम्भवतीति भवति तदभ्यासः॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते--

**अविकारो वा बहूनामेककर्मवत्॥ २९॥**

---

१. एतादृशैक. क.

वा शब्दः प्रत्यवस्थाने । एकधेत्यस्य द्विबहुपशुषु अविकारः-अनभ्यासोऽस्तु । यतः, 'एकधा गाः पाययति' इति बहूनां गवामेककर्मवत् । सप्तम्यन्ताद् वतिः । युगपत्क्रियमाणपायनेषु एकधेति सकृत्प्रयुज्यते यथा, तथैकधास्येत्यत्राप्येकधाशब्दस्सकृत्प्रयुक्त एव द्विबहुपशुत्वचां देशतः कालतो वा यौगपद्यात्मकं साहित्यमभिधातुं शक्नोति । अतो नाभ्यासलक्षणो विकार आश्रयणीयः । एवञ्च सकृच्छ्रुतस्यैकधाशब्दस्य प्रापकश्चोदकोऽप्यनुगृहीतो भवतीति ॥

अथ सिद्धान्ती प्रत्याचष्टे—

**सहत्वं त्वैकध्यं स्यादेकत्वात्त्वचोऽनभिप्रेतं तत्प्रकृतित्वात् परेष्वभ्यासेन विवृद्धावभिधानं स्यात् ॥३०॥**

ऐकध्यमिति[1] सङ्ख्यार्थे ष्यञ् । तुर्नार्थे । सहत्वं साहित्यम् । ऐकध्यं एकधा न स्यात् । द्विबहुपशुषु एकधाशब्देन साहित्यं नाभिधातुं शक्यत इति यावत् । प्रकृतौ हि त्वच एकत्वाद् एकधेत्यस्य त्वचां साहित्यं वाच्यत्वेनाभिप्रेतं न भवति । एकप्रयत्नसाध्यत्वमेवैकध्यं[2] तत्रैकधेत्यनेन विवक्षितमित्यवश्यमभ्युपेयम् । एवञ्च परेषु-विकारेष्वपि द्विबहुपशुवृद्धौ[3] एकधेत्यनेनैकप्रयत्नसाध्यत्वमेवाभिधातव्यम्, तत्प्रकृतित्वात् । तद्विकृतित्वादिति यावत् । तच्च सकृत्प्रयोगान्न सम्भवतीत्यभ्यासेनैव तदभिधानं स्यात् । न च प्रकृतावेकप्रयत्नसाध्यत्वमेकधाशब्दार्थः, विकृतिषु तु द्विबहुपशुषु साहित्यमिति न दोष इति वाच्यम् । प्रकृतौ येन शब्देन योऽर्थोऽभिहितः, तेन शब्देन तस्यैवार्थस्याभिधातव्यत्वात् । अन्यथाप्राकृतकार्यकत्वापत्तेः । न च द्विधा त्रिधेत्यवं प्रकृतिमात्रोहसम्भवात् कृत्स्नपदाभ्यासाश्रयणं व्यर्थमिति वाच्यम्, तथा सति प्रतिपश्वेकप्रयत्नसाध्यत्वालाभादिति दिक् ॥

इत्येकादशमध्रिगुप्रैषगतैकधाशब्दस्य यावत्त्वचमभ्यासाधिकरणम् ॥११॥

१२

तत्रैवाध्रिगुप्रैषे पठ्यते--"उपनयत मेध्यादुर आशासाना मेधपतिभ्यां मेधम्" इति । हे मेध्याः--यज्ञार्हा ऋत्विजः, मेधं-यज्ञसाधनभूतं पशुम्, दुरः-यज्ञस्य द्वारभूतं

१. स्वार्थे. ग. २. ऐकार्थ्यम्. क.
३. पशुप्रकृतौ. क.

चात्वालोत्करमध्यदेशम् उपनयत । दुर इति द्वारशब्दस्य रेफान्तस्य द्वितीयाबहुवचनम् । सम्प्रसारणं बहुवचनञ्च छान्दसम् । क्वचित्तु शाखायां "मेधपतये मेधम्" इत्याम्नायते । तत्र संशयः—किमेकवचनद्विवचनान्तावुभावपि मेधपतिशब्दौ यज्ञस्वामित्वेन रूपेण यजमानमग्नीषोमौ चेति त्रितयमभिधत्ते ? उत द्विवचनान्तो देवतापरः, एकवचनान्तस्तु यजमानपरः ? अथवोभावपि यजमानपरौ ? यद्वोभावपि देवतापरौ ? इति । तत्र प्रथमपक्षयति—

**मेधपतित्वं स्वामिदेवतस्य समवायात् सर्वत्र च प्रयुक्तत्वात् तस्य च न्यायनिगदत्वात् सर्वत्रैवाविकारस्स्यात् ॥३१॥**

स्वामिनो यजमानस्य देवताभूतयोरग्नीषोमयोश्चेति त्रयाणां मेधपतिशब्दवाच्यत्वम् । कुतः? समवायात्-मेधो यज्ञः, तत्साधनत्वात् पशुरिह तथा व्यपदिश्यते। स च पशुर्यजमानस्य स्वम् , तस्य पतिः स्वामीति मेधपतिर्यजमानः । उपाकरणादिना पशुरग्नीषोमाभ्यां दास्यमानत्वेन सङ्कल्पित इत्यग्नीषोमावपि देवता मेधपतिरित्येवमवयवार्थस्य समावेशादित्यर्थः। ततः किमित्यत आह—सर्वत्र चेति । यजमाने अग्नीषोमयोश्चेति त्रिष्वप्येकेन मेधपतित्वरूपेणोभयस्यापि मेधपतिशब्दस्य सकृदुच्चरितस्यैव प्रयुक्ततया मुख्यप्रातिपदिकानुसारेणैकवचनस्य द्विवचनस्य चान्यायनिगदत्वात्– 'बहुषु बहुवचनम्' इति व्याकरणमर्यादोल्लङ्घनेनान्यायेनाविवक्षितार्थतया केवलसाधुत्वार्थं निगद्यमानत्वात् । सर्वत्र– द्विबहुपशुषु एकवचनद्विवचनयोरविकार एव स्यात् ॥

अथ द्वितीयपक्षयति—

**अपि वा द्विसमवायोऽर्थान्यत्वे यथासङ्ख्यं प्रयोगस्स्यात् ॥३२॥**

अपि वेति [1]नार्थे । प्रकृतावेकवचनद्विवचनयोरन्यायनिगदत्वाश्रयणं न सम्भवति । यतः, अर्थान्यत्वे द्विसमवायः-एकवचनान्तो यजमानपरः, द्विवचनान्तस्तु देवताभूताग्नीषोमपर इत्येवं प्रतिशाखं व्यवस्थयैकवचनद्विवचनान्त[2] मेधपतिशब्दयोरर्थभेदाश्रयणे सति, द्वयोरेकद्विवचनयोः समवायः-विवक्षितार्थत्वं

---

१. नजर्थे क. २. यजमान. क.

सम्भवति । अत एकयजमानकेषु एकबहुपशुषु देवतापरो द्विवचनान्तश्शब्द एकबहुवचनाभ्यामूहितव्यः । एकवचनान्तस्तु यजमानपरः । अनेकयजमानके द्विवचनबहुवचनाभ्यामूहितव्य इत्येवं यथासङ्ख्यं यजमानदेवतासङ्ख्यानुसारेण प्रयोगस्स्यात् ॥

अथ तृतीयपक्षयति—

**स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात् पत्न्यां द्वितीयशब्दस्स्यात् ॥३३॥**

वेत्यर्धाङ्गीकारे । द्वितीयपक्षे एकवचनान्तो मेधपतिशब्दो यजमानपर इत्येतद्गृह्णीमः । द्विवचनान्तस्तु देवताभूताग्नीषोमपर इत्येतत्तु न मृष्यामहे । कुतः ? ऐकशब्द्यात्—एकमन्त्रत्वात् । मेधपतिभ्यामिति, मेधपतय इति किञ्चिद्विकृत एक एवायं मन्त्रः प्रतिशाखमाम्नायते, अभेदप्रत्यभिज्ञानात् । तत्र चैको मेधपतिशब्दो यजमानपरः । अन्यस्तु देवतावचन इति वैरूप्यमयुक्तम् । अत एकवचनद्विवचनान्तावुभावपि मेधपतिशब्दौ स्वामिनो—यजमानस्याभिधायकौ । नन्ववैरूप्यायोभावपि देवताभूताग्नीषोमपरौ कुतो न स्यातामित्यत आह—उत्कर्षो देवतायां स्यादिति । यदि देवताभूतयोरग्नीषोमयोरुभावपि मेधपतिशब्दौ स्याताम्, तदैकवचनान्तमेधपतिशब्दस्य प्रकृतावसम्भवाद् विकृतौ [1]द्विपशावुत्कर्षस्स्यात् । अत उभावपि यजमानपरावेवेत्यभ्युपेयम् । नन्वेवमपि प्रकृतौ यजमानैकत्वान्मेधपतिभ्यामित्यस्यासमवायादुत्कर्षो दुर्वार इत्यत आह—पत्न्यां द्वितीयशब्दस्स्यादिति । मेधपतिश्च मेधपतिश्चेति मेधपतिभ्यामित्येकशेषः । एको मेधपतिशब्दो यजमानपरः, द्वितीयस्तु पत्न्या अभिधायकः । 'पुमांस्त्रिया' इत्येकशेषः । [2]तथा चोभावपि प्रकृतौ समवेताभिधायिनावित्यनेकयजमानकविकृतिषु यथायथमूहितव्यौ ॥

अथ सिद्धान्तयति—

**देवता तु तदाशीष्ट्वात् सम्प्राप्तत्वात् स्वामिन्यनर्थिका स्यात् ॥३४॥**

तुरवधारणे । एकवचनद्विवचनान्ताभ्यामुभाभ्यामपि मेधपतिशब्दाभ्यामग्नीषोमौ विवक्षितौ, न तु यजमानः । कुतः ? तदाशीष्ट्वात् । तस्मै मेधपतिशब्दार्थाय

---

१. द्विपशो. नास्ति, क. २. तथा सति. क.

पशोर्यत्राशासनं प्रकाश्यते स मन्त्रः तदशीः । 'मेधपतये आशासाना मेधपतिभ्यामाशासाना' इति हि मेधशब्दार्थस्य पशोर्मेधपत्यर्थतया आशासनं गम्यते । सा च आशीः स्वामिनि-यजमाने अनर्थिका स्यात् । कुतः ? सम्प्राप्तत्वात्-पशोर्यजमानार्थत्वेन सिद्धत्वात् । मेधपतये यो मेधः तमाशासाना इत्युक्ते, किमर्थमाशासानेति साकाङ्क्षतया वाक्यस्यापूर्णत्वाच्च[1] । सम्प्राप्तत्वादित्यस्यैवं सत्येव वाक्यस्य सम्पूर्णत्वादित्यप्यर्थः । न च मेधपतिदेवतार्थत्वेन मेधमाशासाना इत्यन्वयेऽपि कस्य मेधमिति[2] साकाङ्क्षत्वं तुल्यमिति वाच्यम् । यजमानार्थे कर्मणि परकीयस्य देवतार्थमाशासनानुपपत्त्या तदीय एव मेधः पशुर्देवतार्थमाशास्यत इति गम्यमानतया साकाङ्क्षत्वाभावात् । तस्मादेकवचनद्विवचनान्तावुभावपि मेधपतिशब्दौ देवतापरावेव ॥

इतोऽप्येवमित्याह--

## उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात् ॥३५॥

"अग्नीषोमाभ्यां त्वा जुष्टमुपाकरोमि" इत्युपाकृतः पशुः "अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि, नियुनज्मि" इत्येवं प्रोक्षणादिसंस्कृतः संज्ञपनाय नीयते । तदानीञ्च मेधपतिशब्दोऽध्रिगुप्रैषे होत्रा प्रयुज्यत इति स्थितिः । देवतार्थत्वेन पशोः सङ्कल्प उपाकरणम् । यजमानश्च न स्वकीयस्य सतः पशोर्देवतार्थत्वेन सङ्कल्पं कर्तुं प्रभवति, अन्यदीयस्यान्योपभोग्यत्वासम्भवात् । ततश्च प्रागेव नायं पशुर्ममेत्युत्सृष्टः पशुर्देवतार्थत्वेनोपाक्रियते । तस्य च पशोः संज्ञपनाय नीयमानस्य न यजमानः पतिः, किन्तु देवतैव । देवतास्वभूतश्च पशुः प्रोक्षणादिना परिष्कर्तु[1] परकीयत्वेनैव परिगृह्य रक्ष्यते । अतो यजमानस्य [3]नास्मिन्नौदासीन्यशङ्कावकाशः । सोऽपि परिग्रहो वषट्कारोत्तरकाले त्यज्यते 'अग्नीषोमाभ्यामिदं न मम' इति । एवञ्च मेधपतित्वं मेधपतिशब्दः [4]संज्ञपनाय नयनवेलायां प्रयुज्यमानः तस्मिन्यजमाने भक्त्या गौण्यावृत्त्या स्यात्, भूतपूर्वगत्यैव तदानीं यजमानस्य पशुस्वामित्वात् । अतोऽपि मेधपतिशब्दौ देवतापरौ, न तु स्वामिपरौ ॥

---

१. असम्पूर्णत्वाच्च. क. २. मेध इति. क.

३. न तस्मिन्. क, ख. ४. संज्ञपनवेलायां. क.

नन्वेवं सति मेधपतये इत्येकवचनस्य कथं प्रकृतौ समवायः ? इत्यत आह—

***एकस्तु समवायात् तस्य तल्लक्षणत्वात् ॥३६॥**

तुर्नार्थे । अग्नीषोमयोर्द्वयोस्समुदाय एकः । तस्य च प्रकृतौ समवायान्नोक्ताशङ्का । तस्य-एकवचनस्य तल्लक्षणत्वात्--समुदायैकनिबन्धनत्वात् । तथा च मेधपतये अग्नीषोमात्मकद्व्यवयवकसमुदायरूपाय मेधपतिद्वयायैकस्मै मेधमुपनयतेति वचनव्यक्तिः प्रकृतौ समवैति ॥

ननु मेधपतय इति प्रातिपदिकस्य गणपरत्वे एकदेवत्यविकृतौ निवृत्तिस्स्यादित्यस्वरसात् परिहारान्तरमाह—

**संसर्गित्वाच्च तस्मात्तेन विकल्पस्स्यात् ॥३७॥**

एक इत्यनुवर्तते । अग्नीषोमयोर्देवतात्वं संसर्गि व्यासक्तम्, तदात्मनाग्नीषोमावेकतां यातः । तदभिप्रायं मेधपतय इत्येकवचनं प्रकृतौ समवैति ।

नन्वेवं सति मेधपतिभ्यामिति द्विवचनान्तस्य प्रकृतौ समवायासम्भवाद् विकृतावुत्कर्षस्स्यादित्यत आह चेति। अनुक्तसमुच्चये [चकारः]। द्विवचनमपि देवतात्वाधिष्ठानभूताग्नीषोमापेक्षं प्रकृतौ निवेशमर्हति । तस्मात्प्रकृतावुभयोर्मेधपतिशब्दयोर्विकल्पस्स्यात्,न तु कस्यापि विकृतावुत्कर्षः । अस्तु वा मेधपतय इत्यत्रापि मेधपतिशब्दस्वरूपेणैवाग्नीषोमपरः, न तु देवतात्वेन । तथापि मेधपतय इत्यस्य प्रकृतौ निवेशस्सम्भवतीत्याह—

**एकत्वेऽपि गुणानपायात् ॥३८॥**

अपिशब्दात् पूर्वमसतीति शेषः । असत्यप्यग्नीषोमयोः स्वरूपेणैकत्वे मेधपतय इत्येकवचनान्तं प्रकृतौ निवेशमर्हति । कुतः ? गुणानपायात्-मेधपतिशब्दात्मकप्रातिपदिकस्य तत्र सम्भवत्प्रवृत्तिकस्य गुणभूतसङ्ख्यावाचिनैकवचनेनानपायाद् बाधासम्भवात् । मुख्यप्रातिपदिकानुसारेणैकवचनस्याविवक्षितार्थत्वाश्रयणेन मेधपतय इत्यस्याग्नीषोमयोर्द्वित्वेऽपि प्रवृत्तिसम्भवादिति यावत् । अभ्युपेत्य वादोऽयम् । देवतात्वाभिप्रायमेकवचनं प्रकृतौ निवेशमर्हतीत्येवं समञ्जसम् । ततश्चोभावपि मेधपतिशब्दौ विकृतौ देवताबुध्यनुसारेण ऊहितव्यौ । वस्तुतस्तु-ऐतरेयब्राह्मणे "पशुर्वै मेधो यजमानो वै मेधपतिः" इति पूर्वपक्षमुपक्षिप्य "यस्यै वाव कस्यै च

*'उकृष्येतैकसंयुक्तो द्विदेवते सम्भवात्' इति भाष्ये सूत्रपाठोऽधिकः ।

देवतायै पशुरालभ्यते सैव मेधपतिः। स यद्येकदेवत्यः पशुस्स्यान्मेधपतय इति ब्रूयात्। यदि द्विदेवत्यो मेधपतिभ्यामिति। यदि बहुदेवत्यो मेधपतिभ्य'' इति सिद्धान्तितम्। अधिकरणप्रवृत्तिस्तु चिन्त्यप्रयोजनेति तन्त्ररत्ने स्थितम्। शाखान्तराधिकरणे शाखान्तरोपसंहारानित्यत्वस्य प्रपञ्चितत्वाद्यत्र शाखायामेवं नाम्नातं तद्विषया भवत्यधिकरणप्रवृत्तिरिति वयम्॥

इति द्वादशं मेधपतिशब्दस्य देवतापरत्वाधिकरणम्॥१२॥

१३

अस्ति बहुदेवदेवत्यः पशुः "वैश्वदेवं बहुरूपमालभेत" इति। तत्र मेधपतये इति मेधपतिभ्यामिति च चोदकतः प्राप्तम्। तत्र देवतात्वरूपेण गौणरूपेण वा मेधपतय इत्येकवचनान्तं समवैति, स्वरूपाभिप्रायेण द्विवचनान्तं समवैतीति स्थितम्। ततश्च द्विवचनान्तस्य बहुदेवत्ये बहुवचनान्ततयोहो निर्विवादः। एकवचनान्तस्य बहुवचनोहोऽस्ति नास्तीति संशये, पूर्वपक्षयति—

**नियमो वा बहुदेवत्ये विकारस्स्यात्॥३९॥**

वाशब्द इवार्थे। नियमनम् नियमः--ऊहः। बहुदेवत्ये पशौ द्विवचनान्तस्य बहुवचनोह इवैकवचनान्तस्यापि बहुवचनेन विकारस्स्यात्। एकवचनान्तमेधपतिशब्दोऽपि द्विवचनान्तवत् स्वरूपेणैवाग्नीषोमवचनः, न तु देवतात्वरूपेण गौणरूपेण वा, वैरूप्यप्रसङ्गात्। तथा च द्वयोरग्नीषोमयोरेकवचनस्य छान्दसप्रयोगात् प्रकृतौ साधुत्वेऽपि विकृतौ बहुत्वे छान्दसप्रयोगाभावाद् बहुवचनोहः। पाशानित्यस्यैकदेवतपशावेकवचनोहवत्॥

अथ सिद्धान्तयति—

**विकल्पो वा प्रकृतिवत्॥४०॥**

वाशब्दोऽवधारणे। मेधपय इत्यत्र प्रातिपदिकस्य देवतात्वरूपेण गौणरूपेण वाग्नीषोमपरत्वे एकवचनस्य प्रकृतौ विवक्षितार्थत्वं लभ्यते। स्वरूपेण तत्परत्वे त्वविवक्षितार्थत्वं स्यात्। ततश्च विवक्षितार्थत्वाय तादृशं वैरूप्यमङ्गीकार्यम्। तथा च प्रकृतौ यथैकवचनद्विवचनान्तयोर्विकल्पः, तथा बहुदेवत्येऽप्येकवचनान्तस्य बहुवचनान्तेन विकल्पः। एवञ्च द्विवचनान्तस्यैव स्वरूपबहुत्वापेक्षो बहुवचनोहः।

एकवचनान्तस्य तु देवतात्वापेक्षं गौणापेक्षं वैकवचनं स्वरूपबहुत्वेऽपि निवेशमर्हतीति नोह इति फलति ॥

इति त्रयोदशं मेधपतिशब्दस्य बहुदेवत्ये विकल्पाधिकरणम् ॥१३॥

१४

अस्त्येकादशिनी "आग्नेयः कृष्णग्रीवस्सारस्वती मेषी बभ्रुस्सौम्यः पौष्णः श्यामश्शितिपृष्ठो बार्हस्पत्यः शिल्पो वैश्वदेव ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नस्संहितोऽधो रामस्सावित्रो वारुणः पेत्वः" इति। तत्र यथा वैश्वदेवपशौ विश्वेषां देवानां स्वरूपेण बहूनामपि देवतात्वैक्यान्मेधपतय इत्येकवचनस्यानूहः, तद्वदत्राप्यग्न्यादीनाम्, देवतात्वैक्यादनूह इति प्राप्ते, सिद्धान्तयति--

**अर्थान्तरे विकारस्स्याद्देवतापृथक्त्वादेकाभिसमवायात् स्यात् ॥४१॥**

वैश्वदेवे पशौ देवताकारके एकस्मिन् अभिसमवायात्-एकवचनस्य निवेशात्, मेधपतय इत्येकवचनान्तस्यानूहस्स्यात्। इह त्वर्थान्तरे-तद्विलक्षणे पशुगणे मेधपतय इत्यस्य बहुवचनविकारस्स्यादेव। कुतः? देवतापृथक्त्वात्-"आग्नेयः कृष्णग्रीवः" इत्याद्येकादशतद्धितैरेकादश देवताकारकाण्यवगम्यन्ते। अतो देवताकारकबहुत्वाद्बहुवचनेनोहः, वैश्वदेवे त्वेकेन तद्धितेनैकस्यैव देवताकारकस्यावगमात्तत्र चैकवचनसम्भवान्न भवत्यूहः ॥

इति चतुर्दशं पशुगणे मेधपतिशब्दस्योहाधिकरणम् ॥१४॥

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ नवमाध्यायस्य तृतीयः पादः ॥



# अथ नवमाध्यायस्य चतुर्थः पादः

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

अथास्मिन् नवमस्य [१]चतुर्थपादे सन्दिग्धावान्तरकार्याणां मन्त्राणामवान्तरकार्यव्यवस्थापनमुखेनोहो विचार्यते। पूर्वस्मिन्नधिकरणे "आग्नेयः कृष्णग्रीवः" इत्याद्यैकादशिनपशुषु अध्रिगुप्रैषगते एकधापदे विकारविचारो वृत्तः। तत्रैवाध्रिगुप्रैषे पठ्यते–'षडिं्वशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्यावयतात्" इति। हे शमितारः, अस्य पशोः वङ्क्रयः पर्शवः पार्श्वास्थीनि। एकैकस्मिन् पार्श्वे त्रयोदशेत्येवं [षडिं्व] शतिः सन्ति। ताः वङ्क्रीः अनुष्ठ्या-स्थानानुक्रमेण उच्यावयतात्-उद्धरत। अनुक्रमेण स्थानमनुष्ठ्या। 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' इति तृतीयाविभक्तेः ड्यादेशः' इति वेदभाष्ये भट्टभास्करः। 'अनुष्ठ्या प्रयत्न' इति शाबरभाष्ये। किमेकादशिनपशुगणे [२]षडिं्वशतिः अस्येति च पदं वीप्सया द्विर्वचनमाश्रित्याभ्यसितव्यम्—षड्विंशतिष्षडिं्वशतिरस्यास्य वङ्क्रय इति? उतोभयमप्यविकारेण प्रयोक्तव्यम्? अथवा षड्विंशतिरित्येकवचनस्य अस्येत्येकवचनस्य च बहुवचनोहः—षड्विंशतयः एषां वङ्क्रय इति? यद्वा अस्येत्येतदेव पदमभ्यसितव्यम्-षड्विंशतिरस्यास्य वङ्क्रय इति? आहोस्वित् सर्वपशुगता वङ्क्रीस्समस्य वक्तव्याः-षडशीत्यधिकद्विशतमेषां वङ्क्रय इति एकादशिनेषु? अष्टसप्ततिरेषां वङ्क्रय इति त्रिपशौ सौत्रामण्यादौ; द्विपञ्चाशदनयोर्वङ्क्रय इति द्विपशौ "मैत्रं श्वेतमालमेत" "वारुणं कृष्णमन्नकामः" इत्यादौ? इति पञ्चधा संशयः। तत्र प्रथमपक्षयति—

---

१. चतुर्थे. क.   २. षडिं्वशतिरिति. अ.

**षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद् गुणस्य प्रविभक्तत्वादविकारे हि तासामकात्स्न्येंनाभिसम्बन्धो विकारान्न समासस्स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥**

षड्विंशतिरित्युपलक्षणम्। पशुगणे षड्विंशतिरिति, अस्येति च पदमभ्यासेन प्रयोक्तव्यम्। कुतः? तत्प्रकृतित्वात्। अग्नीषोमीयपशौ हि षड्विंशतिसङ्ख्यया पशोर्वङ्क्रिद्वारा सम्बन्धः प्रकाशितः। इहापि पशुगणे प्रतिपशु तथा प्रकाशयितव्यम्। तच्च [1]षड्विंशतिरिति अस्येति च पदद्वयस्याभ्यासं विना न सम्भवति। कुतः? गुणस्य प्रविभक्तत्वात्-षड्विंशतिसङ्ख्यात्मकगुणस्य प्रतिपशु वङ्क्रिद्वारा प्रविभक्तत्वात्। अविकारे हि-अनभ्यासे हि पशुगणे तासां-वङ्क्रीणां सङ्ख्यया अकात्स्न्येंनाभिसम्बन्धः-एकैकपशुसम्बन्धस्याभिधानं न स्यात्। ननु षडशीत्यधिकद्विशतमेषां वङ्क्रय इत्येवमूहेऽपि प्रतिपशु षड्विंशतिवङ्क्रिसम्बन्धप्रकाशनं सेत्स्यतीत्यत आह—विकारान्न समासस्स्यादिति। समस्य वचनं न सम्भवति। तथा सति प्राकृतस्य (षड्विंशतिपदस्य सर्वथा बाधेनात्यन्तविकारापत्तेः समस्यवचने दोषान्तरमाह—असंयोगाच्च सर्वाभिरिति।) षड्विंशतित्वरूपेण प्रकाशितया सङ्ख्यया विशिष्टाभिर्वङ्क्रीभिः सर्वाभिः प्रतिपशु विभज्य सम्बन्धासम्भवात् षडशीत्यधिकद्विशतमेषां वङ्क्रय [2]इत्यूहे वङ्क्रिगणेयत्तैव प्रकाशिता स्यात्। न च तद्युज्यते; सा हि प्रतिपशु भेदेनैव षड्विंशतिरिति प्रतिपाद्या, प्रतिपशु भेदेनैव वङ्क्रीणामुद्धरणात्। तस्मात् षड्विंशतिरिति अस्येति च पदमभ्यसनीयम्॥

अत्राशङ्क्य निराचष्टे—

**अभ्यासेऽपि तथेति चेन्न गुणत्वादर्थकृतत्वाच्च ॥ २ ॥**

षडशीत्यधिकद्विशतमिति समस्य वचने [3]अप्राकृतशब्द उच्चारितस्स्यादिति दोषोऽभ्यासेऽपि तुल्यः। अनभ्यस्तषड्विंशतिशब्दस्यैव प्राकृतत्वादिति चेत्तन्न; कुतः? गुणत्वात्—अभ्यासस्य गुणत्वात्। तस्यैव हि षड्विंशतिरिति शब्दस्य

१. षड्विंशतिरस्येति. क.
२. इत्यूहे हि. अ.
( ) अपुस्तके पाठः स्खलितः
३. अप्राकृतशब्दः. क.

द्विरुच्चारणात्मकोऽभ्यासो गुणः। स एव तावदप्राकृतः। समस्यवचने तु शब्दान्तर-माश्रयितव्यं स्यात्। ततश्च प्राकृतस्यात्यन्तबाधस्स्यात्। अभ्यासे तु गुणमात्र-मधिकमाश्रयितव्यमिति वैषम्यम्। ननु षड्विंशतिशब्दस्यास्येति शब्दस्य च द्विर्वचने पशुद्वयस्यैव षड्विंशतिवङ्क्रिसम्बन्धः प्रकाशितस्स्यात्, न तु सर्वेषाम्। अतस्स-मस्यवचनं[1]माश्रयणीयमित्याशङ्क्याह—अर्थकृतत्वाच्चेति। वीप्सायां विहितेन द्विर्वचनेन सर्वेष्वपि पशुषु प्रत्येकं षड्विंशतिवङ्क्रिसम्बन्धाभिधानस्यार्थस्य कृतत्वात्—लाभात्॥

अथ पुनराशङ्क्य निराकरोति—

**समासेऽपि तथेति चेन्नासम्भवात्॥ ३॥**

यथाभ्यासे प्राकृतषड्विंशतिशब्दाबाधाच्चोदकानुग्रहः, तथा समस्यवचने यौगपद्यलाभेन प्रयोगप्राशुभावात् प्रयोग्रवचनानुग्रहो भविष्यतीति चेत्तन्न; कुतः? सम्भवात्—सम्भवति हि चोदकानुग्रहे प्रयोगवचनानुग्रहाश्रयणमादर्तव्यं न भवति, प्रयोगवचनतश्चोदकस्य बलीयस्त्वात्। चोदको हि पदार्थानां प्रापकः। प्रयोगवचनन्तु प्राप्तानामुपसङ्ग्राहकम्। स च चोदकप्रवृत्त्युत्तरकालप्रवृत्तिकत्वाद्दुर्बलः। तस्मान्न समस्यवचनम्॥

इतोऽप्येवमित्याह—

**स्वाभिश्च वचनं प्रकृतौ तथेह स्यात्॥ ४॥**

प्रकृतौ स्वाभिः-षड्विंशतिवङ्क्रिभिः पशोस्सम्बन्धः प्रकाशितः। [2]इहापि तथैव प्रकाशयितव्यम्। तदेतदभ्यासे सत्येव घटते। षडशीत्यधिकद्विशतमेषां वङ्क्रय इति समस्यवचने तु पञ्चविंशतिरेकस्य सप्तविंशतिरन्यस्येत्येवमपि गम्येत, न तु नियोगतष्षड्विंशतिसङ्ख्याकाभिस्स्वाभिर्वङ्क्रिभिरेकैकस्य पशोस्सम्बन्धः। तस्मादपि न समस्य वचनम्, किन्त्वभ्यास एवाश्रयणीयः॥

---

१. आश्रयितव्यं. क. २. इहापि तथैव प्रकाशयितव्यम्. नास्ति. क.

अथ पञ्चमपक्षमवलम्ब्य सिद्धान्तयति—

**वङ्क्रीणान्तु प्रधानत्वात् समासेनाभिधानं स्यात् प्राधान्यमद्रि-गोस्तदर्थत्वात् ॥ ५ ॥**

तुरवधारणे। षडशीत्यधिकद्विशतमेषां वङ्क्रय इति समासेनैवाभिधानं स्यात्, न त्वभ्यासेन। कुतः? वङ्क्रीणां प्रधानत्वात्। तच्च कुतः प्राधान्यम्? अद्रिगोस्तदर्थत्वात्—अद्रिगोः-अद्रिगुसम्प्रैषगतस्य "षड्विंशतिरस्य वङ्क्रयः" इति वाक्यस्य पशोर्वङ्क्र्यर्थतापर्यवसन्नत्वाद् वङ्क्रीणां प्राधान्यम्। तत्र हि याष्षड्विंशतिर्वङ्क्रयस्ता अस्य पशोरित्येवं षड्विंशतिवङ्क्रयः पश्वर्थतया [ न ] निर्दिश्यन्ते, येन प्रतिपशु षड्विंशतिवङ्क्रिसम्बन्धप्रकाशनायाभ्यास आश्रीयेत। किन्त्वस्य पशोः या वङ्क्रयस्ताष्षड्विंशतिरित्येवं वङ्क्रीणामेवेयत्तात्र निर्दिश्यते। पशुस्तु वङ्क्रीः प्रति गुणत्वेन निर्दिश्यते। ततश्च अस्येति वङ्क्र्यर्थतयैव पशोर्निर्देशात् षड्विंशतिपदेन सङ्ख्यायास्सङ्ख्येयोपसर्जनत्वेनैव निर्देशाच्च वङ्क्रीणामेव प्राधान्यं फलति। तथा च प्रकृतौ षड्विंशतिशब्देनेयत्तया वङ्क्रयः प्रकाशिताः। ऐकादशिनेषु च षडशीत्यधिकद्विशतं वङ्क्रयस्सन्ति। ततश्च सङ्ख्याशब्देन तथा प्रकाशयितव्या इति षडशीत्यधिकद्विशतमेषां वङ्क्रय इति समस्यवचनम्। षड्विंतिपदाभ्यासेन तथाविधवङ्क्रिसङ्ख्याप्रकाशनासम्भवात् ॥

[१]इतोऽपि वङ्क्रिप्रधानमेवेदं वाक्यमित्याह—

**तासाञ्च कृत्स्नवचनात् ॥ ६ ॥**

"ता अनुष्ठ्योच्यावयतात्" इत्युत्तरवाक्यम्। ताः वंक्रीः, अनुष्ठ्या प्रयत्नेनोद्धरत। कथमपि कृत्स्ना उद्धरतेति यावत्। अत्र तच्छब्दो वङ्क्रीः परामृशति। ततश्च पूर्ववाक्ये वङ्क्रीणां प्राधान्यमवगम्यते, तच्छब्दस्य सर्वनामत्वात् सर्वनाम्नाश्चोत्सर्गतः प्रधानपरामर्शित्वात् पशसम्बन्धप्राधान्ये [ तमिति ] स्यात्। वङ्क्रीणान्तु हविष्ट्वात् तत्प्रकाशनं दृष्टार्थं भवति। न चोत्पत्तिवाक्ये पशोर्यागसाधनत्वावगमादर्थतः प्राधान्यमिति वाच्यम्, हृदयाद्यवयवद्वारैव पशोर्यागसाधनताया दशमे वक्ष्यमाणत्वात्। अतो वङ्क्रिप्रधानत्वात् समस्य वचनम् ॥

१. इतोऽप्येवमित्याह. क.

अथ द्वितीयपक्षयति--

## अपि त्वसन्निपातित्वात् पत्नीवदाम्नातेनाभिधानं स्यात् ॥ ७ ॥

अपि त्विति पक्षव्यावृत्तौ । नाभ्यासः, नापि समस्यवचनम् । यतः षड्विंशतिरस्येत्याम्नाते पदद्वये चोदकतः प्राप्ते सति समस्याभिधानमभ्यासेन वाभिधानं न स्यात् । कुतः ? असन्निपातित्वात्-"षड्विंशतिरस्य वङ्क्रय इति प्रकृतौ वङ्क्रिषु प्रकाशकतया करणभूतस्सन् न सन्निपतति । संज्ञपनाय [1]नीयमाने हि पशौ होत्रा अध्रिगुमन्त्रः प्रयुज्यते । विशसनन्तु संज्ञपनानन्तरम् वपाप्रचारे सति छिद्रापिधानपुरोडाश उपक्रान्ते विहितम्—"हविष्कृता वाचं विसृज्य पशुं विशास्ति" इति । ततश्च संज्ञपनात् पूर्वकालीनस्याध्रिगुवचनस्य विशसनकालीनवङ्क्रिप्रकाशकत्वासम्भवाददृष्टार्थत्वं वाच्यम् । तथा च विकृतावपि पशुगणे षड्विंतिरस्येत्यविकृताभ्यामेवादृष्टसम्भवान्न विकारः । पत्नीवत्-विकृतौ पत्नीद्वित्वबहुत्वयोरपि यथा पत्नीमित्यविकृतं प्रयुज्यते तद्वत् ॥

तमिमं द्वितीयपक्षं निराचष्टे--

## विकारस्तु प्रदेशत्वाद्यजमानवत् ॥ ८ ॥

तुरवधारणे । विकारः-समस्यवचनमेव स्यात् । कुतः ? प्रदेशत्वात् । प्रदिश्यते अतिदिश्यत इति प्रदेशः । कर्मणि घञ् । "षड्विंशतिरस्य वङ्क्रयः" इति प्रकृतौ यथा वङ्क्रिप्रकाशकमभूत्तथैव तस्य विकृतौ पशुगणेऽतिदिष्टत्वादित्यर्थः । यद्यपि "षड्विंशतिरस्य वङ्क्रय" इति न करणमन्त्रः, तथापि "दैव्याश्शमितार आरभध्वमुपनयत" [2]इत्याद्यध्रिगुमन्त्रश्शमितॄन् प्रति सम्प्रैषात्मकः । तथा चास्य पशोरेकैकस्य पार्श्वस्य त्रयोदशेत्येवं षड्विंशतिवङ्क्रयस्सन्ति । ताः अनुष्ठया प्रयत्नेन उच्यावयतात् उद्धरतेत्येवं शमितॄन् प्रति वङ्क्रीणां साकल्येनोद्धरणं प्रकाशयन् दृष्टार्थत्वात् तथाविधप्रकाशनस्य पशुगणेऽविकारे सत्यनुपपत्तेस्समस्यवचनम् । यजमानवत्-यथा द्वियजमानके इन्द्राग्न्योः कुलायाख्ये क्रतौ, बहुयजमानके च सत्रे होतुर्निगदेषु "आशास्तेऽयं यजमानः" "उपहूतोऽयं यजमानः" इत्यादौ यजमानशब्दो द्विबहुवचनाभ्यामूह्यते तद्वत् ॥

---

१. नियमेन हि. क.    २. इत्येवं शमितॄन् प्रति. ग, घ.

यत्तु पत्नीवदिति तत्राह—

**अपूर्वत्वात् तथा पत्न्याम् ॥ ९ ॥**

दर्शपूर्णमासयोः "पत्नीं सन्नह्य" इत्येकद्विबहुपत्नीकप्रयोगसाधारणमाम्नातम्, त्रयाणामपि प्रयोगाणामपूर्वत्वात्-प्रकृतित्वात्। तथा च पत्न्यां--पत्नीशब्दे यथा एकपत्नीकप्रयोग एकवचनं प्रयुज्यते, तथैव द्विबहुपत्नीकप्रयोगयोरप्यविकृतमेवैकवचनान्तं प्रयुज्यते। एकवचनस्य [ सर्व ] प्रयोगसाधारण्यबलेनाविवक्षितार्थकत्वात्। एवञ्च विकृतावपि पत्नीद्वित्वबहुत्वयोरप्यविकृतमेवैकवचनमिति वैषम्यम् ॥

अथ तृतीयपक्षमुपक्षिपति—

**आम्नानस्त्वविकारात् सङ्ख्यासु सर्वगामित्वात् ॥ १० ॥**

तुर्नार्थे। "षडविंशतिरस्य वङ्क्रयः" इति भवतु प्रकृतावुक्तरीत्या दृष्टार्थत्वम्, तथापि न समस्यवचनं पशुगणे। किन्त्वाम्नातष्षडविंशतिशब्द एव प्रयोक्तव्यः। कुतः? अविकारात्-एवं सत्येवार्षबाधाभावात्। द्विपशौ द्विपञ्चाशदनयोर्वङ्क्रय इति, त्रिपशौ अष्टसप्ततिरेषां वङ्क्रय इति, चतुःपशौ चतुरधिकशतमेषां वङ्क्रय इत्येवं समस्यवचने च प्राकृतस्य षड्विंशतिशब्दस्यात्यन्तबाधप्रसङ्गात्। ननु षडविंशतिशब्देन सकृदुच्चरितेन कथं पशुगणे सर्ववङ्क्रीणामभिधानमित्यत आह--सङ्ख्यासु सर्वगामित्वादिति[1]। पशुगणे षडविंशत्यधिकवङ्क्रिसङ्ख्यासु षडविंशतिशब्दः द्विबहुवचनाभ्यामूहितव्यः। षडविंशती अनयोः वङ्क्रयष्षड्विंशतय एषां [2]वङ्क्रय इति। एवञ्च द्विबहुवचनमात्रोहेन षडविंशतिशब्दस्य सङ्ख्याप्रधानस्य पशुगणे सर्ववङ्क्रिविषयत्वोपपत्तेर्नात्यन्तबाधः। प्रकृतौ हि अस्य पशोर्वङ्क्रिगता षडविंशतिसङ्ख्येति वचनव्यक्तिः। 'आ दशतस्सङ्ख्यास्सङ्ख्येये। विंशत्यादयस्सङ्ख्याने सङ्ख्येये चेति' षडविंशतिशब्दस्य सङ्ख्याप्रधानत्वाश्रयणात्। न चैवं सति गवां विंशतिरित्यादिवत् वङ्क्रीणां षड्विंशतिरिति षष्ठी स्यादिति वाच्यम्। देवदत्तयज्ञदत्तविष्णुमित्राः परिषदित्यादाविव प्रथमायाष्षष्ठ्यर्थे लाक्ष-

१. इति. नास्ति. क, ग. २. वङ्क्रयः नास्ति. अ.

गिकत्वात्। प्रथमश्रुतषड्विंशतिशब्दस्यात्यन्तमार्षबाधाभावाय सङ्ख्यापरत्वमाश्रित्य वचनोहमात्रस्य न्याय्यतया तदनुसारेण जघन्यश्रुतप्रथमाया लक्षणाश्रयणस्योचितत्वात्। तस्माद् षड्विंशतिशब्दस्सङ्ख्यापरो द्विबहुवचनाभ्यामूहितव्य इति ॥

तमिमं तृतीयपक्षं निराचष्टे—

**सङ्ख्या त्वेवं प्रधानं स्यात् वङ्क्रयः पुनः प्रधानम् ॥ ११ ॥**

पुनरिति ह्यर्थे। एवं तु-एवं सति षड्विंशतिसङ्ख्या प्रधानं स्यात्, तत्तु न युज्यते। वङ्क्रय एव हि प्रधानम्। सङ्ख्याया अननुष्ठेयतया तत्प्रकाशनस्यादृष्टार्थत्वापातात्। वङ्क्रीणान्तु हविष्ट्वात् तत्प्रकाशनं तदुद्धरणाय भवतीति दृष्टार्थता। "ता अनुष्ठ्योच्यावयतात्" इत्युत्तरवाक्ये तच्छब्देन वङ्क्रीणामेव परामर्शाच्च ॥

सर्वनाम्नां प्रधानपरामर्शित्वात् तच्छब्दस्य सङ्ख्यापरत्वे तामिति स्त्रीलिङ्गापत्तेः। आर्षबाधस्तूभयत्रापि तुल्य इत्याह—

**अनाम्नातवचनश्चावचने हि वङ्क्रीणां स्यादनिर्देशः ॥१२॥**

सङ्ख्याप्राधान्यपक्षेऽपि षडविंशतिरिति सर्वमेवाम्नातं विकृतौ नोच्यते, किन्तु षड्विंशती षड्विंशतय इति विभक्तिविषयेऽनाम्नातवचनमपि भवति। अनार्षत्वभयेन द्विबहुवचनयोः अवचने हि--अनुच्चारणे हि वङ्क्रीणां कार्त्स्न्येनाभिधानं न स्यात्। एवञ्चानेनैव न्यायेन षड्विंशतिशब्दस्यापि विकारस्समस्यवचनमस्तु। उक्तरीत्या वङ्क्रीणामेव प्रधानतया तासां प्रकाशनाय समस्यवचनावश्यकत्वात् ॥

अथ चतुर्थपक्षयति—

**अभ्यासो वा विकारात् स्यात् ॥१३॥**

वाशब्दः प्रत्यवस्थाने। षड्विंशतिसङ्ख्याया अचोदितत्वाद् अननुष्ठेयत्वाच्च तत्प्रकाशनस्यादृष्टत्वापत्तेर्माभूत्प्राधान्यम्। पशोस्तु चोदितत्वात तत्प्रकाशनस्य चानुष्ठानोपयोगित्वात् प्राधान्यमस्तु। एवञ्चावयवषष्ठ्यन्ताभिधेयोऽपि पशुरर्थगत्या प्रधानमिति सङ्ख्याया वङ्क्रीणाञ्च तद्विशेषणतयैव निर्देशः। ततश्च षड्विंशतिसङ्ख्याकवङ्क्रिकः पशुरिति वचनव्यक्तिः फलति। तथा चैकैकपशुं तथा प्रकाशयितुमस्येत्येकस्यैव पदस्याभ्यासोऽस्तु षड्विंशतिरस्यास्य वङ्क्रय इति। एवं सति

षड्विंशतिरिति प्रकृतिप्रत्यययोरुभयोरप्यविकारलाभाद् अभ्यासलक्षणविकाराभावस्य लाभाच्च। अस्येति पदाभ्यासेनैव सकलपशूपस्थितौ प्रतिपशु षड्विंशति सङ्ख्याकवंक्रिसम्बन्धलाभात् ॥

तमिमं चतुर्थपक्षं दूषयन् पञ्चमपक्षेणोपसंहरति—

**पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात् तस्मात्समासशब्दस्स्यात् ॥१४॥**

तुरवधारणे। एवं सति अस्येति पदाभ्यासस्य तन्निमित्तत्वात्-पशुभेदनिबन्धनत्वात् पशुः प्रधानतया निर्दिष्टस्स्यात्, तत्तु न युज्यते। दशमे 'पशोरेकहविष्ट्वं समस्तचोदितत्वात्' इत्यत्र हृदयाद्यङ्गानामेव यागसाधनताया वक्ष्यमाणत्वात्। तस्मादुक्तरीत्या वङ्क्रीणामेव प्रधानत्वात् षडशीत्यधिकद्विशतमेषामिति समासशब्दः-समस्यवचनं स्यात्। आश्वलायनस्तु 'एकधा षड्विंशतिरिति द्विर्द्विबहूनाम्' इत्याह। तस्यायमाशयः—यद्यपि वङ्क्रीयत्तापरमिदं वाक्यम्, तथापि प्रतिपशु पृथगेव वङ्क्रीणामुद्धरणात् पृथगेव प्रतिपशु वङ्क्रीयत्ता प्रकाशनीयेति षड्विंशतिपदाभ्यास एव न्याय्य इति।

जैमिनिस्त्वाचार्यो नेदं मन्यते। प्रकृतौ ह्येकस्मिन् पशौ एकैकस्मिन् पार्श्वे त्रयोदश त्रयोदश वङ्क्रयः। तास्वपि पृथगुद्ध्रियमाणासु[1] उद्धरणभेदमतन्त्रीकृत्य षड्विंशतिरिति समासेनैव सङ्ख्या प्रकाशिता, तथा विकृतिष्वपि पशुगणे उद्धरणभेदमतन्त्रीकृत्यैव प्रयोगसमवेतसमस्तवङ्क्रयः प्रकाशयितव्या इति समस्यवचनमेवोचितमिति। आश्वलायनवचनन्तु श्रुत्यन्तरमूलकं भविष्यति। न च तथाविधश्रुतिविरोधात् समस्यवचनं बाध्यतामिति वाच्यम्, तत्रापि तथाविधश्रुत्यन्तरोन्नयनात्। अत एव साङ्ख्यायन आह-'षड्विंशतिरिति समासेन वा' इति। न्यायविचारस्तु यस्यां शाखायां समासवचनं वा अभ्यासवचनं वा नास्ति तद्विषया भविष्यति, शाखान्तरोपसंहारस्य पाक्षिकत्वात् ॥

इति प्रथमं पशुगणे वङ्क्रीणां समस्यवचनाधिकरणम् ॥१॥

---

१. उद्धार्यमाणासु. अ, क, ग.

२

अश्वमेधे श्रूयते--"अश्वस्तूपरो गोमृगस्ते प्राजापत्या:" इति । अश्वः प्रसिद्धः । तूपरः-अशृङ्गश्छागः । गोमृगः-आरण्यकमृगविशेषः । ते प्रजापतिदेवताका इत्यर्थः । तस्य चाश्वस्य चतुस्त्रिंशद्वङ्क्रयस्सन्ति । अस्ति च तत्र मन्त्रः-"चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिस्समेति । अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या विशस्ता" इति । षड्विंशतिरस्य वङ्क्रय इति तत्र चोदकतः प्राप्तम् । इदञ्च तत्र श्रूयते-"न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात्" इति । किमिह षड्विंशतिरित्येव मन्त्रः प्रवर्तते, न तु चतुस्त्रिंशदिति मन्त्रः ? उत उभयोर्विकल्पः ? इति संशयः । षड्विंशतिरित्येव [1]मन्त्रः प्रवर्तते न तु चतुस्त्रिंशदिति मन्त्रः । स हि केवलं पठ्यते, न तु विधीयते । पाठात्तु विधिः कल्पनीयः । षड्विंशतिरिति प्राकृतस्य तु 'षड्विंशतिरित्येव ब्रूयात्" इति प्रत्यक्षविधिरस्ति । तद्विरोधात् पाठाद्विधिकल्पना नोन्मिषति । ततश्च प्रत्यक्षविहितेन [2]षड्विंशतिमन्त्रेण चतुस्त्रिंशन्मन्त्रो बाध्यते । "ऐरं कृत्वोद्गेयम्" इति प्रत्यक्षविहितेनेरापदेन यथा 'गिरा गिरा च दक्षसे" इति पाठप्राप्तं गिरापदं बाध्यते तद्वदिति प्राप्ते, सिद्धान्तयति--

## अश्वस्य चतुस्त्रिंशत्तस्य वचनाद् वैशेषिकम् ॥१९॥

वाशब्दोऽध्याहर्तव्यः । अश्वस्य चतुस्त्रिंशद्वङ्क्रयः सन्ति । तस्य चतुस्त्रिंशद्वङ्क्रिकस्याश्वस्य विषये कदाचिद्वैशेषिकं--प्रकरणविशेषे[3] पठितं "चतुस्त्रिंशद्वाजिनः" इत्येतद्भवति । कदाचित् ( षड्विंशतिरिति प्राकृतं भवति । कुतः ? वचनात्--पाठकल्पितविधेः चोदकतश्चेत्यर्थः । इरापदं तावत् प्रत्यक्षविहितत्वाद् गिरापदं पाठप्राप्तं बाधते । गिरापदप्रतिषेधस्त्वनुवाद इति स्थितम् । इह तु ) "षड्विंशतिरित्येव ब्रूयात्" इति न विधिः, एवशब्दात् । न ह्यत्रैवशब्दोऽवधारणे, व्यर्थत्वात् । किन्तु पुनस्तदेव पठतीत्यादिवदुक्तानुकथने एवशब्दः । षड्विंशतिरित्येतद्धि चोदकतः प्राप्तम् । तच्च प्रत्यक्षपठितेन चतुस्त्रिंशदित्यनेन बाधितम् । चतुस्त्रिंशदिति च "न

---

१. प्रवर्तत इति ब्रूमः । तथाहि--चतुस्त्रिंशदिति मन्त्रः केवलं पठ्यते. अ.

२. षड्विंशतिरिति. क. ३. विशेषपठितं. क.

( ) कपुस्तके पाठः स्खलितः.

चतुस्त्रिंशदिति ब्रूयात्" इति प्रतिषिद्धम्। ततो बाधके चतुस्त्रिंशदिति मन्त्रे निवृत्ते षड्विंशतिरित्येतत् पुनश्चोदकत उन्मिषति। तदेतदनूद्यते-"षडविंशतिरित्येव ब्रूयात्" इति। एवञ्चात्र षड्विंशतिरित्यस्य प्रत्यक्षविहितत्वाभावाच्चतुस्त्रिंशदित्यस्य पाठतो विधिकल्पना निर्बाधा। न चैवं "न गिरा गिरेति ब्रूयात्" इत्यपि प्रतिषेधविधिरस्तु "ऐरं कृत्वा" इत्यनुवादोऽस्त्विति वाच्यम्। न हि गिरापदे प्रतिषिद्धे इरापदप्राप्तिरस्ति, येनानूद्येत। अत "ऐरं कृत्वा" इति विधिरित्यास्थेयम्। ततश्च प्रत्यक्षविहितत्वादिरापदेन गिरापदस्य बाधो युक्तः। इह तु 'न चतुस्त्रिंशदिति ब्रूयात्' इति प्रतिषेधः प्रत्यक्षं विधीयते। स च प्रतिषेधः प्राप्तिपूर्वकः। प्राप्तिश्च चतुस्त्रिंशदिति प्राकरणिकमन्त्रपाठानुमितवाक्यात्। ततश्च विधिप्रतिषेधाभ्यामुभयोर्विकल्पः। न च प्रत्यक्षानुमानिकयोरतुल्यबलत्वात् कथं विकल्प इति वाच्यम्, प्रत्यक्षप्रतिषेधस्य चोदकतः प्राप्त्यपेक्षत्वेन बलवत्वाभावात्। यथा चैतत् तथा दशमे वक्ष्यते॥

इति द्वितीयमश्वमेधेऽश्वस्य वङ्क्रीयत्ताधिकरणम्॥२॥

३

अश्वमेधे अश्वतूपरगोमृगेषु संज्ञपनाय नीयमानेषु अध्रिगुप्रैषे "षड्विंशतिरस्य वङ्क्रयः" इत्येतत् प्राकृतं "चतुस्त्रिंशद्वाजिन" इत्यृचा सह विकल्प्यत इति स्थितम्। तत्र यदा प्राकृतं षड्विंशतिरित्येतदध्रिगुवचनं भवति, तदा किं तूपरगोमृगयोर्द्विपञ्चाशदनयोर्वङ्क्रय इति समस्यवचनम्, अश्वे तु षड्विंशतिरस्येत्यनूहेनैव? उत त्रयाणामप्यश्वतूपरगोमृगाणां समस्यैव प्राकृतमध्रिगुवचनं षडशीतिरेषां वङ्क्रय इति? तूपरस्य षड्विंशतिवङ्क्रयः गोमृगस्यापि षड्विंशतिरश्वस्य तु चतुस्त्रिंशदिति त्रयाणां षडशीतिवङ्क्रिकत्वादिति संशयः। तत्र तूपरगोमृगयोः प्रकृतितः प्राप्तं षड्विंशतिरस्य वङ्क्रय इत्येतत् द्विपञ्चाशदनयोर्वङ्क्रय इति [1]विकर्तव्यम्। अश्वे तु षड्विंशतिरस्य वङ्क्रय इत्येव वक्तव्यम् "षड्विंशतिरित्येव ब्रूयात्" इति तत्र विशिष्य वचनात्। ऐन्द्रीन्यायेन ( )चतुस्त्रिंशतोऽपि षड्विंशतिशब्देन लक्षणया

---

१. वक्तव्यं. क.

प्रतिपादनसम्भवात्। तस्मात् षडशीतिरेषामिति न त्रयाणां समस्यवचनमिति प्राप्ते, सिद्धान्तयति—

## तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् ॥ १६ ॥

ल्यब्लोपे पञ्चमी। "न चतुस्त्रिंशदिति ब्रूयात्" इति वाक्येन तत् "चतुस्त्रिंशद्वाजिन" इति मन्त्रवचनं प्रतिषिध्य 'षड्विंशतिरित्येव ब्रूयात्" इत्यनेन प्रकृतिर्नियुज्यते। प्रकृतिप्राप्तं षड्विंशतिरस्येत्यध्रिगुवचनमनूद्यते, न तु तदपि विधीयते। अनेकार्थविधौ वाक्यभेदप्रसङ्गात् एवशब्दोपबन्धाच्चेत्युक्तमेव। 'तथा च सा प्रकृतिप्राप्ता षड्विंशतिरित्युक्तः चतुस्त्रिंशत्सङ्ख्यायाः वाच्यत्वं पुरस्कृत्य न निवेशमर्हति, षड्विंशतिपदस्यात्र वाचनिकत्वाभावेनैन्द्रीन्यायानवतारात्। न च चतुस्त्रिंशद्वङ्क्रिकेऽश्वे "षड्विंशतिरित्येव ब्रूयात्" इति कथमनुवादस्स्यादिति वाच्यम्। अत्र हि षडविंशतिशब्देन तत्संयुक्तं "षड्विंशतिरस्य वङ्क्रयः" इति वाक्यं विवक्षितम्। तत्प्रकृतिप्राप्तं ब्रूयादित्यनुवादः। स च यथाप्राप्ति भवति। प्रकृतौ च कार्त्स्न्येन समवेतपशुवङ्क्रीयत्ताप्रकाशकत्वं स्थितम्। इहापि तथैव कर्मसमवेतसमस्तवङ्क्रीयत्तां प्रकाशयितुं षडशीतिरेषां वङ्क्रय इत्येव (ब्रूयादित्यनुवादः पर्यवस्यति।

नन्वयमभित्तिचित्रितो विचारः। "षड्विंशतिरस्य वङ्क्रयः" इति प्राकृतस्य "चतुस्त्रिंशद्वाजिन" इत्यृचा प्रकरणाम्नातया बाधादिति शङ्कते—

## ऋग्वा स्यादाम्नातत्वादविकल्पश्च न्याय्यः ॥१७॥

वाशब्द एवार्थे। 'चतुस्त्रिंशद्वाजिन" इत्यृगेवात्र स्यात्, न तु प्राकृतमपि। कुतः? आम्नातत्वात् -प्रकरणे ऋचो विशिष्य पाठात्। न च "न चतुस्त्रिंशदिति) ब्रूयात्"इति प्रतिषेधाद् विकल्पो भविष्यतीति वाच्यम्, अष्टदोषदुष्टविकल्पस्यान्याय्यत्वात्॥

---

१. एवञ्च. क.     () क पुस्तके ग्रन्थपातः.

नन्वेवं सति "न चतुस्त्रिंशदिति ब्रूयात्" इत्यस्य "षड्विंशतिरित्येव ब्रूयात्" इत्यस्य च का गतिरित्यत आह—

**तस्यान्तु वचनादैरवत् पदविकारस्स्यात् ॥ १८ ॥**

तुरेवार्थे। यथा "यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षस" इति पठितायामृचि गिरापदं प्रतिषिध्येरापदं विधीयते "न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम्" इति, तथा "चतुस्त्रिंशद्वाजिन" इति पठितायां तस्यामेव ऋचि चतुस्त्रिंशत्पदं प्रतिषिध्य तत्स्थाने षड्विंशतिपदं विधीयते—न चतुस्त्रिंशद्वाजिनो देवबन्धोरिति ब्रूयात्, किन्तु षड्विंशतिवाजिनो देवबन्धोरित्येवं चतुस्त्रिंशत्पदस्थाने षड्विंशतिपदं प्रक्षिप्य [1]ऋचमेतां ब्रूयादिति। "न चतुस्त्रिंशदिति ब्रूयात्" इत्यत्र चतुस्त्रिंशच्छब्दस्यैव प्रतिषेधावगमाद् ऋचः प्रतिषेधानवगमात् "षड्विंशतिरित्येव ब्रूयात्" इत्यत्रापि षड्विंशतिशब्दस्यैव श्रुतत्वात् तत्संयुक्तमन्त्रस्याश्रुतत्वात् चतुस्त्रिंशत्षड्विंशतिशब्दयोस्तत्संयुक्तमन्त्रपरत्वे लक्षणापत्तेः। अन्यथा गिरा गिरेत्यत्रापि ऋक्प्रतिषेधपत्तेः। ततश्च कृत्स्नाया ऋचः प्रतिषेधाभावात् पाठलब्धो नित्य एव तद्विधिरप्रतिहत इति चोदकप्राप्तं षड्विंशतिरस्य वङ्क्रय इति बाधित्वा षड्विंशतिर्वाजिनो देवबन्धोरित्येवंरूपा ऋगेव प्रयोक्तव्येति फलति। एवञ्च प्राकृतस्य "षड्विंशतिरस्य वङ्क्रयः" इत्यध्रिगुवचनस्यात्राभावात् तद्विषयो विचार एवायमनुपपन्न इति शङ्का स्थिता।

तां परिहरति—

**सर्वप्रतिषेधो वासंयोगात् पदेन स्यात् ॥ १९ ॥**

वाशब्दोऽवधारणे। 'न चतुस्त्रिंशदिति ब्रूयात्' इति चतुस्त्रिंशत्पदमात्रस्य न प्रतिशेधः, किन्तु चतुस्त्रिंशदादिकाया ऋच एव कृत्स्नायाः प्रतिषेधस्स्यात्। चतुस्त्रिंशदिति पदं न ब्रूयादित्येवंपदशब्दसंयोगाभावात्। न च ऋक् शब्दस्याप्यश्रवणात् कथं तत्प्रतिषेधः? अन्यथा न गिरेत्यत्राप्यृक्प्रतिषेधापत्तिरिति वाच्यम्। यत्र ह्याद्यं पदं प्रतीकं गृह्यते तत्राद्यत्वात् तत्पदं तदुत्तराणि पदान्येकार्थतया स्वसम्बन्धीनि गमयितुं शक्नोति। यथा—"अयं सहस्रमानव इत्याहवनीय-

१. ऋचमेव तां. क.

मुपतिष्ठते" इत्यादौ, इतिकरणस्य आद्यर्थकत्वाच्च। ततश्चेहापि चतुस्त्रिंशत्पदस्या- द्यत्वाद्युक्तं कृत्स्नाया ऋचः प्रतिषेध इति। गिरापदस्य तु ऋगाद्यत्वाभावान्न तत्र ऋचः प्रतिषध इति वैषम्यम्। एवञ्च "षड्विंशतिरित्येव ब्रूयात्" इत्येवकारोऽपि समञ्जसो भवति। स ह्युक्तानुकथने वर्तते। चतुस्त्रिंशत्पदमात्रनिषेधे च षड्विं- शतिरित्येवेति[1] षड्विंशतिपदस्यानुवादो नावकल्पते, अप्राप्तत्वात्। अतष्षड्विं- शतिरित्येवेति षड्विंशतिपदमपि विधेयम्। तथा सत्येवकारासामञ्जस्यम् अनेक विधानञ्च दोषः। चतुस्त्रिंशदादिकाया ऋचः प्रतिषेधे तु चोदकनष्षड्विंशतिरित्यस्य प्राप्तेस्तदनुवादो युज्यते। ततश्च ऋचः प्रतिषिद्धत्वान् प्रतिषेधस्य च प्राप्तिपूर्वक- त्वात् प्राप्तेश्च पाठकल्पितविध्यधीनत्वाद् विधिप्रतिषेधयोरुभयोरपि शास्त्रत्वा- विशेषाद् विकल्पः फलति। एवञ्च यदा ऋक्प्रतिषेधः तदा "षड्विंशतिरस्य वङ्क्रयः" इति प्राकृतस्य प्राप्तिरस्तीति तद्विषयश्च विचारस्सम्भवति॥

इति तृतीयं वङ्क्रीणां समस्यवचनाधिकरणम्॥ ३॥

४

तत्रैवाध्रिगुप्रैषे "वनिष्ठुमस्य मा राविष्टोरूकं मन्यमानाः" इति पठितम्। अस्य पशोः वनिष्ठुं वपासन्निहितं तत्सदृशंमेदोविशेषमुलूकं मन्यमानाः उलूक- त्वेन जानन्तः, मा राविष्ट-मा लाविष्ट। छान्दसं लत्वम्। अत्र किमुलूकशब्दः दिवान्धाख्ये पक्षिविशेषे वर्तते? उत वपाख्ये मेदोविशेषे? इति। 'उलूकस्तु वायसारातिपेचकौ। दिवान्धः कौशिको घूको दिवाभीतो निशाटनः' इति कोशः। अत उलूकशब्देन पक्षिविशेष एव विवक्षितः, न तु वपा। तत्र तस्याप्रसिद्ध- त्वात्। ततश्चोलूकत्वबुध्या वनिष्ठुर्न लवितव्य इति शमितारः प्रेष्यन्त इति प्राप्त आह—

## वनिष्ठुसन्निधानादुलूकेन वपाभिधानम्॥२०॥

उलूकशब्देनात्र वपाया अभिधानं प्रत्येतव्यम्। उरुशब्देन हि विस्तीर्णमुच्यते। यथा "उरु राजाङ्गणम्" "उरुं हि राजा वरुणश्चकार सूर्याय पन्थाम्" इति। कशब्दो मेदसि वर्तते। यथा कशवाहिनो रथा इति मेदोवाहिन इति गम्यते। लत्वं

१. इति पदस्य. क.

छान्दसम्, रेफादुकारस्य दीर्घत्वञ्च। लक्षणया च कशब्देन तदेकदेशेनात्र मेदो विवक्षितम्। ततश्च वपोद्धारणकाले वपाभ्रान्त्या वनिष्ठुर्न लवितव्य इति लभ्यते। नन्वेवमपि उलूकशब्दे उरु इत्यवयवे लत्वं कल्पनीयम्, क इत्यवयवे कयुक्तकशशब्दवाच्यमेदसि लक्षणा आश्रयितव्या। तद्वरमुलूकशब्दस्य पक्षिविशेषपरत्वाश्रयणमित्यत आह—वनिष्ठुसन्निधानादिति। वपोद्धरणसमये वनिष्ठुसन्निधानकृतव्यामोहनिवर्तनेन दृष्टलाभादित्यर्थः। उलूकशब्देन पक्षिविशेषाभिधानमिति वदन् प्रष्टव्यः—किमत्र वनिष्ठोर्लवननिवृत्तिर्विवक्षिता? उत वनिष्ठौ लूयमाने उलूकसादृश्यबुद्धिनिवृत्तिः? इति। नाद्यः; "वनिष्ठुमुद्धरति" इति वनिष्ठुलवनविधायकप्रत्यक्षवचनविरोधेन मन्त्रवर्णतः तल्लवननिवृत्तेः कल्पयितुमनुचितत्वात्। न द्वितीयः; वनिष्ठुमस्येति मन्त्रस्य लूयमानवनिष्ठौ उलूकसादृश्यबुद्धिनिवृत्तिप्रकाशनार्थत्वेऽदृष्टार्थत्वापातात्। वपाभिधाने तु वपाभ्रान्त्या वनिष्ठोर्लवनं प्राप्तं निराकुर्वन् मन्त्रो दृष्टार्थो भवति। तस्मादुलूकशब्देन वपाभिधानम्। ततश्च सिद्धान्ते विकृतौ वपाद्वित्वे उरुणीके इत्यूहः। वपाबहुत्वे तु उरूणिकानि इत्यूहः। उलूकशब्दस्य समस्तपदत्वे तु उलूकौ उलूकानित्यूहः। पूर्वपक्षे तु उलूकशब्दस्योपमानपरत्वादनूहः॥

इति चतुर्थमुरूकशब्दस्य वपाभिधानाधिकरणम्॥ ४॥

५

अध्रिगुप्रैषे "श्येनमस्य वक्षः कृणुतात्" इति पठित्वा "प्रशासा बाहू" इति पठितम्। कृणुतादित्यनुषज्यते। किमत्र प्रशसाशब्दः असिपरः? उत प्रशस्तपरः? इति संशये पूर्वपक्षयति—

**प्रशसास्यभिधानम्॥ २१॥**

शसु हिंसायामित्यस्मात् प्रपूर्वाद् उपसर्गवशेन छेदनार्थकात्करणे बाहुलकात् क्विपि प्रशसश्शब्दस्सकारान्तः। तेन तृतीयान्तेनासेरभिधानं प्रत्येतव्यम्। "असिं वै शासमाचक्षते" इति वेदे लोके च शसुधातोरुत्पन्नशासशब्दस्यासौ प्रयोगदर्शनात्। कृणु हिंसायाम्। छेदनमिह विवक्षितम्। श्नुविकरणः। बाहू छिन्दतेत्यर्थः, प्रैषातिसर्गेत्यादिना प्रैषे लोण्मध्यमपुरुषः। तस्य तादिति तादादेशः। ततश्च यथा उरूकशब्दस्य पक्षिविशेषपरत्वे निष्प्रयोजनतया प्रयोजनवत्त्वाय वपाभिधायकत्वम्,

एवं प्रशसाशब्दस्यापि प्रशस्तपरत्वेऽदृष्टार्थत्वापत्त्या दृष्टप्रयोजनवत्वायासिपरत्वमेव युक्तमाश्रयितुमिति ॥

अथ सिद्धान्तयति--

बाहुप्रशंसा वा ॥ २२ ॥

प्रशब्दः प्रकर्षे। शसु हिंसायाम्। छेदनमिह विवक्षितम्। कर्मणि क्विप्। प्रकर्षेण छिन्नौ प्रशसौ, द्वितीयाद्विवचनस्य आकारश्छान्दसः। इत्येवं द्वितीयाद्विवचनान्तेन प्रशसाशब्देन बाह्वोः प्रशंसा छेदनप्रकर्षात्मिका विवक्षिता। निरवशेषं बाह्वोश्छेदनमेव च[1] तत्प्रकर्षः। तथा च निरवशेषं बाहू छिन्दतेति फलति। एवञ्च प्रशब्दोऽर्थवान् भवति। असेरभिधाने त्वदृष्टार्थता स्यात्। "स्वधितिना पशुं विशास्ति" इति स्वधितिसाधनकत्वेन श्रुतेश्छेदनेऽसेः करणत्वासम्भवात्। न चासिप्रकारकमन्त्रवर्णबलादेव बाहुच्छेदनेऽसेः करणत्वं कल्प्यते। "स्वधितिना पशुं विशास्ति" इति तदतिरिक्तहृदयादिविषयं भविष्यतीति वाच्यम्, अक्लृप्तस्यासेः करणत्वस्य तत्र मन्त्रविनियोगस्य च कल्पनाप्रसङ्गात्। प्रयोजनं पूर्वपक्षे द्विबहुपशुषु असेरेकत्वादनूहः। असिभेदपक्षेऽपि प्रशोभ्यां प्रशोभिरित्यूहः। सिद्धान्ते तु प्रशस इति बहुवचनोह इति भाष्यादिग्रन्थेषु स्थितम्। याज्ञिकास्तु प्रशसा बाहूनिति बाहुशब्दमेव विकुर्वन्ति। प्रशसाशब्दन्तु-अनूहेनैव प्रयुञ्जते। प्रकृतौ प्रशसाशब्दस्य छान्दसतया द्विबहुपशुष्वपि तस्यैव प्रयोगसम्भवादिति तदाशयः। 'प्राकृतास्त्वेव [मन्त्राणां] शब्दाः, प्रतिनिधिष्वपि' इत्याश्वलायनसूत्रतद्भाष्यवृत्त्यादिषु च स्पष्टमेतत्॥

इति पञ्चममध्रिगुप्रैषगतप्रशसाशब्दस्य प्रशंसापरत्वाधिकरणम् ॥५॥

६

तत्रैवाध्रिगुप्रैषे पठ्यते-"श्येनमस्य वक्षः कृणुतात्" इति। कृञ् हिंसायाम्। छेदनमिह[2] विवक्षितम्। अस्य पशोः वक्षः उरः, तस्य श्येनमिव [3]छिन्दतेत्यर्थः। छेदनेन श्येनाकृतिस्सम्पादनीयेति यावत्। किमिह वक्षसः स्वरूपोपमर्दनेन चञ्चुचरणपक्षादिभूयोऽवयवसादृश्यं सम्पाद्यमिति विवक्षितम्? उत वक्षस्स्वरूपाविरोधेन विद्यमानस्यैव किञ्चित्सादृश्यस्यानुवादः? इति संशयः।

---

१. च नास्ति. क, ग. २. भेदनमिह. अ. ३. भिन्दत. अ.

तथा तत्रैव श्रुतम्—"शला दोषणी" इति। अस्येति कृणुतादिति चानुवर्तते। शलाशब्दादुत्तरमिवशब्दोऽध्याहर्तव्यः। 'श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम्' इति कोशः। वराहविशेषस्य कण्टकाकाराणि लोमानि शलाख्यानि सन्ति। शलशब्दाद् द्वितीयाविभक्तेराकारश्छान्दसः। दोषणी भुजौ शलवत् छिन्दतेत्यर्थः। अत्रापि किं भूयोऽवयवतस्साहश्यम्? उत भुजस्वरूपाविरोधेन गौणसादृश्यस्य विद्यमानस्यैवानुवादः? इति संशयः। शला शलाका इति तु वेदभाष्ये भट्टभास्करः।

तथा तत्रैव पठितम्– 'कश्यपेवांसा" इति। अंसौ कश्यपाविव कच्छपाविव छिन्दतेत्यर्थः। बाह्वोरुपरिभागौ अंसौ। अत्रापि पूर्ववत् संशयः।

तथा तत्रैव पठितम्—"कवषोरू" इति। ऊरू कवषा-कवाटाविव। विभक्तेराकारश्छान्दसः। कृणुतादित्यनुवर्तते। अत्रापि पूर्ववदेव संशयः।

तथा तत्रैव पठितम्—"स्रेकपर्णाष्ठीवता' इति। अष्ठीवता द्वितीयाविभक्तेराकारश्छान्दसः। अष्ठीवन्तौ ऊर्वोः पूर्वभागौ। स्रेकपर्णा पूर्ववदाकारः। करवीरपत्रे इव च्छिन्दत। शुकपत्रवदित्येक इति भट्टभास्करः। अत्रापि पूर्ववत् संशयः।

तत्र पूर्वपक्षयति—

**श्येनशलाकश्यपकवषोरुस्रेकपर्णेष्वाकृतिवचनं प्रसिद्धसन्निधानात् ॥ २३ ॥**

श्येनादिशब्देषु चञ्चुचरणपक्षादितत्तदवयवभूमकृतसादृश्याभिधानं वक्षोभुजादिस्वरूपोपमर्दनेन। कुतः? प्रसिद्धसन्निधानात्—तत्तदवयवबहुलेष्वेव [1]श्येनादिषु प्रसिद्धेन श्येनादिशब्देन भूयोऽवयवत एव सादृश्यस्य प्रतीतेः। सम्भवति च मुख्यसादृश्ये गौणसादृश्याश्रयणायोगात्॥

अथ सिद्धान्तयति—

**कार्त्स्न्यं वा स्यात्तथाभावात् ॥ २४ ॥**

वा शब्दोऽवधारणे। श्येनादिसादृश्यमुखेन वक्षःप्रभृत्यङ्गानां कार्त्स्न्येनोद्धरणमेवात्र विवक्षितम्। कृत्स्नश उद्धृतान्येव ह्यङ्गानि वक्षःप्रभृतीनि कथमपि

१. श्येनादिषु. नास्ति. क.

श्येनादिसदृशानि भवन्ति, [1]न त्वेकदेशत उद्धृतानि। ननु सम्भवति [2]भूयोऽवयवतस्सादृश्ये कथञ्चित्सादृश्यस्याश्रयणमयुक्तमित्यत आह--तथाभावादिति। कृत्स्नश उद्धरणे सत्येव वक्ष आदिस्वरूपस्य भावात्। भूयोऽवयवच्छेदनेन चञ्चुचरणपक्षादिसम्पाद्यसादृश्यापादने सति वक्ष आदिस्वरूपस्य विमर्दप्रसङ्गात्। न चेष्टापत्तिः, 'वक्षसोऽवद्यति, दोष्णोऽवद्यति' इत्यादिवाक्येष्ववदानसंयोगश्रवणेन वक्षःप्रभृतीनां हविष्ट्वावगमेन वक्ष आदिस्वरूपस्य भूयोऽवयवनाशे सति नाशप्रसङ्गात्। अतः सादृश्यसम्पत्तिमविकलोद्धरणाविरोधेन प्रकाशयितुमेव सादृश्यानुवादः। एवञ्च दृष्टार्थतापि भवति। भूयोऽवयवच्छेदनेन चञ्चुचरणादिकल्पनया श्येनाकारादिसम्पादनन्त्वदृष्टार्थमेव स्यात्। तस्मात्कृत्स्नश उद्धृतानामेव विद्यमानश्येनादिसादृश्यस्यानुवादः॥

इतोऽप्येवमित्याह--

**अध्रिगोश्च तदर्थत्वात् ॥ २५ ॥**

"गात्रं गात्रमस्यानूनं कृणुतात्" इत्यध्रिगुगतवाक्यात् स्पष्टमेव वक्षःप्रभृत्यङ्गानां कृत्स्नश उद्धृतानामेव यागार्थहविष्ट्वावगमादपि न भूयोऽवयवच्छेदनेन श्येनाद्याकृतिसम्पादनमिति यथास्थितार्थकथनमेतत्,[3] न त्वयं विचार ऊहोपयोगी। पूर्वोत्तरपक्षयोः श्येनादिशब्दानामुपमानपरत्वेन सिंह इवैते वीरा [4]इत्यादिवत् द्विबहुपशुषु वक्ष आदिविवृद्धावनूहितेनैव श्येनादिपदेनाभिधानसिद्धेः, 'नाभिरूपमा मेदो हविः' इत्यनूह्यानीति कल्पसूत्राच्च॥

इति षष्ठमध्रिगुगतश्येनादिपदानां कात्स्न्र्येनोद्धरणप्रकाशकत्वाधिकरणम्॥६॥

७

अग्निहोत्रे श्रूयते-"अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेत्" इति। वै शोषणे। उपसर्गवशादिह विनाशे वर्तते। यस्य यजमानस्य गार्हपत्यादुद्धृत्य प्रणीत आहवनीयोऽग्निः अग्निहोत्रेऽहुते--अग्निहोत्रहोमात् प्राक् उद्वायेत्--नश्येत् [5]स इष्टिमेतां निर्वपेदित्यर्थः। [6]अत्र दर्शपूर्णमासार्थोद्धृत आहवनीयः तदन्तरालकालोपनिपतिताग्निहोत्रस्यापि प्रसङ्गादुप-

---

१. न च. अ. २. भूयोऽवयवसादृश्ये. क.

३. एव तत्. अ. ४. इतिवत्. क, ग.

५. स एतामिष्टिं. ग. ६. तत्र. क.

करोतीति स्थितिः। स तावदाहवनीयोऽग्निर्यदि प्रक्रान्तेऽग्निहोत्रे होमात् प्राङ्नश्यति, तदा किमियमिष्टिर्भवति ? न वा ? इति संशयः। निमित्तसत्वाद् भवत्येव, तदानीमप्येषेष्टिः। न च "भिन्ने जुहोति" इत्यत्र प्रकृतस्य भेदनस्य निमित्तत्ववदिहापि प्रकरणबलादग्निहोत्रार्थोद्धृताग्न्युद्वानस्यैव निमित्तत्वाद्दर्शपूर्णमासार्थोद्धृताग्न्युद्वाने कथमेषेष्टिरिति वाच्यम्, वैषम्यात्। भिन्नहोमस्य हि 'प्रकरणाम्नातस्य फलकल्पनाभीत्या अर्थात्प्रकृतभेदननिमित्तकत्वपर्यवसानम्, न तु प्रथमं निमित्ततापतीतिदशायामेव प्रकृतत्वेन विशेषणम्। इह तु दर्शपूर्णमासार्थोद्धृताग्न्युद्वानेऽपि क्रियमाणाया इष्टेरारादुपकारकतयाग्निहोत्राङ्गत्वसम्भवान्न फलकल्पनाप्रसङ्गः। ततश्च निमित्ततापतीतिदशायामेव प्रकरणबलादग्निहोत्रार्थत्वेन विशेषणं वाच्यम्। न तत्सम्भवति, निमित्तस्योद्देश्यतया वाक्यभेदप्रसङ्गेन [2]तद्द्वारेण विवक्षाया असम्भवात्। न चास्या इष्टेरग्निहोत्रार्थोद्धृताहवनीयाग्नेरुद्वातस्य पुनरुत्पत्त्यर्थतया सन्निपत्योपकारमुखेनाग्निहोत्राङ्गत्वात् कथं दर्शपूर्णमासार्थोद्धृताग्न्युद्वाने प्रवृत्तिरिति वाच्यम्। तस्याग्निहोत्रार्थाग्न्युत्पत्त्यर्थत्वे प्रमाणाभावात्। न चोद्वातेऽग्नौ निमित्तेतदुद्देशेन विधिबलात् प्रकरणाच्चेष्टेरस्या अग्निहोत्रार्थाग्न्युत्पत्त्यर्थत्वलाभ इति वाच्यम्। न ह्युद्वातोऽग्निरस्या इष्टेर्निमित्तम्। उद्वायेदिति लिङा 'हेतुहेतुमतोर्लिङ्' इति विहितेनोद्वानस्यैव निमित्तत्वलाभात्। ततश्चोद्वानस्य श्रुतिगम्यं निमित्तत्वम्। अग्नेस्तु पदान्तरोपात्तत्वात्तदेकवाक्यतया गम्यमिति वाक्यप्रमाणकम्। उद्वानस्य चाग्निहो(त्राङ्गत्वाभावेन संस्कार्यत्वानुपपत्तेरारादुपकारमुखेनैवाग्निहोत्राङ्गमिष्टिः। न चोद्वानस्याग्निहोत्रानङ्गतया संस्कार्यत्वासम्भवेऽपि तद्विशेषणस्याग्नेरग्निहोत्राङ्ग)त्वात् संस्कार्यता किं न स्यादिति वाच्यम्, उद्वानेऽग्नेर्विशेषणत्वेनाविवक्षिततया संस्कारान्वयायोगात्। ततश्चाग्न्यर्थोद्धृतस्यापि अग्नेरुद्वाने सञ्जातं निमित्तमिति कर्तव्येयमिष्टिरिति प्राप्ते, सिद्धान्तयति—

**प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थे हि विधीयते ॥२६॥**

प्रसङ्गादग्निहोत्रोपकारके दर्शपूर्णमासार्थोद्धृतेऽग्नौ[3] नष्टे सति ज्यौतिष्मतीष्टिः प्रायश्चित्तं न विद्यते। कुतः ? परार्थत्वात्--अग्नेर्दर्शपूर्णमासार्थतयोद्धृतस्य दर्श-

---

१. प्रकरणाश्रितस्य. अ.

() अपुस्तके ग्रन्थपातः.

२. तद्विशेषणविवक्षायाः. क.

३. उद्धृताग्नौ. क.

पूर्णमासार्थत्वात् । ननु दर्शपूर्णमासार्थोद्धृतोऽपि प्रसङ्गादग्निहोत्रार्थोऽपि भवतीत्यत आह-तदर्थे हि विधीयत इति । हि यतः, तदर्थे--अग्निहोत्रमात्रार्थोद्धृतेऽग्नौ विनष्ट एव प्रायश्चित्तं विधीयते । अयमाशयः--न तावद्विनाशमात्रं निमित्तम्, चिन्तानिमेषादिनाशस्य सर्वदा विद्यमानत्वात् । नाप्यग्निः, तस्याप्यग्निहोत्रे सर्वदा विद्यमानत्वात् । नाप्यग्न्युद्धानम्, अग्नेरव्ययवशो विनाशस्यावर्जनीयत्वात् । अत एव नाप्युद्धातोऽग्निः । ततश्च कार्त्स्न्येनाग्नेरुद्धानसम्बन्धो निमित्तमिति वक्तव्यम् । एवञ्च यावता विनोद्देश्यप्रतीतिर्न पर्यवस्यति, तावतो विशेषणस्योद्देश्यगतस्यापि विवक्षितत्वाद् वाक्यगम्यमप्यग्नेर्निमित्तत्वं स्वीकार्यम् । तथाचाग्नेर्निमित्तत्वे तस्य संस्कारयोग्यतया इष्टेस्सामवायिकत्वसम्भवे आरादुपकारकत्वाश्रयणमयुक्तम् ॥

ननु भवतु कार्त्स्न्येनाग्नेरुद्धानसम्बन्धस्य निमित्तत्वे सति कृत्स्नश उद्धाताग्नित्वेनैव निमित्तत्वपर्यवसानम्, तथाप्यग्निहोत्रार्थोद्धृतत्वेनाग्निर्विशेषयितुं न शक्यते, वाक्यभेदप्रसङ्गात् । अतो दर्शपूर्णमासार्थोद्धृतस्याप्यग्नेः कार्त्स्न्येन विनाशसम्बन्धे निमित्ते स्यादेवेयमिष्टिरिति चेन्न; उक्तरीत्या सामवायिकत्वसिध्यर्थमग्न्युत्पत्तिलक्षणसंस्कारद्वाराऽग्निहोत्रार्थत्वनिश्चये सति दर्शपूर्णमासाग्न्युत्पत्तिद्वारा अग्निहोत्रार्थत्वासम्भवेनाग्निहोत्रार्थाग्न्युत्पादनसामर्थ्यस्यैव निश्चिततया विधेयसामर्थ्यानुसारेण "यस्योभावग्नी अभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिः" इत्यत्राग्न्युभयत्ववदग्निहोत्रार्थत्वस्य विवक्षितत्वात् । अतो दर्शपूर्णमासार्थोद्धृताग्निविनाशे प्रायश्चित्तमिदं न भवति, किन्त्वन्वाहिताग्न्यनुगतिप्रायश्चित्तमन्यदेव ॥

इति सप्तमं दर्शपूर्णमासार्थोद्धृताग्निविनाशे ज्योतिष्मतीष्टेरननुष्ठानाधिकरणम् ॥७॥

८

इदमामनन्ति-"आहितमाहवनीयमुत्सृज्य ? तदर्थायार्थायाग्निं प्रणयति नित्यो गतश्रियो धार्य आहवनीयः" इति । गतश्रीशब्दार्थश्च निरुक्तो ब्राह्मणे--"त्रयो वै गतश्रियश्शुश्रुवान् ग्रामणी राजन्यः" इति । वेदार्थाभिज्ञो ब्राह्मणश्शुश्रुवान् । ग्रामस्य नेता परिबृढो वैश्यो ग्रामणीः । मूर्धाभिषिक्तः क्षत्रियो राजन्यः । गता प्राप्ता

श्रीः वेदार्थज्ञानादिसम्पत्तिः यस्मिति विग्रहः। तत्र गतश्रियो नित्यधार्यस्याहवनीयस्याग्निहोत्रकाले उद्वाने पूर्वोक्ता ज्योतिष्मतीष्टिः कर्तव्या ? न वा ? इति संशयः। अग्निहोत्रार्थोद्धृताहवनीयोद्वाने इष्टिरिति पूर्वाधिकरणे स्थितम्। आधानस्य च सर्वकर्मार्थतया गतश्रिय आहवनीयोद्धरणस्य सर्वकर्मार्थत्वेनाग्निहोत्रार्थत्वस्यापि तत्र सत्वादिति प्राप्ते, सिद्धान्तयति—

**धारणे च परार्थत्वात् ॥२७॥**

दर्शपूर्णमासार्थोद्धृताग्नावुद्वाते नैषेष्टिरित्युक्तम्। गतश्रियो नित्यधारणेऽप्यग्निहोत्रमध्येऽग्निविनाशे इयमिष्टिर्न भवति। कुतः ? परार्थत्वात्--गतश्रिय आधानकालीनाग्न्युद्धरणस्य सर्वकर्मार्थत्वात्। न च तस्य सर्वकर्मार्थत्वेऽग्निहोत्रार्थत्वमप्यस्तीति वाच्यम्। उद्धृतशब्देनात्राग्निहोत्रिकमन्त्रविशेषविशिष्टोद्धरणस्यैव विवक्षितत्वात्, आधानकालीनोद्धरणस्य च तथाविधत्वाभावात्, आधानकालीनोद्धरणपरत्वे उद्धृतशब्दस्य[1] वैयर्थ्यापत्तेः। तस्माद्गतश्रियो नित्यधृताग्निविनाशे इयमिष्टिर्न भवति, किन्त्वन्यदेव प्रायश्चित्तम्--"भूर्भुवस्स्वः स्वाहा" इति 'सर्वप्रायश्चित्तमनादेशे'[2] इत्यादि ॥

नन्वेवं सति गतश्रियो नित्यधार्यस्याग्नेराधानकाले आग्निहोत्रिकविधिनोद्धृतत्वाभावात् ज्योतिष्मतीष्टिरिव तस्मिन्नग्नावाग्निहोत्रिकाः परिसमूहनादिधर्मा न स्युरित्यत आह—

**क्रियार्थत्वादितरेषु कर्म स्यात् ॥२८॥**

"यस्याग्निरुद्धृत" इत्युद्धृतशब्दसंयोगेन विहितत्वान्न ज्योतिष्मतीष्टिर्नित्यधार्याग्नावुद्वाते भवतीति युज्यते। परिसमूहानादिधर्मास्तु नोद्धृतशब्दसंयोगेन श्रुताः। ततश्चेतरेषु--परिसमूहनादिधर्मेष्वाग्निहोत्रिकेषूद्धरणमनपेक्ष्यैव केवलमग्निसंस्कारार्थत्वावगमात् कर्म--अनुष्ठानं स्यादिति वैषम्यम् ॥

इत्यष्टमं धार्याग्निनाशे ज्योतिष्मतीष्टेरननुष्ठानाधिकरणम् ॥८॥

९

पञ्चदश्यां प्रातरग्निहोत्रे हुते तमाहवनीयाग्निमुत्सृज्य दर्शपूर्णमासार्थं तूष्णीं पुनरुद्धृत्य प्रणीय तस्मिन्नग्नावन्वाधानादि प्रक्रम्य सायमग्निहोत्रे हुते परिस्तरणान्तं

१. शब्दवैयर्थ्यापत्तेः क. २. सर्वप्रायश्चित्तमनादेशे, नास्ति. क.

कर्म कृत्वा परेद्युः प्रतिपदि प्रातरग्निहोत्रे हुते पाणिसम्मर्शनादिदार्शपूर्णमासिकं तन्त्रं सन्तिष्ठतो ?[ प्रक्रम्यते ] इति स्थितिः। तत्र दर्शपूर्णमासोपक्रमेऽग्न्युद्धरणे क्रियमाणे आग्निहोत्रिकोद्धरणमन्त्राः प्रयोक्तव्याः ? न वा ? इति संशयः। प्रयोक्तव्या इति ब्रूमः। समन्त्रकोद्धरणस्याग्निहोत्राङ्गतया तूष्णीमुद्धृतेऽग्नौ क्रियमाणस्याग्निहोत्रस्य वैगुण्यापत्तेरिति प्राप्ते, सिद्धान्तयति—

**न तूत्पन्ने यस्य चोदनाप्राप्तकालत्वात् ॥ २९ ॥**

तुरवधारणे। उत्पन्ने-दर्शपूर्णमासार्थतयोद्धृतेऽग्नौ यस्य-अग्निहोत्रस्य चोदना विधिः तदर्थोद्धरणमन्त्राः नैव दर्शपूर्णमासोपक्रमकालीनोद्धरणे प्रयोक्तव्याः। कुतः ? अप्राप्तकालत्वात् ( दर्शपूर्णमासोपक्रमकालीनोद्धरणस्य 'प्रागस्तमयोदयाभ्यामुद्धरति' इत्यग्निहोत्रोद्धरणकालमप्राप्तत्वात्। ) न च मन्त्रा उद्धरणाङ्गमेव, कालस्तूद्धरणाङ्गम्। ततश्च कालरूपगुणाभावमात्रेण कथं तत्र निवृत्तिरिति वाच्यम्। मन्त्रा हि प्रकरणादग्निहोत्राङ्गोद्धरणार्थाः। उद्धरणञ्च दर्शपूर्णमासोपक्रमकालीनं नाग्निहोत्राङ्गं भवितुमर्हति, अस्वकालत्वात्। कालो ह्यनुपादेयाङ्गम्। ततश्च काले प्राप्ते कालसंयोगिनं पुरुषमधिकृत्य साङ्गं कर्म विधीयते। एवञ्च कालसंयोगं विना अनधिकारादनधिकारिणा क्रियमाणमकिञ्चित्करमित्यप्राप्ते स्वकाले पञ्चदश्यां प्रातर्हुतेऽग्निहोत्रे क्रियमाणस्योद्धरणस्याग्निहोत्राङ्गत्वाभावान्न तत्र मन्त्राः प्रवृत्तिमर्हन्ति। न च दर्शपूर्णमासोपक्रमकालोद्धरणस्याग्निहोत्राङ्गत्वाभावेऽपि तदुपकारकतामात्रेण साधननिवेशिनो मन्त्रास्तत्र प्राप्नुवन्त्येवेति वाच्यम्। दर्शपूर्णमासोपक्रमकालोद्धरणस्योक्तरीत्याग्निहोत्राङ्गत्वाभावे सति मन्त्राणामुद्धरणाङ्गत्वादेव प्रवृत्तिस्तत्र वक्तव्या। तच्च न सम्भवति। अस्वकाले तदुद्धरण इव तदङ्गभूतमन्त्रेष्वप्यधिकाराभावेनाधिकारिणं प्रत्यङ्गभूतमन्त्रानुष्ठापकस्योद्धरणविधेरधिकाराभावदशायां मन्त्रप्रयोजकत्वाभावात्। एवञ्च दर्शपूर्णमासार्थोद्धरणत एव प्रसङ्गादग्निहोत्रसिद्धेर्न प्रणयनलोपोऽपि दोषाय ॥

इति नवमं दर्शपूर्णमासोद्धरणकालेऽग्निहोत्रार्थोद्धरणाङ्गमन्त्रानन्नुष्ठानाधिकरणम् ॥ ९ ॥

---

() अपुस्तके ग्रन्थपातः।

१०

ज्योतिष्टोमे श्रूयते—"आदित्यः पयसि चरुः प्रायणीयः" इति। प्रायणीयो नामेष्टिविशेषः। तस्यायं प्रायणीयः। अदितिर्देवता अस्य आदित्यश्चरुः। न त्वादित्यो देवता अस्येति, मन्त्रे 'अदितिमोदनेन' इति लिङ्गात्। किमत्र पयः शाखाहरणवत्सापाकरणादीन् प्राकृतान् पयोधर्मान् लभते? उत प्रणीताधर्मान् लभते? इति संशयः। तत्र पूर्वपक्षयति—

**प्रदानदर्शनं श्रपणे तद्धर्म भोजनार्थत्वात् संसर्गाच्च मधूदकवत् ॥३०॥**

ते साान्नाय्यधर्माः यस्य तत् तद्धर्म। 'धर्मादनिच्केवलात्' इत्यनिच्। सान्नाय्यधर्मकं पयः स्यात्। कुतः? भोजनार्थत्वात्-यागार्थत्वात्। सन्नाय्यधर्मा हि यागीयप्रदेयद्रव्यार्थाः। इदमपि पयः यागीयं प्रदेयद्रव्यम्। अतस्तत्र सान्नाय्यधर्मा भवन्ति। नन्वादित्यश्चरुरिति चरोरेव देवतासम्बन्धाद् यागार्थता, न तु पयस इत्यत आह—प्रदानदर्शनं श्रपण इति। चरोः पयसा सह श्रपणे सति तस्य यागसमये पयसा सह प्रदानस्य-यागस्य दर्शनमस्ति। अतः पयसोऽप्यस्ति देवतासम्बन्धाद् यागीयप्रदेयद्रव्यत्वमित्यर्थः। ननु [न] त्यागमात्रं यागः, किन्तु देवतामुद्दिश्य त्यागो यागः। या यत्र चोद्यते सा तत्र देवता। चरावेव च देवता चोद्यते, न तु पयसि। सप्तमीनिर्दिष्टस्य पयसः आदित्य इति प्रथमान्ततद्धितेनाभिधानायोगात्[1] इत्यत आह—संसर्गाच्चेति। ओदने दधि दत्वा अभ्यवहर्तव्यमिति यथा सप्तम्यर्थस्याविवक्षया ओदनदध्नोः भोजने साहित्यं गम्यते, तद्वदत्रापि पयसश्चरोश्च यागे साहित्यं गम्यते। पयश्चरुश्चेत्युभयमादित्यमिति। मधूदकवत्-"दधि मधु घृतमापो धानास्तण्डुला उदकं तत्संसृष्टं प्राजापत्यम्" इतिवत्। ननु यः पयसि श्रृतश्चरुस्स आदित्य इत्येव वचनव्यक्तिरस्तु। ततश्च पयसश्श्रपणार्थत्वाच्चरोरेव यागीयप्रदेयद्रव्यत्वमिति चेन्न; पयोऽधिकरणकत्वस्य चरावन्यतः प्राप्तत्वाभावात्। ततश्च चरुरादित्यः, स च पयसीत्येवञ्चरौ पयोऽधिकरणकत्वस्य चादितिसम्बन्धस्य च विधानायोगाद् उभयविशिष्टयागविधिरित्येव युक्तम्। एवञ्च पयसः प्रदेयद्रव्यत्वात् सान्नाय्य[2] धर्मास्स्युः॥

---

१. अनभिधानयोगात् क, ग.  २. सान्नायस्य क.

इतोऽप्येवमित्याह—

**संस्कारप्रतिषेधश्च तद्वत् ॥ ३१ ॥**

"न यजुषा वत्सानपाकरोति, न पवित्रवति गां दोग्धि" इति कतिपयसान्नाय्यधर्माणां प्रतिषेधोऽपि तद्वत्—उक्तहेतुवत् तद्व्यतिरिक्तसान्नाय्यधर्मप्राप्ति-[मवग]मयति ॥

इतोऽप्येवमित्याह—

**तत्प्रतिषेधे च तथाभूतस्य वर्जनात् ॥ ३२ ॥**

श्लेष्मादिप्रकोपे पयो न पातव्यमित्युक्ते [न] केवलं पयः, पयसि शृतञ्च वर्ज्यते[1]। ततश्च लोके [2]पयसः प्रतिषेधे श्रपणार्थभूतस्यापि पयसो वर्जनात्मकपयोधर्मदर्शनाद् इहापि तद्वत् श्रपणार्थमपि पयस्तद्धर्मान् लभते ॥

अथ सिद्धान्तयति--

**अधर्मं त्वप्रदानात् प्रणीतार्थे विधानादतुल्यत्वादसंसर्गः ॥ ३३ ॥**

तुरवधारणे। न भवन्ति यस्मिन् सान्नाय्यधर्माः तत्-अधर्मं। अनिच्समासान्तः। पय इदं सान्नाय्यधर्मकं न भवति। कुतः? अप्रदानात्—यागसमये पयसोऽदितिदेवतोद्देशेन त्यागाभावात्। यागीयप्रदेयद्रव्यत्वाभावादिति यावत्। तर्हि पयसः कोपयोगः? तत्राह--प्रणीतार्थे विधानादिति। प्रणीताकार्ये हविश्श्रपणे विधानात्। न च पयसि शृतत्वस्यादितिदेवतासम्बन्धस्य च चरौ विधाने वाक्यभेदस्स्यादिति वाच्यम्। प्राप्तकर्मानुवादेनानेकगुणविधौ हि[3] वाक्यभेदः। इदञ्च प्रायणीयेष्टेरुत्पत्तिवाक्यम्, ततश्च यदाग्नेयादिवाक्यवद्विशिष्टविधानान्न वाक्यभेददोषः। वस्तुतस्तु तैत्तिरीयशाखायां "देवा वै देवयजनमध्यवसाय" इत्युपक्रम्य "तस्मादादित्यः प्रायणीयः" इति प्रायणीयेष्टेरुत्पत्तिवाक्यं पठितम्। "आदित्यः पयसि चरुः प्रायणीयः" इति तु शाखान्तरीयं वचनम्। तदनुवादेन पयोऽधिकरणत्वलक्षणगुणमात्रविधायकमिति न वाक्यभेदप्रसक्तिः। एवञ्च

---

१. त्यज्यते. क. २. पयःप्रतिषेधे. क.

३. हि. नास्ति. क.

[न] तद्धीत्या सप्तम्या अविवक्षितार्थत्वाश्रयणम्। यद्यपि प्रणीताकार्यं संयवनमेव, 'न श्रपणम्, "प्रणीताभिस्संयौति" इति वचनात्। उक्तं चतुर्थस्य द्वितीये सूत्रकृता 'संयवनार्थानां वा प्रतिपत्तिरितरा तत्प्रधानत्वात्' इति। संयवनञ्च चरौ नास्तीति दशमस्य प्रथमे वक्ष्यते--'पिण्डार्थत्वाच्च संयवनम्'इत्यत्र, तथापि प्रणीतार्थे विधानादिति सूत्रकारवचनादेव "प्रणीताभिश्श्रपयति" इति शाखान्तरीयं वचनमनुमीयते। न ह्यकस्मात् प्रमाणभूत आचार्यो ब्रवीति। ततश्च पयसः श्रपणार्थतया चरुं प्रति गुणत्वेन चरुणा तुल्यत्वाद् देवतासम्बन्धविधौ चरुपयसोरसंसर्गः-साहित्यं नास्ति। "दधि मधु घृतमापो धानास्तण्डुला उदकं तत्संसृष्टम्" इत्यत्र तु गुणप्रधानभावे प्रमाणाभावाद् यागे दध्यादिद्रव्याणां साहित्यमेव॥

ननु तर्हि "न यजुषा वत्सानपाकरोति" इत्यादि कतिपयसान्नाय्यधर्मप्रतिषेधस्य का गतिस्तत्राह--

**परो नित्यानुवादस्स्यात् ॥ ३४ ॥**

परः-कतिपयसान्नाय्यधर्मप्रतिषेधः नित्यस्य न्यायसिद्धस्यैवार्थस्यानुवादस्स्यात्॥

नन्वनूद्य किञ्चिद्विधेयम्। न चात्र किञ्चिदपि विधेयं पश्याम इत्यस्वरसादाह—

**विहितप्रतिषेधो वा ॥ ३५ ॥**

वा शब्दोऽवधारणे। केषाञ्चिच्छाखायामत्र पयसि श्रपणार्थेऽपि "यजुषा वत्सानपाकरोति। पवित्रवति गां दोग्धि" इति विशिष्य विहितं तस्यायं प्रतिषेधः। विधिप्रतिषेधाभ्याञ्च विकल्पः॥

अथ यदुक्तं श्लेष्मादिप्रकोपे पयो वर्जनीयमित्युक्ते पयसि श्रृतमपि वर्ज्यते लोके, ततश्च पयोधर्मस्य वर्जनस्य गुणभूतेऽपि पयसि दर्शनादिहापि पयोधर्मा गुणभूतेऽपि पयसि स्युरिति। तत्राह--

**वर्जने गुणभावित्वात्तद्युक्तः प्रतिषेधस्स्यात् कारणात्केवलाशनम् ॥ ३६ ॥**

श्लेष्मादिप्रकोपे पयोवर्जने उक्ते सति पयोयुक्तस्यापि प्रतिषेधो युक्तस्स्यात्। कुतः? गुणभावित्वात्। लोके पयसः भोज्यद्रव्यगुणभूतत्वात्। ननु कदाचित्केव-

---

४. न तु. अ.

लमपि पयः पीयते लोके। तत्राह--कारणात्केवलाशनमिति। 'पयो ब्राह्मणस्य व्रतम्' इति शास्त्राद्वा केवलं पयः पथ्यकौषधविशेषसेवनाद्वा कारणात् कदाचित्कश्चित्केवलं पयः पिबति, न त्वेतत्प्रचुरम्। अतः प्रायेण भोज्यद्रव्यगुणभूतत्वात् पयसस्तद्वर्जनवाक्यात् पयोयुक्तमेव वर्जनीयमिति लभ्यते लोके। एवञ्च लोके वर्जनस्य केवलपयोधर्मस्य पयसि गुणभूतेऽपि दर्शनादिहापि तथा भवितव्यमिति सामान्यतो दृष्टान्तस्य कथमुन्मेषः॥

केचित्तु 'तत्प्रतिषेधे च तथाभूतस्य वर्जनात्' इत्यत्रान्यथा परिहारमाहुः। [1]तं दूषयितुमनुवदति—

**व्रतधर्माच्च लेपवत्॥ ३७॥**

'ब्रह्मचारी न मांसमश्नाति' इति व्रतिनो[2] ब्रह्मचारिणो व्रतरूपो धर्मः मांसवर्जनात्मकः। स तावद् दर्व्यादिगतेऽतिसूक्ष्मे मांसलेपेऽपि प्रवर्तते यथा, तद्वत् श्लेष्मप्रकोपे पयो वर्ज्यमिति वर्जनात्मकः पयोधर्मोऽपि भोज्यद्रव्यलग्ने[3]ऽपि पयसि प्रवृत्तिमर्हतीति युक्तम्। लोके मांसस्य वार्ताकादिवदवयवश एव भक्ष्यत्वप्रसक्तेः। इह तु पयसि चरुलग्ने सान्नाय्यपयोधर्मा न प्रवर्तन्ते, तेषां प्रदेयत्वेन श्रुतमेव पयोऽधिकृत्य प्रवृत्तेः। चरुलग्नस्य च पयसः प्रदेयत्वाभावादिति वैषम्यमिति। तमिममन्योक्तं परिहारं दूषयति—

**रसप्रतिषेधो वा पुरुषधर्मत्वात्॥ ३८॥**

वा शब्दो नार्थे। लेपवदिति दृष्टान्तो न सम्भवति, वैषम्यात्। 'ब्रह्मचारी न मांसमश्नाति' इति हि रसप्रतिषेधः। 'गुणवचनेभ्यो मतुपो लुक्' इति रसशब्दात् मतुब् लुप्यते। विदितरसवतो [4]मांसलेशस्यापि प्रतिषेधः। यावति मांसलेशे भक्षिते तद्रसोऽनुभूयते तावल्लेशस्य प्रतिषेधो गम्यते। कुतः? पुरुषधर्मत्वात्। मांसभक्षणे हि पुरुषः प्रत्यवैति, तद्वर्जनात्तु न प्रत्यवैति। अतो मांसवर्जनस्य प्रत्यवायपरिहाररूपमदृष्टं प्रयोजनं शास्त्रैकसमधिगम्यम्। श्लेष्मादिप्रकोपे तु पयोवर्जनस्य [5]नादृष्टं प्रयोजनमस्ति, तस्यान्वयव्यतिरेकानुविधायित्वात्। ततश्च भोज्यलग्नस्य

---

१. तद्दूषयितुं. क. २. व्रतिनः. नास्ति. अ.
३. लेपे. क. ४. मांसलेपस्य. क.
५. नादृष्टार्थं. क.

तदलग्नस्य वा पयोबिन्दोर्भक्षणे श्लेष्मादिप्रकोपाभावात्, सत्यपि श्लेष्मादिप्रकोपे तद्वर्जनमनैकान्तिकमिति वैषम्यम्। तस्मादुक्त एव परिहारः। अतः पयसि उत्पवनादयः प्रणीताधर्मा एव कर्तव्याः। प्रणीतानां संयवनमात्रार्थत्वे तु लौकिक एव पयसि श्रपणमिति ॥

इति दशमं प्रायणीयेष्टौ पयसि सान्नाय्यधर्माननुष्ठानाधिकरणम् ॥

११

अभ्युदयेष्टौ "यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेद्ये मध्यमास्स्युः तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात्, ये स्थविष्टास्तानिन्द्राय प्रदात्रे दधंश्चरुम्, येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम्" इत्यत्र दधिपयसोः सान्नाय्यधर्माः ? उत प्रणीताधर्माः ? इति संशये, पूर्ववत्सप्तमीश्रुत्या दधिपयसोः प्रदेयद्रव्यत्वाभावान्न सान्नाय्यधर्माः कार्याः, किन्तु प्रणीताधर्मा एव कार्या इति प्राप्ते, सिद्धान्तयति –

**अभ्युदये दोहापनयः स्वधर्मा स्यात्प्रवृत्तत्वात् ॥ ३९ ॥**

अत्र च न कर्मान्तरविधिः, किन्तु पूर्वप्रवृत्तदर्शकर्मणि चन्द्राभ्युदये निमित्ते दधिपयसोस्त्रेधा तण्डुलान्विभजेदिति पूर्वदेवतापनयो विधीयते, न तु मध्यमादिभावेन विभागविधिः। 'ये मध्यमा' इत्याद्यनुवादबलेनैव (तत्सिद्धेः। न च पूर्वदेवतापनयो दधिपयसोरपि भवति। पूर्वदेवताभ्यो विभजेदित्यनेनैव) [1]पूर्वदेवतावियुक्तं हविरिति निश्चये सति, [2]तस्य पुनस्तण्डुलपदेन विशेषणायोगेन तस्य तण्डुलपदस्य हविर्मात्रोपलक्षणार्थत्वात्। ततश्च पूर्वदेवतापनये सत्यपेक्षितत्वाद् देवतान्तरसम्बन्धमात्रं ये स्थविष्ठा इत्यादिना विधीयत इति षष्ठस्य पञ्चमपदाद्यधिकरणे स्थितम्। तद्यदि [3]हविषां देवतान्तरसम्बन्धो दधिपयसोश्च प्रणीताकार्ये श्रपणेऽधिकरणत्वेन विधिस्स्यात्, तदा प्राप्तकर्मण्यनेकगुणविधानाद् वाक्यभेदस्स्यात्। ततश्च सप्तम्यर्थमुपेक्ष्य दधिपयसोः प्रदेयत्वेनैव प्रवृत्तेस्सान्नाय्यधर्मा एव भवन्ति, न तु

---

() अपुस्तके ग्रन्थपरतः. १. तत्पूर्वदेवता. अ.
२. पुनस्तस्य. क. ३. हविषः. क.

प्रणीताधर्माः। तदयमर्थः--अभ्युदयवाक्ये दोहयोर्दधिपयसोः प्राकृतयोः पूर्वदेवतापनयः षष्ठे आस्थितः। अतो दधि पयश्च दोहः स्वधर्मा स्यात्तयोरत्र प्रदेयत्वेन प्रवृत्तत्वादिति ॥

इतोऽप्येवमित्याह--

**शृतोपदेशाच्च ॥ ४० ॥**

"शृते चरुम्" इति पयस्सिद्धवच्छृतं निर्दिश्यते। तदिदं सत्सु दोहधर्मेषूपपद्यते, न तु प्रणीताधर्मेषु, प्रणीतानां श्रपणाभावात्। यद्यपि षाष्ठिकेनाभ्युदयेष्ट्यधिकरणेन गतार्थप्रायमिदम्, तथापि पूर्वाधिकरणरीत्या सप्तमीश्रुत्या प्रणीताकार्यार्थत्वमिति भ्रमनिराकरणार्थमित्यदोषः ॥

इत्येकादशमभ्युदयेष्टौ दधिशृतयोः सान्नाय्यधर्मानुष्ठानाधिकरणम् ॥ ११ ॥

१२

इदमामनन्ति—"यः पशुकामस्स्यात् सोऽमवास्यामिष्ट्वा वत्सानपाकुर्याद्ये क्षोदिष्ठास्तानग्नये सनिमतेऽष्टाकपालं कुर्याद्ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुम्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्" इति। अत्रापि दधिपयसोस्सान्नाय्यधर्माः कर्तव्याः? न वा? इति संशये[1], अभ्युदयेष्टितुल्यश्रुतित्वात् कर्तव्यास्सन्नाय्यधर्मा इति प्राप्ते, सिद्धान्तयति—

**अपनयो वा अर्थान्तरे विधानाच्चरुपयोवत् ॥ ४१ ॥**

वा शब्दोऽवधारणे। सन्नाय्यधर्माणामत्रापनय एव स्यात्। कुतः? अर्थान्तरे विधानात्–प्रणीताकार्ये श्रपणे आधारत्वेन विधानात्। न चैवं सति शृते चरुं कुर्यात् तच्च विष्णवे शिपिविष्टायेति वाक्यभेदश्शङ्क्यः। न ह्यत्राभ्युदयेष्टिवाक्य इव प्राप्तदर्शकर्मणि गुणविधिः, येन वाक्यभेददोषस्स्यात्, किन्तु पयोदधिविशिष्टचरुविशिष्टकर्मान्तरविधिरेवायम्, यदाग्नेयादिवाक्यवत्। ततश्चादित्यचरौ पयस इव प्रदेयगुणत्वादिहापि न सान्नाय्यधर्माः, किन्तु प्रणीताधर्मा एव ॥

---

१. संशयः। तत्र. क.

नन्वेवं सति प्रणीतानामिव पयसोऽपि श्रपणाच्छृतशब्दः कथमत्र पयसीत्यत आह—

**लक्षणार्था श्रृतश्रुतिः ॥ ४२ ॥**

प्रायेण श्रपयितव्यात् पयसि शृतशब्दो लाक्षणिकः। तस्मान्नात्र दधिपयसोस्सान्नाय्यधर्माः ॥

इति द्वादशं पशुकामेष्टौ दधिश्रृतयोः प्रणीताधर्मानुष्ठानाधिकरणम् ॥१२॥

१३

ज्योतिष्टोमे श्रूयते—"पयसा मैत्रावरुणं श्रीणाति, हिरण्येन शुक्रम् सक्तुभिर्मन्थम् , आज्येन पात्नीवतम् , धानाभिर्हारियोजनम्" इति। श्रीणाति मिश्रयतीत्यर्थः। किमिह प्रदेयत्वेन श्रयणद्रव्याणां विधिः ? उत सोमसंस्कारकत्वेन ? इति संशये, पूर्वपक्षयति—

**श्रयणानान्त्वपूर्वत्वात् प्रदानार्थे विधानं स्यात् ॥ ४३ ॥**

तुर्वैषम्ये। उक्तपशुकामेष्टौ पयसः प्रदेयत्वेन विध्यभावेऽपि श्रयणद्रव्याणां प्रदानार्थे यागलक्षणकार्ये प्रदेयत्वेन विधानं स्यात्। न च "पयसा मैत्रावरुणम्" इत्यादिद्वितीयाश्रुत्या सोमसंस्कारकत्वम्, तृतीयाश्रुत्या च सोमं प्रति गुणत्वञ्च नैषां युक्तमिति वाच्यम्, तथा सति पयोहिरण्यादीनामदृष्टार्थत्वापत्तेः। प्रदेयत्वेन तद्विधौ च यागनिर्वृत्त्या दृष्टार्थत्वलाभात्। ततश्च दृष्टार्थत्वलोभेन द्वितीयाश्रुतिं तृतीयाश्रुतिञ्चावेक्ष्य मिश्रणमात्रे तात्पर्यं कल्पयित्वा प्रदेयत्वेनैवैषां विधानमाश्रयितव्यम्। नन्वत्र प्रकृतिप्राप्तं श्रयणमनूद्य पयोहिरण्यादिविधिरत्र किं न स्यादित्यत आह—अपूर्वत्वादिति। सोमयागस्यापूर्वत्वेन तत्र श्रयणस्य प्रकृतितः प्राप्त्यभावात्। तस्मात्पयोहिरण्यादिषु यथायथं प्रदेयधर्माः कर्तव्याः ॥

अथ सिद्धान्तयति—

**गुणो वा श्रयणार्थत्वात् ॥ ४४ ॥**

वा शब्दोऽवधारणे। पयोहिरण्यादिकं सोमस्य प्रदेयस्य गुण एवात्र विधीयते। कुतः ? पयसेत्यादितृतीयाश्रुत्या सोमश्रयणं प्रति पयोहिरण्यादीनां गुणभावावगमेन श्रयणद्वारा सोमार्थत्वात् ॥

इतोऽपि तेषां न प्रदेयत्वमित्याह—

**श्रुतेश्च तत्प्रधानत्वात् ॥ ४५ ॥**

द्वितीयाश्रुत्या तेषां सोमप्रधानकत्वावगमाच्चेत्यर्थः। न चैवं सत्यदृष्टार्थत्वं स्यादिति वाच्यम्। प्रमाणानुसारेण हि प्रयोजनं कल्पनीयम्, न तु प्रयोजनानुसारेण प्रमाणप्रवृत्तिः। ततश्च दृष्टप्रयोजनलिप्सया श्रुत्यपेक्षा न युज्यते। तस्मान्न प्रदेयत्वेन विधिरेषाम् ॥

इतोऽप्येवमित्याह—

**अर्थवादश्च तदर्थत्वात् ॥ ४६ ॥**

ल्यब्लोपे पञ्चमी। अर्थवादोऽपि सोमश्रयणार्थत्वमेषामभिप्रेत्य प्रवृत्तो दृश्यते—"मित्रं देवा अब्रुवन् सोमं राजानं हनाम" इत्युपक्रम्य, "सोऽब्रवीद्वरं वृणै पयसैव मे सोमं श्रीणन्" इति। अत्र हि सोमस्य पयसा श्रयणमेव वृतम्, न तु पयो मे दद्युरिति। प्रदेयत्वे तु तथैव व्रियेत। तस्मादपि न प्रदेयत्वम् ॥

इतोऽप्येवमित्याह—

**संस्कारं प्रति भावाच्च तस्मादेष्वप्रदानं स्यात् ॥ ४७ ॥**

चेत्यनन्तरं सोमसंस्कारकत्वमिति शेषः। संस्कारं प्रति-संस्कारविधिस्थले, भावात्-पयसा मैत्रावरुणमित्यादिवाक्यानां पाठसद्भावादपि सोमसंस्कारकत्वमेवैषाम्। "ऐन्द्रवायवं गृह्णाति" "मैत्रावरुणं गृह्णाति" इत्यादयो देवतासम्बन्धविधयः। नैतानि[1] वाक्यानि तत्प्रायपठितानि, किन्तु संस्कारविधिप्रायपठितानि। अतस्संस्कारविधय एवैते। एवं सन्निवेशश्च क्वचिच्छाखायामन्वेष्टव्यः। तस्माद्देवतासम्बन्धालाभादेषु पयोहिरण्यादिषु प्रदानं न स्यात्। अतः प्रदेयधर्मा न भवन्तीति ॥

इति त्रयोदशं सोमे श्रयणार्थेषु पयआदिषु प्रदेयधर्माननुष्ठानाधिकरणम् ॥ १३ ॥

---

१. नेमानि. क.

१४

अश्वमेधे सन्त्यारण्याः पशवः "ईशानाय परस्वत आलभेत" इत्यादयः। तान् प्रकृत्य श्रूयते--"पर्यग्निकृतानारण्यानुत्सृजति" इति। परस्वच्छब्द आरण्यमृगविशेषे[१]। किमत्र ईशानवाक्ये देवतामुद्दिश्यालम्भमात्रं विधीयते, आलब्धानाञ्च पर्यग्निवाक्ये पर्यग्निकरणविशिष्टोत्सर्गः बहिःक्रतूत्सारणात्मको विधीयते? उत ईशानवाक्यं यागविधिः, पर्यग्निवाक्यञ्च तत्र गुणविधिः? इति संशये, पूर्वपक्षयति--

## पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ ४८ ॥

पर्यग्निकृतानामुत्सर्गे पर्यग्निकृतवाक्यावगते बहिःक्रतूत्सारणात्मके ईशानवाक्यविहितस्यालम्भस्य तादर्थ्यं-शेषत्वं प्रत्येतव्यम्। ईशानमुद्दिश्यालभ्य पर्यग्निकृत्वा बहिःक्रतूत्सारयितव्या इति। उपधानवत्--"बार्हस्पत्यश्चरुर्भवति" इति विहितस्य चरोः "चरुमुपदधाति" इत्युपधानार्थत्वं यथा, तद्वत्। न चेशानायेति देवतासंयोगेन यागविधित्वमीशानवाक्यास्यावश्यं वक्तव्यमिति कथं तत्रालम्भमात्रविधिरिति वाच्यम्, ईशानवाक्यस्य यागविधित्वे पर्यग्निवाक्यस्य विधेयालाभेनानर्थक्यापत्त्या ईशानवाक्यस्यालम्भमात्रविधिपरत्वनिश्चये सति उपधेयचराविव देवतासम्बन्धस्य कथञ्चिन्नेयत्वात्। तथाहि--ईशानवाक्यस्य यागविधायकत्वं वदन् प्रष्टव्यः- किं बहिःक्रतूत्सारणात्मक उत्सर्गो विधीयते? उत न ममेति मानसिकत्यागात्मक उत्सर्गः? अथवा तस्मिन् पर्यग्निकरणोत्तरत्वम्? यद्वा पर्यग्निकरणम्? किं वा पर्यग्निकरणान्ताङ्गरीतिः? आहोस्वित् पर्यग्निकरणात् परेषामङ्गानां प्रतिषेधः? पर्यग्निकरणकालविधिर्वा? इति। न तावदाद्यः कल्पः; बहिः क्रतु पशोरुत्सारणे सतीशानवाक्यविहितयागस्यानिर्वृत्तिप्रसङ्गात्। न द्वितीयः; न ममेति त्यागरूपस्योत्सर्गस्य यागविधिनैव प्राप्तत्वात्। न तृतीयः; कृते पर्यग्निकरणे त्यागस्योत्तमप्रयाजोत्तरतायाः प्रकृतित एव प्राप्तत्वात्, तदव्यवहितोत्तरत्वस्य चाशब्दत्वात्। बाल्यादुत्तरं वृद्धत्वमित्यत्र यौवनस्य व्यवहितेऽप्युत्तरत्वे व्यपदेशात्। न चतुर्थः; पर्यग्निकरणस्यापि चोदकतः प्राप्तत्वात् पर्यग्निकृतेति क्तप्रत्ययेन पर्यग्निकरणस्योपसर्जनत्वप्रतीतेः विधेयस्य च प्रधानत्वावश्यम्भावात्। अथास्तु पञ्चमः

१. विशेषः. क, विशेषवाचकः. ग.

पक्षः, सिद्धवत्कृत्य पर्यग्निकृतशब्दस्तदन्ताङ्गकलापं गमयतीति चेन्न; ईशानवाक्यस्य यागविधित्वे पर्यग्निकरणान्तरीतेरपि प्रकृतित एव प्राप्तत्वात्। अथ तदुत्तरपदार्थप्रतिषेधविधिरिति षष्ठपक्षोऽस्त्विति चेन्न; प्रतिषेधकशब्दाभावेन त्रिदोषपरिसङ्ख्यापत्तेः। नापि सप्तमः; पर्यग्निकरणकालस्याशाब्दत्वात्। किञ्च कालविधिस्सर्वोऽपि नियमविधिरिति चतुर्थस्य द्वितीये () स्थितम्। ततश्च कालान्तरमेव निवर्तते, न त्वङ्गान्तरमपि। साङ्गप्रधानप्रयोगाङ्गं काल इत्येकादशे वक्ष्यते। ततश्च चोदकप्राप्तकृत्स्नाङ्गयुक्तस्य यागात्मकोत्सर्गस्य पर्यग्निकरणकालेऽशक्यविधानत्वादप्रमाणमेव पर्यग्निवाक्यं प्रसज्येत। तस्मादालम्भमात्रमीशानशब्दतो निर्देशयुक्तमीशानवाक्ये न विधीयते। पर्यग्निवाक्ये तु तेषामालब्धानां क्रतुबहिरुत्सरणात्मक उत्सर्गः पर्यग्निकरणविशिष्टो विधीयते। ईशानवाक्यतः क्रतुबहिरुत्सारणात्मकोत्सर्गस्य प्राप्तत्वादुत्सर्गस्य चास्य यागरूपत्वाभावेन तत्र चोदकतः पर्यग्निकरणस्याप्राप्तत्वात्॥

अथ सिद्धान्तयति—

**शेषप्रतिषेधो वार्थाभावादिडान्तवत्॥ ४९॥**

वा शब्दो वार्थे। ईशानवाक्यं यागविधिः, किन्त्वालम्भमात्रविधिरिति न सम्भवति। कुतः? अर्थाभावात्—एवं सत्यानर्थक्यप्रसङ्गात्। यागेन विना देवतासम्बन्धस्योपपादयितुमशक्यत्वात्। ततश्चानन्यथासिद्धदेवतान्वयबलादीशानवाक्यं यागविधिरेव नालम्भमात्रविधिः। नन्वेवं सति पर्यग्निवाक्यानर्थक्यमित्यत आह—शेषप्रतिषेध इति। पर्यग्निकरणान्ताङ्गरीतिरत्र पर्यग्निवाक्ये विधीयते। न च सापि चोदकतः प्राप्तेति शङ्क्यम्। गृहमेधीयाज्यभागन्यायेन () चोदकलोपे सति चोदकतोऽङ्गान्तराणामप्राप्ततया फलतोऽङ्गान्तरप्रतिषेधार्थत्वे पर्यवसानात् पुनस्तद्विधानस्य। एवञ्च फलतः परिसङ्ख्यानान्न त्रैदोष्यदोषावकाशः। तस्मादीशानवाक्यं यागविधिः। पर्यग्निवाक्यन्तु पर्यग्निकरणादुत्तरेषामङ्गानां प्रतिषेधपरम्, इडान्तवत्। "इडान्तातिथ्या" इत्यत्र यथेडान्त उत्तरेषामङ्गानां प्रतिषेधस्तद्वत्। उत्सृजतिस्तु यागमनुवदति, [१]पर्यग्निकरणोक्ताङ्गोत्सर्गं वा॥

---

१. पर्यग्निकरणोत्तराङ्गं क.

इतोऽप्येवमित्याह—

**पूर्ववत्त्वाच्च शब्दस्य संस्थापयतीति चाप्रवृत्ते नोपपद्यते ॥ ५० ॥**

द्वितीयश्चकारोऽनुक्तसमुच्चये। "त्वाष्ट्रं पात्नीवतमालभते" इति प्रकृत्य श्रुतम् "पर्यग्निकृतं पात्नीवतमुत्सृजति आज्येन शेषं संस्थापयति" इति। यद्यत्र ईशानवाक्यं न यागविधिपरम् पर्यग्निवाक्यन्तु पर्यग्निकरणविशिष्टबहिःक्रतूत्सारणरूपोत्सर्जनविधिपरं स्यात्, तर्हि तुल्यश्रुतित्वात् पात्नीवतवाक्यं तदुत्तरपर्यग्निवाक्यमपि तथा स्यात्। तथा सति चाप्रवृत्तेऽप्रस्तुते यागे "शेषं संस्थापयति" इत्यत्र संस्थापयतीति शेषमिति च शब्दो नोपपद्यते। कुतः? शब्दस्य पूर्ववत्त्वात्—उभयस्यापि शब्दस्य यागप्रवृत्तिपूर्वकत्वात्। न ह्यत्र यागः प्रवृत्तः, येन तस्य [1]शेषसमाप्तिवचनं युज्येत। आलम्भः पर्यग्निकरणं बहिःक्रतूत्सारणमिति त्रितयमेव ह्यत्रापूर्वं विधित्सितम्। तस्य तु तावन्मात्रत्वादेव समाप्तिर्न वक्तव्या, शेषोऽपि न सम्भाव्यते। यदि त्वीशानवाक्यं यागविधिः पर्यग्निवाक्यञ्च पर्यग्निकरणादुत्तराङ्गप्रतिषेधकं स्यात्, तर्हि तुल्यश्रुतित्वात् पात्नीवतवाक्यं तदुत्तरं पर्यग्निवाक्यञ्च तथा भवति। ततश्च पात्नीवतयागस्य पर्यग्निकरणोत्तराङ्गाभावादाज्येन शेषं संस्थापयतीति कर्मान्तरविधानं सम्पद्येत। एवञ्चाज्यद्रव्यकपात्नीवतयागः पात्नीवतपशुयागतुल्यो देवतासाम्यात्। तदङ्गानि च पात्नीवतयागीयाङ्गत्वेन सादृश्यात् तच्छेषव्यपदेशमर्हतीति, संस्थापयतिशब्दश्शेषशब्दश्च समञ्जसो भवति। तस्मादप्यत्रेशानवाक्यं यागविधिः। पर्यग्निवाक्यन्तु पर्यग्निकरणोत्तराङ्गप्रतिषेधकमेव स्थितम्॥

अथ पूर्वपक्षे प्रयोजनमाह—

**प्रवृत्तेर्यज्ञहेतुत्वात् प्रतिषेधे संस्काराणामकर्म स्यात्तत्कारितत्वात्**
**यथा प्रयाजप्रतिषेधे ग्रहणमाज्यस्य ॥ ५१ ॥**

धर्मप्रवृत्तेर्यज्ञहेतुत्वात्-यागप्रयुक्तत्वात् तत्प्रतिषेधे ईशानवाक्ये यागविध्यभावे सति पाशुकसंस्काराणामकर्म—अक्रिया स्यात्। कुतो यागप्रयुक्तिता? यज्ञकारितत्वात्। नवमाद्ये संस्काराणां यागप्रयुक्तत्वस्य व्यवस्थापितत्वात्। अतो

---

१. शेष. नास्ति. क.

यागाभावे पाशुकसंस्कारा न भवन्ति । यथा प्रयाजाः, उदयनीये जुह्वां प्रयाजार्थचतुर्गृहीताज्यस्य न ग्रहणं तद्वत् ॥

अथ सिद्धान्ते प्रयोजनमाह—

**क्रिया वा स्यादपच्छेदादकर्म सर्वहानं स्यात् ॥ ५२ ॥**

वा शब्द एवार्थे । ईशानवाक्यविहिते यागे पर्यग्निकरणान्तपदार्थानामेव क्रिया स्यात्, न तु तदुत्तरेषाम् । कुतः ? अपच्छेदात्-पर्यग्निवाक्ये तत्प्रतिषेधात् । नन्वेवं पर्यग्निकरणोत्तरं यागानुष्ठानमपि न स्यादित्यत आह—अकर्म सर्वहानं स्यादिति । कर्म यागानुष्ठानम्, तद्व्यतिरिक्तानामेव सर्वेषां पर्यग्निकरणोत्तरपदार्थानां हानं प्रतिषेधः स्यात्, यागविधिबलादिति ॥

इति चतुर्दशं परस्वद्यागे पर्यग्निकरणान्ताङ्गविध्यधिकरणम् ॥ १४ ॥

१५

"त्वाष्ट्रं पात्नीवतं पशुमालभते" इति प्रकृत्य श्रूयते—"पर्यग्निकृतं पात्नीवतमुत्सृजति, आज्येन शेषं संस्थापयति" इति । किमिह पर्यग्निकृते पशौ बहिःक्रतूत्सारिते पात्नीवतयागस्य द्रव्यापेक्षायां पशुस्थाने आज्यं प्रतिनिधित्वेन विधीयते ? उताज्यद्रव्यकं यागान्तरं विधीयते ? इति संशये, पूर्वपक्षयति—

**आज्यसंस्थाप्रतिनिधिस्स्यात् द्रव्योत्सर्गात् ॥ ५३ ॥**

यस्मिन्वाक्ये आज्येन संस्था श्रुता, तत्र पशुस्थाने आज्यं प्रतिनिधिर्भवति । कुतः ? द्रव्योत्सर्गात्—पशुद्रव्यस्य बहिःक्रतूत्सारितत्वेन यागस्य द्रव्यापेक्षित्वात् ।

ननु पूर्वाधिकरणे "ईशानाय परस्वत आलभते" इति यागविधिः, "पर्यग्निकृतानारण्यानुत्सृजति" इति पर्यग्निकरणोत्तरपदार्थनिषेध[1] इति व्यवस्थापितत्वात् तुल्यश्रुतित्वेन तन्न्यायस्यात्रापि प्रवृत्तेः[2] । अतो यागान्तरमेवाज्यद्रव्यकमिह विधेयमित्याशङ्क्य तुल्यश्रुतित्वमसिद्धमित्याह—

**संस्थापयतीति चापूर्वे नोपपद्यते ॥ ५४ ॥**

चकारोऽनुक्तसमुच्चये । यदि पूर्वाधिकरणन्यायात् पर्यग्निवाक्ये पर्यग्निकरणोत्तरपदार्थप्रतिषेधादाज्येन शेषमिति यागान्तरमपूर्वं विधीयेत, ततश्च तत्र

---

१. प्रतिषेधः. क, ग. २. प्रवृत्तिः. क.

संस्थापयतीति शेषमिति च शब्दो नोपपद्येत। संस्थापयतीत्यस्य प्रक्रान्तसमाप्तिपरत्वात्। शेषशब्दस्य पूर्वस्मिन् कर्मणि यत्कृतं तदितरपरत्वात्। अतो न तुल्यन्यायत्वम्। ततश्च पर्यग्निकरणपर्यन्तं कृत्वा पशौ बहिःकृतूत्सारिते तस्यैव कर्मणश्शेषमाज्येन समापयेदिति पर्यवसनाद् आज्यं पशुप्रतिनिधिः॥

अथ सिद्धान्तयति—

**चोदना वा कर्मोत्सर्गादन्यैः स्यादविशिष्टत्वात् ॥ ५५ ॥**

वा शब्दोऽवधारणे। "आज्येन शेषं संस्थापयति" इति यागान्तरविधिरेव स्यात्, न पूर्वस्मिन्यागे प्रतिनिधित्वेनाज्यविधिः। कुतः? कर्मोत्सर्गात्—पूर्वाधिकरणन्यायेनात्रापि पर्यग्निवाक्ये पर्यग्निकरणान्तरीतिविधाने सति तयैव निराकाङ्क्षस्य पूर्वकर्मण उत्सर्गात् समाप्तत्वावगमात्। ततश्च न पूर्वकर्मणश्शेषोऽस्ति, येन तस्याज्येन समापनमुच्येत। तस्मात्कर्मान्तरविधिरेवायम्। न च देवतासम्बन्धाभावात्कथं यागलाभ इति शङ्क्यम्। पूर्ववाक्यस्थपात्नीवतपदानुषङ्गेण तदुपपत्तेः। अनुषक्तञ्च पात्नीवतपदं न शेषशब्देन संस्थापयतीति धातुना च सम्बन्धमर्हति। अस्य कर्मणोऽपूर्वत्वेन तत्र तदुभयासम्भवस्योक्तत्वात्, किन्तु आज्येनेति प्रातिपदिकेनान्वेति। संस्थाभावादेव तृतीयाप्यनुपपन्नत्वात् पात्नीवतमाज्यमिति च धातूत्तरप्रत्ययेनान्वेति—त्वाष्ट्रमाज्यं कुर्यादिति। ननु तर्हि शेषशब्दस्य संस्थाधातोस्तृतीयायाश्च किं प्रयोजनमित्यत आह—अन्यैरविशिष्टत्वादिति। 'सौर्यं चरुं निर्वपेत्' इत्यादौ निर्वपत्यादिपदैरविशिष्टत्वात्—तुल्यन्यायत्वादित्यर्थः। अनुवाद इति यावत्। तस्मादाज्यद्रव्यकं त्वष्टृदेवत्यमुपांशुयाजप्रकृतिकं यागान्तरमेवेदम्॥

इतोऽप्येवमित्याह—

**अनिज्याश्च वनस्पतेः प्रसिद्धां तेन दर्शयति ॥ ५६ ॥**

वनस्पतेरिति त्वष्टुरप्युपलक्षणम्। पर्यग्निकरणान्ते यागस्य समाप्तत्वेन हेतुना तत्र वनस्पतेरनिज्यां प्रसिद्धां दर्शयति—"अथ यत्त्वष्टारञ्च वनस्पतिञ्चावाहयसीति। अथेमौ क्व यक्ष्यसीति त्वाष्ट्री नवमी प्रयाजेज्या वानस्पत्या दशमी तत्रैवैनाविष्टौ विद्यात्" इति वाक्यशेषः। हे होतः, त्वाष्ट्रपशौ त्वष्टारमावह वनस्पतिमावहेति त्वष्टारं वनस्पतिञ्चावाहयसि। क्व कदा तौ यक्ष्यसि—याज्यावषट्काराभ्यां प्रत्तहविर्भागौ करिष्यसि। प्रकृतौ तदाज्ययोः पर्यग्निकरणादतिव्यवहितकालकत्वात्।

अस्य च पशोः पर्यग्निकरणान्तत्वादिति प्रश्ने त्वाष्ट्रपशौ नवमी प्रयाजेज्या त्वाष्ट्री "देवं त्वष्टारमिह यक्षि" इत्यादिमन्त्रवर्णात्। दशमी तु वानस्पत्या "वनस्पतिः शमिता देवः" इत्यादिमन्त्रवर्णात्। अतस्ताभ्यां ताविष्टौ याज्यावषट्काराभ्यां प्रत्तहविषौ भवत इत्युत्तरम्। इह च वनस्पतेः त्वष्टुश्चावाहितयोस्सवषट्कारयागाभावं दोषमुद्भाव्य नवमदशमप्रयाजाभ्यामनुग्रहदर्शनात् त्वाष्ट्रपशुयागस्य पर्यग्निकरणान्ते समाप्तिप्रतीतेराज्यद्रव्यकमिदं यागान्तरमिति गम्यते। त्वाष्ट्रपशोराज्यलक्षणप्रतिनिधिना समाप्त्यभ्युपगमे तु त्वष्टृवनस्पतियागयोस्सवषट्कारयोस्सत्वात् तदसाङ्गत्यं स्पष्टमेव। अतोऽप्यत्र कर्मान्तरविधिः॥

नन्वेवं सति संस्थाशब्दश्शेषशब्दस्तृतीया च कथमनुवादस्स्यात् विरुद्धत्वादित्यत आह—

**संस्था च तद्देवतत्वात् स्यात्॥ ५७॥**

चोऽनुक्तसमुच्चये। पूर्वयागस्त्वाष्ट्रः, अयमपि तथा। सादृश्यमादाय च पूर्वयागस्यायं शेषसमाप्तिरिति वादो घटते। आज्यद्रव्यको ह्ययं यागः पूर्वयाग इव त्वष्टृदेवत्यः। अतस्तत्संस्था पूर्वयागसंस्थेत्युपचर्यते। तद्विधोऽपि पूर्वयागशेष इवेति भवति। तत्र पूर्वयागशेषव्यपदेशः। आज्येनेति तृतीयाऽपि संस्थासम्बन्धानुवाद एव। अत आज्यद्रव्यकं त्वष्टृदेवत्यमुपांशुयाजप्रकृतिकं यागान्तरमिति सिद्धम्॥

इति पञ्चदशमाज्यशेषाधिकरणम्॥ १५॥

इति श्रीमत्सन्ततसन्तन्यमानश्येन-कूर्म-षोडशार-रथचक्राकाराद्यनेकगुणविराजमान
महाग्निविलसित प्रौढापरिमितमहाध्वरस्य श्रीशाहजि-शरभजि-तुक्कोजि
भोजखलचोलमहीमहेन्द्रामात्यधुरन्धरस्य श्रीमत आनन्दरायविद्वत्सार्वभौमस्य
पञ्चपुरुषीपोष्येण बाल्य एव तद्दयानिर्वर्तितापरिमितमहाग्निविजृम्भित-
सर्वपृष्ठाप्तोर्यामवाजपेयादिप्रमुखसोममखसन्तर्पितशतमुखप्रमुखबर्हि-
र्मुखेन श्रीमहादेववाजपेययाजिसुतेनान्नपूर्णागर्भजातेनापारपद
वाक्यप्रमाणपारावारपारीणाग्रजन्मविश्वेश्वरवाजपेय-
याजितो लब्धविद्यावैशद्येन श्रीवासुदेव-
दीक्षितविदुषा विरचितायामध्वर-
मीमांसाकुतूहलवृत्तौ

**नवमाध्यायस्य चतुर्थः पादः॥**

नवमाध्यायस्समाप्तः॥



अध्वरमीमांसा-

# कुतूहलवृत्तौ

## दशमाध्यायस्य प्रथमः पादः

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

तदेवमतिदिष्टानामूहो नवमे विचारितः । अथास्मिन्दशमे बाधश्चिन्त्यते । तदुपोद्घातत्वेनेदमारभ्यते, दर्शपूर्णमासयोश्श्रुतम्-"देवस्य त्वेत्यसिदमश्वपर्शुं वादत्ते" "बर्हिर्देवसदनन्दामीति लुनाति" इत्यादि । असिदः स्वधितिः, अश्वपर्शुः अश्वस्य पार्श्वास्थि [1]लवित्राकृति । अस्ति च राजसूये मैत्राबार्हस्पत्यश्चरुः । तत्र श्रुतम्— "स्वयन्दिनं बर्हिः" इति । दो अवखण्डन इत्यस्माद् दिनमिति रूपम् । स्वयं शीर्णमित्यर्थः । तत्र "देवस्य त्वा" इत्यादयो बर्हिर्मन्त्राः लवनादयस्संस्काराः लवित्रमसिदादिद्रव्यञ्च प्रकृतितो भवन्ति ? न वा ? इति संशये, पूर्वपक्षयति—

**विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥१॥**

विधीयत इति विधिः--धर्मजातम्, तस्य प्रकरणान्तरे--विकृतौ, अतिदेशात्सर्वकर्म—कृत्स्नशः प्रयोगः स्यात् । न च स्वयं लूने बर्हिषि पुनर्लवनं प्रयोजनाभावान्न प्रवर्तते । लवनाभावाच्च तदीयमसिदादिद्रव्यं तन्मन्त्राश्च न प्रवर्तन्त इति वाच्यम् । यद्धि प्रकृतौ विद्यते तदतिदिश्यते । प्रकृतौ च शास्त्राणि पदार्थाः उपकाराश्च विद्यन्त इति भवति तेषामतिदेशः । स च प्रकृतौ पदार्थानामुपदेशात्मना पर्यवसन्नः, शास्त्राणामपि ततः प्राप्तेः । एवं चातिदिष्टानामपि पदार्थानामुपदिष्टतया तेषामङ्गत्वनिर्वाहाय दृष्टप्रयोजनालाभेऽदृष्टमेव प्रयोजनं कल्प्यम् । तथा च कृष्ण

१. लवित्राकृति. नास्ति. क.

लचरोः "घृते श्रपयति" इतिवत् स्वयंदिनेऽपि बर्हिषि लवनादिकमदृष्टार्थं प्रवर्तेत इति न कस्यापि बाधः। अतो बाधविचारो नारम्भणीय इति प्राप्ते, सिद्धान्तयति–

**अपि वाभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ।।२।।**

अपि वेति पक्षव्यावृत्तौ। अभिधानमिति मन्त्र उच्यते। करणे ल्युट्। "बर्हिर्देवसदनं दामि" इत्यादयो मन्त्राः। लवनादयः संस्काराः। असिदादि च लवनसाधनं द्रव्यम्। एतत्सर्वम् अर्थे–प्राकृते कार्ये सत्येव विकृतावतिदिश्यते, न तु तदभावे। कुतः? तादर्थ्यात्–अतिदेशस्योपकारमात्रप्रापणार्थत्वात्। न हि प्राकृतान्यङ्गानि शास्त्राणि वा स्वरूपेण प्राकृतोपकारमनादृत्यातिदिश्यन्ते। तथाहि–सौर्ययागेन स्वर्गं भावयेदिति यागस्य साधनत्वोपदेशे सति यथा यागः स्वर्गसाधनं भवति तथा कुर्यादित्यर्थो गम्यते। ततश्च कथम्भावाकाङ्क्षा–केन व्यापारेण फलसाधनं कुर्यादित्येवं यागगतफलसाधनतापादकव्यापारविशेषापेक्षा पर्यवस्यति, न तु यागगतफलसाधनतापादकत्वरूपं विना स्वरूपेण व्यापारापेक्षामात्रम्। यागगतफलसाधनतारूपसम्पादकत्वञ्च तत्तत्पदार्थजन्यदृष्टादृष्टोपकारसम्पादनस्यैव साक्षात्सम्भवति, पदार्थानान्तु तादृगुपकारव्यवधानेनेति साक्षात्सम्बन्धिन उपकारस्यैवापेक्षा, न तु व्यवहितानां पदार्थानामित्युपकारा एवातिदिश्यन्ते। पदार्थास्तु तत्पृष्ठभावेनातिदिश्यन्ते। शास्त्राणि चोपकारान्वितपदार्थपृष्ठभावेनातिदिश्यन्ते। स्वरूपेणैव पृथक् पदार्थातिदेशे तु "अग्नये जुष्टम्" [१]इत्यग्निपदस्यैव सौर्यादौ प्राप्तिसम्भवादूहोच्छेदात् 'ऋचं नोहेत्' इत्यादिप्रतिषेधानुपपत्तिः[२]। ततश्च प्रकृतौ यान्यङ्गानि यद्यदुपकाराय प्रभवन्ति तानि तत्तदुपकारे सत्येव विकृतावतिदिश्यन्ते। अर्थलुप्तानि तु नातिदिश्यन्ते ॥

यदुक्तं कृष्णलेष्वर्थलुप्तोऽपि पाको यथा भवति तद्वद्विकृतिष्वर्थलुप्तानामप्यतिदेशस्स्यादिति तत्राह–

**तेषामप्रत्यक्षशिष्टत्वात् ॥३॥**

तेषां–स्वयन्दिने बर्हिष्यभिधानसंस्कारद्रव्याणाम् अप्रत्यक्षशिष्टत्वात्–प्रत्यक्षविधानाभावात् चोदकस्य च प्राकृतोपकाराभावादप्रवृत्तिर्युक्ता। कृष्णलेषु

१. इत्यादिपदस्यैव. अ. २. प्रतिषेधानापत्तिः. क, ग.

तु "घृते श्रपयति" इति प्रत्यक्षविधानादर्थलुप्तोऽपि पाकोऽदृष्टार्थो भवतीति वैषम्यम्। तस्माद्विकृतावर्थलुप्तानि बाधमर्हन्ति। तस्मात् स्वयंदिने बर्हिष्यर्थलुप्तं लवनादि नातिदिश्यते॥

इति प्रथमे बाधारभ्यत्वाधिकरणे प्रथमं वर्णकम्॥१॥

## द्वितीयं वर्णकम्

"प्राजापत्यं चरुं घृते निर्वपेत् शतकृष्णलमायुष्कामः" इति। शतगुञ्जापरिमितानि सुवर्णानि यत्र सः शतकृष्णलश्चरुः। तत्र किं "अवरक्षो दिवः सपत्नं वध्यासम्" इत्यवघातमन्त्रः, अवघातस्संस्कारः, तत्साधनमुलूखलादिद्रव्यञ्च भवति? न वा? इति संशये, पूर्वपक्षयति—

**विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात्॥१॥**

पूर्ववद् व्याख्येयम्। न च पूर्ववर्णकेऽर्थलुप्तस्य चोदकतोऽनतिदेशावधारणात् कथमिहावघाताद्यतिदेश इति वाच्यम्। न हि चोदकात्तदतिदेशं ब्रूमः, किन्तु प्रत्यक्षवचनात्। चरुशब्दो ह्योदनवाची। न कृष्णलानामिह ओदनभावस्सम्भवति। अतश्चरुशब्दस्तद्धर्मलक्षकः। शतकृष्णलं चरुधर्मकं प्राजापत्यन्निर्वपेदिति। ततोऽवघातादिकं दृष्टासम्भवेऽप्यदृष्टार्थं प्रवर्तताम्॥

अथ सिद्धान्तयति—

**अपि वाभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात्॥२॥**

पूर्ववद्व्याख्येयम्॥

ननु मास्त्ववघातादीनामिह चोदकतोऽतिदेशः, प्रत्यक्षाच्चरुशब्दादेवावघातादिप्रवृत्तिरस्तु "घृते श्रपयति" इतिवत्तत्राह—

**तेषामप्रत्यक्षशिष्टत्वात्॥३॥**

कृष्णलेष्ववघातादीनां श्रपणवत् प्रत्यक्षविहितत्वाभावादप्रवृत्तिश्चोदकस्य, पूर्ववर्णकरीत्यार्थलुप्तेष्वप्रवृत्तेः। चरुशब्दो हि न धर्मलक्षकस्सन् तद्धर्मविधिपरः, विधौ गौणत्वाश्रयणायोगात्, किन्तु विद्रावणकालीनावयववैशद्यनिबन्धनसादृश्यानु-

वादक एव । अनुवादे लक्षणाया अदोषत्वात् । अतः कृष्णलेष्वप्यनर्थलुप्तमेवातिदिश्यते । श्रपणन्तु वाचनिकमदृष्टार्थमेव प्रवृत्तिमर्हतीति वैषम्यम् ॥

इति प्रथमाधिकरणे द्वितीयं वर्णकम् ॥

( अर्थलोपाद् बाधाधिकरणम् )

## तृतीयं वर्णकम्

"वैश्वदेवं चरुं निर्वपेत् भ्रातृव्यवान् तं बर्हिषदं कृत्वा शम्यया स्फ्येन च व्यूहेदिदमहममुष्मामुष्य व्यूहामीति यं द्विष्यात्तं ध्यायेद्यदधोऽवमृद्यते यच्च स्फ्य आश्लिष्यते तद्विष्णव उरुक्रमायावद्येत्" इति श्रुतम् । इडाभक्षणान्ते चतुर्धाकरणकाले चरुशेषं बर्हिषदं कृत्वा शम्यया स्फ्येन च चतुर्धा विभजेत्-"इदमहममुम्" इति मन्त्रेण । इदं-चरुशेषं चतुर्धा विभजन् अमुष्मामुष्य भ्रातृव्यं सर्वांश्छत्रून् व्यूहामीति मन्त्रार्थः । अमुममुमित्यनेन द्वेष्यं मनसा ध्यायन् विभजेत् । तदा विभजनकाले बर्हिषोऽधस्ताद् भूम्यां यदवमृद्यते पतति, यच्च स्फ्ये संश्लिष्टं तदुभयमपि विष्णव उरुक्रमायावद्येत् । अवदाय यागेन प्रतिपादयेदित्यर्थः । यद्यपि वैश्वदेवस्य बहुदेवत्यत्वेनाग्नीषोमीयविकारत्वादाग्नेयविकारत्वाभावाद् "आग्नेयं चतुर्धा करोति" इति न प्रवर्तते, तथापि शाखान्तरे "तं चतुर्धा करोति" इति सामान्यश्रुतत्वाद् वैश्वदेवेऽपि तत्प्रवृत्तिः । शाखान्तरोपसंहारस्त्वनित्य[1] इति निरूपितमेव [ द्वितीयाध्यायान्ते ] वैष्णवयागश्चायमौषधद्रव्यकत्वादेकदेवतत्वाच्चाग्नेयविकारः । प्रकृतौ च हविरासादनानन्तरं सामिधेन्यः, आवाहनम्, प्रयाजाः, आज्यभागौ, प्रधानप्रचारः, इडाभक्षणम्, चतुर्धाकरणमिति क्रमः । ततश्च वैश्वदेवावाहनकाले विष्णुमुरुक्रममावहेत्यावाहनं भवति न वेति संशये पूर्वपक्षयति—

**विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥१॥**

उक्तोऽर्थः । ततश्च वैष्णवयागे नैमित्तिकेऽस्मिन् प्राकृतविध्यन्तातिदेशादावाहनमपि प्राप्नोति । प्रयाजादिकन्तु छिद्रापिधानबहु[2] पशुपुरोडाशे पाशुकमिव प्रसङ्गादुपकरोतीति न पुनः क्रियते ॥

---

१. अनियतः, घ. २. बहु. नास्ति. अ.

अथ सिद्धान्तयति—

**अपि वाभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥२॥**

आवाहनमन्त्रेणाभिधानं संस्कारो यदीयदेवतायाः तदभिधानसंस्कारम्। तद्यथा भवति तथाविधं द्रव्यम् अर्थे-वैष्णवयागनिमित्ते निश्चिते सत्येव क्रियेत। न त्वनिश्चितेऽपि। कुतः? तादर्थ्यात्-निमत्तनिश्चयस्यैव नैमित्तिकप्रापणार्थत्वात्। वैष्णवयागो ह्ययं व्यूहनसमये पुरोडाशलेशस्याधस्तात्पतने स्फ्ये च संश्लेषणे विहितः। यदि कदाचिदधस्तान्न पतेत् स्फ्ये च न संश्लिष्येत् तदा निमित्ताभावाद् द्रव्याभावाच्च वैष्णवयागोऽयं[1] न भवति, निमित्ते सति भवतीति सन्दिग्धोऽयं वैष्णवयाग इति न तदावाहनं वैश्वदेविकावाहनकाले सम्भवति। यदि तु विष्णुरुरुक्रम आवाह्येत निमित्ताभावाच्च न क्रियेत तद्यागः, तदा सा देवता क्रुध्येत्, अनिष्टमपि यजमानस्य कुर्यात्। यथा राजा वा राजामात्यो ब्राह्मणो वा परिचरितुमामन्त्रितोऽपचरितः स तावत् क्रुध्यति द्रुह्यति च तद्वद्देवतापि। देवताविग्रहादिकं नास्तीति तु[2] प्रच्छन्नबौद्धप्रलपितमिति प्रपञ्चितमेव षष्ठे तिर्य्यगधिकरणे। किं चाधिकारिणं प्रत्यङ्गविधिः। निमित्तसन्देहदशायाञ्चानधिकारादनधिकारिकृतमावाहनमकिञ्चित्करमेव स्यात् ॥

ननु वचनबलादवश्यमधः पातनीयाश्चरुलेशाः स्फ्ये च श्लेषणीयाः। ततश्च वैष्णवयागस्यावश्यम्भावित्वनिश्चयसत्वात्स्यादेव वैश्वदेविकावाहनकाले तदावाहनमित्यत आह—

**तेषामप्रत्यक्षशिष्टत्वात् ॥३॥**

तेषामधः पातितानां स्फ्ये श्लेषितानां चरुलेशानां वैष्णवयागं प्रत्युपादेयत्वेन न प्रत्यक्षविधानमस्ति। किन्तर्हि? अधःपातने स्फ्ये च श्लेषणे निमित्ते तदुपलक्षितं द्रव्यं यागेन प्रतिपाद्यमित्युच्यते, यद्युपबन्धात्। तस्मान्नात्र विष्णोरुरुक्रमस्यावाहनम्।

तन्त्ररत्ने तु वैश्वदेविकावाहनकाले चतुर्धाकरणकालीननिमित्तसंशयाद् विष्णोरुरुक्रमस्यावाहनाभावेऽपि चतुर्धाकरणकाले निमित्तनिश्चये सति तदावाहनं

१. अयं. नास्ति. क.　　२. तु. नास्ति, अ.

कर्तव्यमेव । वैश्वदेविकावाहनेन प्रसङ्गतस्तदसिद्धेः । यथा पशावाज्यभागाभावात्पशुपुरोडाश आज्यभागौ क्रियेते तद्वदित्युक्तम् । तदेतत्सङ्कर्षकाण्डविरुद्धत्वादुपेक्ष्यम् । तत्र हि चतुर्थस्य चतुर्थपादे 'वाजिनामावाहनं विद्यते यथान्यासां देवतानाम्' इति सूत्रेण चातुर्मास्येषु वैश्वदेवपर्वण्यामिक्षानुनिष्पादिवाजिनद्रव्यकयागस्य शंयुवाकोत्तरकालकस्य देवताभूतानां वाजिनामावाहनं पूर्वपक्षयित्वा [1]"भवितुरनुनिष्पादितत्वाद्वा न विद्यते यथा विष्णोरुरुक्रमस्य' इति सिद्धान्तसूत्रेणानुनिष्पादितवाजिनद्रव्यकयागस्य प्रयोजकत्वाभावात् कदाचिद्व्यापन्ने वाजिने तद्यागाभावाद्वाजिनयागस्य सन्दिग्धत्वान्न तद्देवताया [2]उरुक्रमविष्णुयागदृष्टान्तेनावाहनमिति सिद्धान्तयित्वा "विज्ञायते च स वै वाजिनो नावाहयेद्देविका देवसुवो यत्किञ्चैतादृक्" इति तदुत्तरसूत्रे शाखान्तरीयं वचनमुदाहृत्य व्याख्यातम् । 'परप्रधानानां परतन्त्रव्यपेतानाञ्च प्रतिषेधस्स्यात् तल्लिङ्गत्वाच्छब्दस्य' इति सूत्रेण वाजिनयागः परप्रधानः-परार्थोत्पन्नद्रव्यकः परतन्त्रमध्योत्पन्नस्तदुपजीवी च; तथा-"आनुबन्ध्यापशुपुरोडाशमनु देविकाहवींषि निर्वपेत् धात्रे पुरोडाशम्" इति, पञ्चेष्टौ च "देवसुवां हवींषि अग्नये गृहपतये पुरोडाशमष्टाकपालमित्येतानि" इति विहिताः देविकाः देवसुवश्च नियताः परतन्त्रमध्योत्पन्नास्तदेव च तन्त्रमुपजीवन्तीति तदीया देवता नावाहयति, यत्किञ्चैवञ्जातीयकं तदपि नावाहयति । वरुणप्रघासेषु "वारुण्या आमिक्षाया निष्कासेनावभृथमवयन्ति" इत्यवभृथः स्वतन्त्रोऽप्यनुनिष्पादिद्रव्यकः । तत्रापि न वरुणस्यावाहनम् । यथा वा सौत्रामण्यामैन्द्रसावित्रवारुणाः पुरोडाशाः । ते च स्वद्रव्या अपि परतन्त्रमध्योत्पन्नास्तदुपजीविनश्च । अतो न तत्राप्यावाहनम् । एतादृक् शब्दस्य तल्लिङ्गत्वात्-एवञ्जातीयकपरत्वादित्यर्थः । एवञ्च नियतास्वपि देविकादिष्विवोरुक्रमस्य विष्णोरप्यावाहनस्य प्रतिषेधात् सर्वथैवात्र नावाहनम् । पशुपुरोडाशे त्वेवमाज्यभागयोः प्रतिषेधाभावात् प्रवृत्तिरिति वैषम्यम् ॥

इति प्रथमाधिकणरणे तृतीयं वर्णकम् ॥ १ ॥

( वैश्वदेवे उरुक्रमदेवतावाहनबाधाधिकरणम् )

२

"दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयामिष्टिं निर्वपति" इति श्रुतान्वारम्भणीया विकृतिष्वपि भवतीति द्वादशस्य द्वितीये वक्ष्यते-'अन्वारम्भणीया

---

१. हविरनियतत्वाद्वा इति मुद्रितपाठः. २. उरुक्रमवदावाहनं. क.

विकृतौ न स्यात्' इत्यत्र। सा किं सोमाङ्गदीक्षणीयादिष्विष्टिषु भवति ? न वा ? इति संशये, चोदकतस्तत्रापि प्राप्नोतीति प्राप्ते, सिद्धान्तयति—

**इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेतारम्भस्य प्रधान-संयोगात् ॥ ४ ॥**

अन्वारम्भणीयेष्टिः सोमाङ्गभूताद् दीक्षणीयादिकान्निवर्तेत। कुतः ? आरम्भसंयोगात्-दर्शपूर्णमासावारप्स्यमान इत्यारम्भद्वारा दर्शपूर्णमासाङ्गमिय-मिष्टिरवगता। न च सोमप्रयोगमध्यवर्तिनां दीक्षणीयादीनामारम्भोऽस्ति। नन्वारम्भस्य कर्तुमशक्यत्वादस्त्येव दीक्षणीयादेरप्यारम्भ इत्यत आह-आरम्भस्य प्रधानसंयोगादिति। औदासीन्यप्रच्युतिरेव ह्यारम्भो नाम। ज्योतिष्टोमस्य प्रधानं कर्तुमसावौदासीन्यात् प्रच्युतो भवति, न तु दीक्षणीयादीन्यप्यङ्गानि कर्तुम्। यद्यपि साङ्गप्रधानचिकीर्षया आरम्भः, तथाप्यसावङ्गेषु प्रधानेषु च न भिद्यते, किन्त्वेक एव। तत्र च साङ्गं सोमयागं कर्तुमौदासीन्यात् प्रच्यवे-आरम्भे सति 'सोमेन यक्ष्ये' इत्यागूर्य ऋत्विग्वरणमधुपर्कदेवयजनाध्यवसानादिसप्तहोतृहोमान्ते कृते दक्षणीयादिकमिति क्रमः। ततश्चारभ्य कतिपयसौमिकपदार्थानुष्ठानोत्तर-कालीनदीक्षणीयादिषु कथमन्वारम्भणीया ? तथाविधारम्भात् प्रागूदीक्षणीयादीनां प्राप्तावसरत्वाभावात्। न च तदानीं प्राप्तावसरत्वाभावेऽपि तेषां पृथगारम्भोऽ-स्त्विति वाच्यम्। न ह्यङ्गानां पृथगारम्भोऽस्ति। साङ्गप्रधानार्थतयौदासीन्यात् प्रच्यवे सति तेषां तत्प्रयोगमध्यपतितानां तत एवानुष्ठानसिद्धेः। तस्मात्सोमाङ्ग-भूतदीक्षणीयादिषु नन्वारम्भणीया ॥

इति द्वितीयं दीक्षणीयादिष्वन्वारम्भणीयाबाधाधिकरणम् ॥ २ ॥

३

अस्ति राजसूयः-"स्वाराज्यकामो राजसूयेन यजेत" इति। तत्र "अनुमत्यै पुरोडाशम्" इत्याद्या इष्टयस्सन्ति। "आदित्यां मल्हां गर्भिणीमालभते" इत्याद्याः पशवः। "अग्निष्टोममग्र आहरति"इत्यादयस्सोमयागाः। एते चेष्टिपशुसोमा राजसूय-शब्दवाच्यास्समप्रधानाः। तत्र सोमयागानामपूर्वतया दर्शपूर्णमासप्रकृतिकत्वा-भावान्न तत्रान्वारम्भणीयेति निर्विवादम्। इष्टिपशुषु तु दर्शपूर्णमासप्रकृतिकत्वा

सा भवति ? न वा ? इति संशयः। आरम्भद्वारा दर्शपूर्णमासाङ्गमन्वारम्भणीया। आरम्भश्च प्रधानानामेव नाङ्गानामिति[1] स्थितिः। इष्टिपशूनामपि प्रधानत्वादस्त्येवारम्भ इति स्यादेवान्वारम्भणीयेति प्राप्ते, सिद्धान्तयति—

**प्रधानाच्चान्यसंयुक्तात् सर्वारम्भान्निवर्तेतानङ्गत्वात् ॥५॥**

अन्यसंयुक्तात्-राजसूयोत्पन्नाद् इष्टिपशुलक्षणप्रधानाद् अन्वारम्भणीया निवर्तेत। कुतः? सर्वारम्भात्-इष्टिपशुसोमानां सर्वेषामेव प्रधानानामारम्भस्य साधारणत्वात् तेषां पृथगारम्भाभावात्। यदङ्गं ह्यन्वारम्भणीया तद्विषय आरम्भो द्वारम्, "दर्शपूर्णमासावारप्स्यमानः" इति वचनात्। द्वाराभावे च क्रियमाणायास्तदङ्गत्वासम्भवः। न च डित्थडबित्थयोर्माता डित्थमातेतिवदनेकविषयोऽप्यारम्भ एकेनापि व्यपदेशमर्हतीति वाच्यम्, मातृत्वं हि जननीत्वं जननक्रियानिबन्धनम्। तच्च प्रत्येकमेव परिसमाप्तमिति पृथग् व्यपदेशो युज्यते। इह तु-इष्टिपशुसोमानां सर्वेषां साहित्येनैव प्रधानतया तदारम्भः सर्वेषु व्यासक्त एक एवेति न पृथग् व्यपदेशमर्हति, अग्नीषोमीयं हविराग्नेयशब्देनेव। तस्मादत्रेष्टिपशूनां पृथगात्मीयारम्भाभावान्नास्त्यन्वारम्भणीया॥

इति तृतीयं राजसूयान्तर्गतेष्टिष्वन्वारम्भणीयाबाधाधिकरणम् ॥ ३ ॥

४

अन्वारम्भणीयायामन्वारम्भणीया भवति न वेति संशये, पूर्वपक्षयति—

**तस्यान्तु स्यात्प्रयाजवत् ॥ ६ ॥**

तुर्वैषम्ये। दीक्षणीयादेः प्रधानेन सह प्रयोगो न पृथगिति पृथगारम्भाभावेऽप्यन्वारम्भणीयाया दर्शपूर्णमासारम्भात् प्राग्विहितायाः प्रयोगभेदादारम्भभेदात् स्यादेव तत्रापि चोदकतोऽन्वारम्भणीया, प्रयाजवत्। न चैवं सति तत्राप्यन्वारम्भणीयान्तरमित्येवमनवस्था स्यादिति वाच्यम्। दर्शपूर्णमासारम्भाङ्गमियमिष्टिः। सा च यस्मिन्नहन्यारम्भस्तदैव कार्या, अङ्गानां प्रधानकालकत्वनियमात्। ततश्चैकस्मिन्नहनि यावत्कृत्वः प्रयोक्तुं शक्यते तावत्कृत्वोऽभ्यसनीया॥

---

१. स्थितम्. ग.

अथ सिद्धान्तयति—

**न वाङ्गभूतत्वात् ॥ ७ ॥**

वाशब्दोऽवधारणे। दर्शपूर्णमासाङ्गभूतान्वारम्भणीया, अङ्गानाञ्च न पृथगारम्भ इत्युक्तमेव। ननु दर्शपूर्णमासारम्भात् प्राग्विहिताया अन्वारम्भणीयायाः प्रयोगभेदादारम्भभेदो दुर्वार इत्यत्राप्येतदेवोत्तरम्—अङ्गभूतत्वादिति। अन्वारम्भणीयावाक्यप्रवृत्तिवेलायामन्वारम्भणीयाया दर्शपूर्णमासाङ्गत्वेनानिश्चितत्वादित्यर्थः।

तत्कथमित्यत आह—

**एकवाक्यत्वाच्च ॥ ८ ॥**

वैकृतो ह्यन्वारम्भणीयाविधिरित्थम्भावाकाङ्क्षया चोदनाकल्पितप्रकृतिवच्छब्दसहितस्सन् प्रयोगविधिर्भूत्वाङ्गन्यपि विधत्ते। न चाविहितमङ्गं भवति। ततश्चान्वारम्भणीयाया अतिदेशसिध्यर्थं पूर्वमेव प्रकृतौ विधानमपेक्षितम्। सम्प्रति विधानार्थञ्च पूर्वं विहितत्वाभावोऽप्यपेक्षितः। तदुभयमपि युगपद्विप्रतिषेधादेकत्र न सम्भवति। न ह्येकमेवेदमारम्भणीयावाक्यं तां विदधाति विहितां चातिदिशतीति युज्यते, ज्ञातत्वाज्ञातत्वयोर्विरोधात्। तस्मादन्वारम्भणीयायामन्वारम्भणीयाव्यतिरिक्तमेवाङ्गजातमतिदिश्यते। न चारम्भणीयाविधिसमये दर्शपूर्णमासविधेः कृत्स्नाङ्गोपदेशाभावादलब्धात्मकत्वात् कथं प्रयाजादेरप्यतिदेश इति वाच्यम्। अन्वारम्भणीया हि न साक्षाद्दर्शपूर्णमासाङ्गम्, किन्तु आरप्स्यमान इति क्रियार्थायां क्रियायामुपपदभूतायां विहितलृट्प्रत्ययबलात् तदङ्गारम्भाङ्गम्। ततश्चाङ्गाङ्गोपदेशवेलायामपि स्वाङ्गोपदेशमात्रेण दर्शपूर्णमासविधेर्लब्धात्मकत्वसम्भवान्न प्रयाजाद्यतिदेशानुपपत्तिः। तस्मादन्वारम्भणीयायां नान्वारम्भणीया॥

इति चतुर्थमन्वारम्भणीयायामन्वारम्भणीयाबाधाधिकरणम् ॥४॥

५

"उर्वरा वेदिर्भवति" "खल उत्तरवेदिर्भवति" "खलेवाली यूपो भवति" इति साद्यस्क्राख्ये विकृतिसोमे श्रुतम्। उर्वरा [1]सर्वसस्याश्रया भूमिः। धान्यशातनस्थानं

१. सस्याढ्या. क.

खलः। धान्यशातनाय बलीवर्दानितस्ततस्सञ्चाराद्वारयन्तीति खलेवाली। 'कपिलकादीनां संज्ञाच्छन्दसोः' इति लत्वम्। खले निखाता बलीवर्दबन्धनार्था स्थूणा विवक्षिता। ज्योतिष्टोमे चाग्नीषोमीयपशौ श्रुतम्-"यूपमच्छैष्यता होतव्यम्" इति। यूपाहुतिं हुत्वा यत्र यूप्या वृक्षास्तत्र गत्वा "यं जोषयते तच्छिनत्ति" इति च। अच्छेत्यव्ययम् आप्तुमित्यर्थे। एतिर्गतौ। यूपमाप्तुं गमिष्यता होतव्यम्। जोषयते-इच्छति। किमिह खलेवाल्यां यूपाहुतिः कर्तव्या? न वा? इति संशयः। चोदकतः कर्तव्येति ब्रूमः। न चाच्छेष्यतेति लृटा क्रियार्थायां क्रियायामुपपदभूतायां विहितेन यूपाहुतेर्गमनार्थत्वावगमाद् गमनस्य च छेदनार्थत्वात् खलेवाल्याः [1]छेदनाभावात् न यूपाहुतिरिति वाच्यम्। न ह्ययं होमो गमनार्थः। "यूपस्यान्तिकेऽग्निं मथित्वा तस्मिन् जुहुयात्" इति यूपसमीपदेशे होमविधिबलेनैव गमनस्यार्थप्राप्ततया यूपमच्छेष्यतेत्यस्य तदनुवादतया तस्य गमनार्थत्वे प्रमाणाभावात्। तथा चादृष्टार्थैव यूपाहुतिरञ्जनादिवत् खलेवल्यामपि भवतीति प्राप्ते, सिद्धान्तयति—

**कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्तेत तादर्थ्यं श्रुतिसंयोगात् ॥ ९ ॥**

अन्वारम्भणीयायामन्वारम्भणीया निवर्त्तत इत्युक्तम्। यूपाहुतिलक्षणं कर्मापि यूपलक्षणद्रव्यसंयुक्तच्छेदनार्थगमनाङ्गं खलेवल्यां निवर्तते। कुतः? अर्थाभावात्-छेदनार्थगमनलक्षणद्वाराभावात्। ननूक्तरीत्या छेदनार्थगमनद्वारकत्वमसिद्धमित्यत आह—तादर्थ्यमित्यादि। यूपाहुतेः छेदनार्थगमनद्वारकत्वमेव कुतः? श्रुतिसंयोगात्-अच्छेष्यतेति लृट्प्रत्ययश्रुत्या यूपाहुतेः छेदनार्थगमनद्वारकत्वावगमात्। "आहवनीये वा यूपाहुतिं जुहोति" इत्याहवनीयेऽपि यूपाहुतिविधानेन नित्यं यूपवृक्षान्तिकदेशप्राप्त्यभावेनाच्छेष्यतेत्यस्य छेदनार्थगमनार्थतया विधायकत्वावश्यम्भावादिति यावत्। न च खलेवाल्याः छेदनमस्ति, नापि तदर्थगमनम्, पूर्वमेव छिन्ननिखातायास्तस्या यूपकार्ये नियोजने विधानात्। न च छेदनार्थं गमनाभावेऽप्याप्तुं गमनसत्वात् स्यादेव यूपाहुतिः, गमनस्य छेदनार्थत्व[2]विशेषकप्रमाणाभावात्। अच्छैष्यतेत्याप्तुं गमनस्यैव श्रुतत्वादिति वाच्यम्। खलस्यैवोत्तर-

---

१. छेदनासम्भवात्. क, २. विवरणाभावात्. अ.

वेदित्वेन खलेवाल्या देवयजन एव स्थितत्वेनास्तुं गमनस्याप्यभावात्। अतः खलेवाल्यां न यूपाहुतिः ॥

इति पञ्चमं खलेवाल्यां यूपाहुतिबाधाधिकरणम् ॥ ५ ॥

६

अग्नीषोमीयपशौ "यूपं छिनत्ति, प्राञ्चं पातयति, स्थाणौ स्थाण्वाहुतिं जुहोति" इति श्रुतम्। किमियं स्थाण्वाहुतिः खलेवाल्यां भवति ? न वा ? इति विशये, पूर्वपक्षयति—

**स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत ॥ १० ॥**

तुर्वैषम्ये। यूपाहुतेः खलेवाल्यां निवृत्तावपि स्थाण्वाहुतेर्निवृत्तिर्न भवति। कुतः ? देशमात्रत्वात्—देश एव देशमात्रम्। स्थाणुस्तावत् होमस्याधार एव, न तु संस्कार्यः, यतो यूपश्छिद्यते तस्य स्थाणोर्भूतभाव्युपयोगाभावात्। नापि छिन्नो यूपस्संस्कार्यः। यूपे छेदनेन वियोजिते सति स्थाणौ क्रियमाणस्य यूपगत्वाभावेन तत्संस्कारत्वासम्भवात्। तस्मादारादुपकारिकैवेयमाहुतिर्यत्र क्वचिदपि स्थाणौ कर्तुं शक्यत्वात् खलेवाल्यामपि भवत्येव ॥

अथ सिद्धान्तयति—

**अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत ॥ ११ ॥**

अपि वेति पक्षव्यावृत्तिः। "स्थाणौ जुहोति" इति सामान्यश्रवणेऽपि सन्निधानाद्यूपव्रश्चनस्थाणुरेव गृह्यते। ततश्च यतो यूपश्छिन्नः तस्मिन्नेव स्थाणौ क्रियमाणो होमः तत्संस्कारः—यूपसंस्कारः प्रतीयेत। कुतः ? शेषभूतत्वात्—तस्य स्थाणोर्भूतपूर्वगत्या यूपसमवायित्वादित्यर्थः। वियोजिते यूपे सम्बन्धविरहेऽपि ततो यूपो वृक्ण इत्येतावता स्थाणौ क्रियमाणोऽपि होमो यूपसंस्कारो भवत्येव। लोके देवदत्त[1]धृतायास्स्रज उत्कृष्टदेशे निधानमात्रेण देवदत्तस्य परिचर्याभिमानदर्शनात्। ततश्च खलेवाल्या आवृश्चनस्थाणोरभावान्न स्थाण्वाहुतिः। सम्भवति च सन्निपत्योपकारित्वे आरादुपकारित्वं नाश्रयितुं युक्तम्। यद्यपि यत्र दृष्टातिशयजनकत्वं

१. धारितायाः. क.

तत्रैव सन्निपातिनो बलवत्त्वम्। इह तु होमान्न किञ्चिद् दृष्टमिति कथं सन्निपातित्व-लाभाय प्रकृतस्थाणुग्रहणमिति, तथापि सन्निपातित्वे उपकार्योपकारकयोः लोक-तस्सिद्ध एव परम्परासम्बन्धो लभ्यते। तमुपजीव्याद्दष्टसंस्कारमात्रं कल्पनीयम्। आरादुपकारकत्वे तूपकार्योपकारकयोस्सम्बन्धोऽपि कल्प्यः, अदृष्टमपि कल्प्यमिति गौरवम्। ततश्च कल्प्यसम्बन्धादारादुपकारकात् क्लृप्तसम्बन्धं सामवायिकमदृष्ट-संस्कारद्वारकमपि प्रबलमिति ॥

इतोऽप्येवमित्याह—

## समाख्यानञ्च तद्वत् ॥ १२ ॥

स्थाण्वाहुतिरिति समाख्याप्युक्तन्यायवद्यूपसंस्कारतां गमयति। स्थाण्वाहुति-रिति हि न सप्तमीसमासः—स्थाणौ क्रियमाणाहुतिः स्थाण्वाहुतिरिति, लक्षणापत्तेः। न च स्थाणावाहुतिरित्येव विग्रहोऽस्त्विति वाच्यम्, सप्तम्याः दुर्लभत्वात्। कर्तृ कर्मद्वारा तन्निष्ठक्रियाधारस्यैवाधिकरणत्वात्, किन्तु स्थाणोराहुतिरिति कर्मणि षष्ठ्या समासः। न च 'प्रतिपदविधाना षष्ठी न समस्यते' इति षष्ठीसमासनिषेध-श्शङ्क्यः, 'कृद्योगा च षष्ठी समस्यते' इति तस्य प्रतिप्रसवात्। आहुतिकर्मत्वञ्च स्थाणोराहुतिसंस्कार्यत्वमेव। तच्च स्थाणोर्भूतभाव्युपयोगाभावात् तदुपादानक-यूपगतमेव पर्यवस्यतीति ॥

इतोऽप्येवमित्याह—

## मन्त्रवर्णाच्च ॥ १३ ॥

"अतस्त्वं देववनस्पते शतवल्शो विरोह" इति स्थाण्वाहुतिमन्त्रः। हे वनस्पते यूप यतो मया वृकणस्त्वम् अतस्त्वत्सकाशात् शतशाखः प्ररूढो भवेति मन्त्रार्थः। अतोऽपि यूपव्रश्चनस्थाणुद्वारा यूपसंस्कारत्वम्। अतः खलेवाल्यां छेदनाभावान्न स्थाण्वाहुतिः ॥

इति षष्ठं खलेवाल्यां स्थाण्वाहुतिबाधाधिकरणम् ॥६॥

७

दर्शपूर्णमासयोः प्रयाजा [1]आम्नाताः–"समिधो यजति, तनूनपातं यजतीडो यजति, बर्हिर्य्यजति, स्वाहाकारं यजति" इति। अस्ति च[2] तत्रोत्तमप्रयाजया-

१. श्रुताः. क. २. अस्ति च. नास्ति. क.

ज्यानिगदः—"ये यजामहे स्वाहाग्निं स्वाहा सोमम्" इत्यादिः। तत्र "स्वाहाकारं यजति" इति किं स्वाहाकारलक्षणदेवताकयागविधिः ? उत कर्मनामधेयमिति संशयः। नामधेयत्वं तावत् तत्प्रख्यन्यायेन विधित्सितस्वाहाकारलक्षणदेवतायाः प्राप्तौ सत्यां भवति। न चात्र तत्प्राप्तिरस्ति। न च याज्यामन्त्रवर्णात् स्वाहाकारलक्षणदेवताविधिः कल्प्यत इति 'वक्तुं शक्यम्, तत्र स्वाहाकारवाचकशब्दाभावात्। न च याज्यामन्त्रवर्णादग्न्यादिदेवतालाभात् कथमिह स्वाहाकारलक्षणदेवताविधिरिति वाच्यम्। न हि[2] वचनविहितदेवतासम्भवे याज्यामन्त्रवर्णाद्देवताविधिकल्पनमुन्मिषति, वचनस्य झटिति प्रवृत्तेः। न चैवं सत्युत्तमप्रयाजस्य स्वाहाकारदेवताकत्वात् कथमत्राग्न्यादिपदयुक्तयाज्याया[3] निवेशः ? स्वाहाकारदेवताया अग्न्यादेश्चातिविलक्षणतया गौणतयाप्यसम्भवादिति वाच्यम्, अग्न्यादिशब्दानां रूढ्या स्वाहाकारदेवतापरत्वस्यापि सम्भवात्। यथा मातृशब्दो जननीं धात्र्यादिमातरञ्चाभिधत्ते तद्वत्। यद्यपि लोके इत्थं रूढिरक्लृप्ता, तथापीह विनियोगबलादेव रूढिः कल्प्यत इत्यदोषः। तस्मात् स्वाहाकाराख्यदेवताकयागविधानमिदम्। स्वाहाकारदेवता च भूतभाव्युपयोगाभावान्न संस्कारमर्हति। ततश्च[4] स्वाहाकारदेवताकयागेन क्रतुमुपकुर्यादित्येवमारादुपकारकतैव। ततश्च सौर्यादिविकृतिष्वप्यग्न्यादिपदान्युत्तमप्रयाजयाज्यायान्न निवर्तन्त इति प्राप्ते, सिद्धान्तयति—

## प्रयाजे च तन्न्यायत्वात् ॥ १४ ॥

स्थाण्वाहुतिः संस्कारकर्मेति स्थितम्। उत्तमप्रयाजेऽपि संस्कारकर्मत्वमेव। कुतः ? तन्न्यायत्वात्। दृष्टे सम्भवत्यदृष्टकल्पना न युज्यत इत्युक्तन्यायसाम्यादित्यर्थः। अयमाशयः—स्वाहेति कारः कृतिः उच्चारणं यस्य याज्यायामिति व्युत्पत्त्या स्वाहाकारशब्दः कर्मनामधेयम, न तु स्वाहाकारमिति देवताविधिः। देवताया सम्प्रदानतया कर्मकारकत्वाभावेन द्वितीयानुपपत्तेः। एवञ्चैकार्थविधानं लभ्यते। अन्यथा ( देवता यागश्चेत्यनेकार्थविधानापत्तिः। न च स्वाहाकारमित्यस्य नामधे-

---

१. शक्यं वक्तुं. क.    २. च. क.
३. याज्यानिवेशः. अ.    ४. च. नास्ति. क.

यत्वे देवताविध्यभावात्कथं यजतिनिर्वाह इति वाच्यम्। याज्यामन्त्रवर्णतो-ऽग्न्यादि ) देवतालाभसम्भवात्। ननूत्तमप्रयाजे तावद् याज्या न श्रुत्या विनियुज्यते, किन्तु क्रमप्रकरणाभ्याम्। ते तु सामर्थ्यं पर्यालोच्य विनियुञ्जाते। ततश्च याज्यामन्त्रप्रकाश्याग्न्यादिदेवताकत्वे कर्मणो निश्चिते मन्त्रसामर्थ्यं पर्यालोच्य क्रमप्रकरणाभ्यां मन्त्रस्य तत्र विनियोगः। मन्त्रविनियोगाच्च मन्त्रप्रकाश्याग्न्यादिदेवताकत्वनिश्चय इत्यन्योन्याश्रयः। अतो नामधेयत्वे देवताविध्यभावात् कथं यजतिनिर्वाहः ? न चैवं सति सूक्तवाकनिगदात् कथं देवतालाभ इति वाच्यम्, वैषम्यात्। तत्र हि प्रहरणे देवतानिश्चयाभावेऽपि सूक्तवाकेनेति तृतीयाश्रुत्या विनियोगबलादेव देवताविधिरिति नान्योन्याश्रयावकाशः। नैवमत्र याज्यायाः श्रुत्या विनियोगोऽस्तीति चेन्न; कर्मणि याज्यामन्त्रविनियोगे हि अग्न्यादिदेवताकत्वनिश्चयो न तन्त्रम्, किन्त्वग्न्यादिदेवताकत्वाभावनिश्चयाभावमात्रम्। अग्न्यादिदेवताकत्वाभावनिश्चये सत्यग्न्यादिप्रकाशकमन्त्रस्य प्रवृत्त्यनुपपत्तेः। तन्निश्चयाभावे च कर्मणोऽग्न्यादिप्रकाशकमन्त्रान्वययोग्यतां मन्त्रस्य तत्प्रकाशनयोग्यतां च पर्यालोच्य क्रमप्रकरणाभ्यां कल्प्यमानो विनियोग एव कर्मणि देवताकल्पनपर्यन्तं कल्पत इति नान्योन्याश्रयः। अन्यथाग्न्यादिपदानां स्वाहाकारे रूढिकल्पनस्यापि विनियोगाधीनत्वेन तद्दोषतादवस्थ्यात्। अतो याज्यामन्त्रवर्णादिह देवताविधिः कल्प्यते। याज्यायाञ्च "स्वाहाग्निं स्वाहा सोमं स्वाहाग्निं स्वाहा प्रजापतिं स्वाहाग्नीषोमौ" इत्येवमाज्यभागादियक्ष्यमणदेवताः क्रमेण [1]सङ्कीर्त्यमानाः प्रत्यभिज्ञायन्त इति तासां स्मरणं दृष्टमेव प्रयोजनं लभ्यत इति नादृष्टार्थत्वकल्पना युज्यते ॥

इतोऽप्येवमित्याह—

## लिङ्गदर्शनाच्च ॥ १५ ॥

विकृतौ वैश्वदेवपर्वणि "स्वाहाग्निं स्वाहा सोमं स्वाहा सवितारम्" इत्याद्युत्तमप्रयाजयाज्यायां वैकृतानुक्रमणमाराद‍ुपकारकत्वेऽनुपपन्नम्। अदृष्टार्थत्वे प्राकृतदेवतापदानामेवानुक्रमणापातात्। अतोऽपि संस्कारकर्मोत्तमप्रयाजः। स च यागांशे आराद‍ुपकारकः। तद्याज्यायां यक्ष्यमाणदेवतास्मरणात्सन्निपत्योपकारकः।

---

() अपुस्तके ग्रन्थपातः।

१. कीर्त्यमानाः. अ.

एवञ्च विकृतौ "स्वाहाग्नि स्वाहा सोमम्" इत्यनन्तरं "अग्नि स्वाहा" इति प्रधानदेवतापदं निवर्तते। तत्स्थाने सूर्यपदं निक्षिप्यत इति फलति ॥

इति सप्तममुत्तमप्रयाजस्य संस्कारकर्मत्वाधिकरणम् ॥ ७ ॥

८

दर्शपूर्णमासयोश्श्रूयते—"यस्यै कस्यै देवतायै हविर्निर्वपन्ति पुरस्तादाज्यभागावग्नीषोमाभ्यां यजन्ति" इति। तत्राग्नेय आज्यभागयागः किं "यदाग्नेयोऽष्टाकपालः" इति प्रधानदेवताया अग्नेस्संस्कारकः ? उत दर्शपूर्णमासयोराराहुपकारकः ? इति संशये, पूर्वपक्षमुपक्षिप्य प्रतिक्षिपति—

**तथाज्यभागाग्निरपीति चेन्न व्यपदेशाद्देवतान्तरम् ॥ १६ ॥**

यथोत्तमप्रयाजयाज्यानिगदेऽग्न्यादयो यक्ष्यमाणदेवताः क्रमेण [1]सङ्कीर्त्यमानाः प्रत्यभिज्ञायन्त इति तत्स्मरणमुखेन यक्ष्यमाणदेवता उत्तमप्रयाजसंस्कार्याः, तथाग्नेयाज्यभागेऽपि स्वमन्त्रद्वारा प्रधानदेवतात्मकोऽग्निर्यक्ष्यमाणस्संस्कार्यत्वेन प्रत्येतव्य इति चेत्तन्न; यतः प्रधानदेवताभूताग्नेर्देवतान्तरमेवाज्यभागवाक्येऽग्निशब्देन विवक्षितम्। कुतः ? व्यपदेशात्-पृथङ्निर्देशात्। "अग्निमग्न आवह सोममावह अग्निमावह" इत्येवमाद्यावाहननिगदेषु यक्ष्यमाणेष्टदेवतानुक्रमणे सौम्याज्यभागदेवतात्मकसोमसङ्कीर्तनस्य पुरस्तात् परस्ताच्चाग्नेर्द्विस्सङ्कीर्तनं दृश्यते। अतस्सोमात्पूर्वं सङ्कीर्त्यमानोऽग्निः ततः परं सङ्कीर्त्यमानादग्नेरन्य इति गम्यते। यथा ब्राह्मण आयातो वृषल आयातो ब्राह्मण आयात इति द्विर्ब्राह्मणनिर्देशात् पूर्वपठितब्राह्मण उत्तरपठितब्राह्मणादतिरिच्यते, तद्वत्। तस्मान्नाग्नेय आज्यभागयागः प्रधानदेवताग्निसंस्कारकः ॥

इतोऽप्येवमित्याह—

**समत्वाच्च ॥ १७ ॥**

"आज्यभागावग्नीषोमाभ्यां यजति" इत्येकमिदं वाक्यम्। तत्र सौम्ययागस्तावन्न यक्ष्यमाणसंस्कारकः, सोमदेवत्ययागाभावात्। ततश्च सोमदेवतागुणको यागः दर्शपूर्णमासयोराराहुपकारकतया विधीयत इति निर्विवादम्। एवञ्चाग्नेय-

---

१. कीर्त्यमानाः. अ.

यागोऽप्यग्निदेवतागुणक आरादुपकारक एव विधेयः, विधायकप्रत्ययस्य समत्वात्-एकत्वात्। अन्यथैकस्मिन्नेव वाक्येऽग्नेस्संस्कार्यतया प्राधान्योद्देश्यत्वानुवादत्वानि, सोमस्य तु यागनिर्वर्तकतया गुणत्वोपादेयत्वविधेयत्वानीति विरुद्धत्रिकद्वयापत्त्या वाक्यभेदापत्तेः। तस्मादाग्नेय आज्यभाग आरादुपकारक एव, न तु प्रधानदेवताग्निसंस्कारकः। प्रयोजनं पूर्वपक्षे-प्रधानदेवताग्निसंस्कारकतया सौर्याद्येकदेवताकविकृतिष्वेवाग्नेयविकारत्वादाग्नेयाज्यभागः,[1] न त्वनेकदेवताकविकृतिषु, तासामाग्नेयविकारत्वाभावेन तत्संस्कारस्य तत्राप्राप्तेः। सिद्धान्ते तु-सर्वत्र दर्शपूर्णमासविकृतिषु भवत्याग्नेय आज्यभागः ॥

इत्यष्टममाग्नेयाज्यभागस्याराादुपकारकत्वाधिकरणम् ॥ ८ ॥

९

ज्योतिष्टोमे "आ सोमं वहन्त्यग्निना प्रतितिष्ठते" इत्युपक्रम्य श्रूयते—"यदग्नीषोमीयं पशुमालभते" इति। सोमं लतात्मकमावहन्ति-प्राग्वंशात् हविर्धानप्रदेशं नयन्ति, अग्निना-शालामुखीयादुद्धृतेन सहाग्नीध्रमण्डपं प्रतितिष्ठते-गच्छतीत्यर्थः। तत्रेदं श्रूयते-"अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपति" इति। पशुयागार्थः पुरोडाशयागः पशुपुरोडाशः। किमयं पशुयागस्याराादुपकारकः? उत पशुदेवतासंस्कारार्थः? इति संशये, पूर्वपक्षमुपक्षिप्य प्रतिक्षिपति—

**पशावपीति चेन्न तद्भूतवचनात् ॥ १८ ॥**

आज्यभागदेवताग्निः प्रधानदेवताया अग्नेरन्यः। अत आग्नेय आज्यभागयागो न प्रधानदेवतासंस्कारकः, किन्त्वग्निगुणक आज्यभागो दर्शपूर्णमासयोराराादुपकारक इति स्थितम्। अग्नीषोमीयपशौ पुरोडाशयागोऽपि पशुयागस्याराादुपकारक एव स्यात्। पशुवाक्य इव पुरोडाशवाक्येऽप्यग्नीषोमीयशब्देनाग्नीषोमौ देवता अस्येति तद्धितान्तेनाग्नीषोमयोर्गुणत्वेनावगमात्, भिन्नदेवत्यत्वाच्च। पशुर्हि ज्वलनलतात्मकाग्नीषोमदेवत्यः "आ सोमं वहन्त्यग्निना प्रतितिष्ठते" इति वाक्यशेषात्। पुरोडाशविधौ तु नैवं वाक्यशेषोऽस्तीति[2] प्रसिद्धाग्नीषोमदेवत्य एव

---

१. विकारत्वादाज्यभागः. क.    २. इति. नास्ति. क.

पुरोडाशयागः। अतस्स कथं पशुदेवतासंस्कारस्स्यात्। तस्मादारादुपकारक एवायं पुरोडाशयाग इति चेत्तन्न; कुतः? तद्भूतवचनात्। अस्तु वाक्यशेषाज्ज्वलनलतादेवत्यः पशुः, पुरोडाशोऽपि तद्देवत्यो भवितुमर्हति, न [1]तु भिन्नदेवत्यः, "यद्देवत्यः पशुस्तद्देवत्यः पशुपुरोडाशः" इति वाक्यशेषे पशुदेवताभूतयोरग्नीषोमयोः पुरोडाशदेवतात्ववचनात्। न च पशुविधौ पुरोडाशविधौ चाग्नीषोमीयशब्दस्य तुल्यश्रुतित्वात् पशुविधाविव पुरोडाशविधावप्यग्नीषोमयोर्गुणत्वेनैवान्वय इति वाच्यम्। द्रव्यदेवतयोर्हि न परस्परमन्वयः 'गुणानाञ्च परार्थत्वात्' इति न्यायात्। किन्तु यागे तयोः परस्परवार्तानभिज्ञयोरन्वयः। तत्र देवता सम्प्रदानत्वेन द्रव्यन्तु करणत्वेनान्वेतीत्येतावत् शाब्दमर्यादया गम्यते। तत्र सम्प्रदानत्वं देवतायास्संस्कार्यत्वे तदभावेऽप्यविरुद्धम्। सति संस्कारकर्मत्वे आरादुपकारकत्वाश्रयणं न न्याय्यम्। पशुयागश्च[2] सोमाङ्गम्। सोमयागश्च नाग्नीषोमदेवत्यः। अतो भूतभाव्युपयोगाभावान्न पशुयागो देवतासंस्कारकः। पुरोडाशयागस्त्वयमवान्तरप्रकरणात् पश्वङ्गमेव, न तु सोमाङ्गम्। स च [3]पशुश्चाभिन्नदेवताक इति पशुदेवतास्मरणार्थत्वात् संस्कारकर्मैवायं पुरोडाशयागः॥

इतोऽप्येवमित्याह—

## लिङ्गदर्शनाच्च ॥ १९ ॥

तैत्तिरीयशाखायां "वायव्यं श्वेतमालभेत" इति प्रश्ने काम्याः पशवस्समाम्नाताः। तत्र [4]क्रमेण "पीवोन्नान्" इति प्रश्ने एकैकस्य पशोर्वपापुरोडाशहविषां त्रीणि त्रीणि याज्यापुरोनुवाक्यायुगलानीत्येवं षट् षडृचस्समाम्नाताः। यदि प्रकृतौ पशुपुरोडाशयाग आरादुपकारकस्स्यात्, तर्हि तदीयमेव याज्यापुरोनुवाक्यायुगलमग्नीषोमदेवत्यं वायव्यादिपशुष्वपि प्राप्नुयात्। तथा सति वायव्यादिपशुषु पुरोडाशक्रमे पठितानि "आवायो प्रयोभिः" इत्यादीनि मध्यमयुगलानि व्यर्थानि स्युः। न च वपाहविर्योगेष्वेव मध्यमयुगलानां विकल्पोऽस्त्विति वाच्यम्। "इन्द्रायाभिमातिघ्ने ललामं प्राशृङ्गमालभेत यः पाप्मना गृहीतस्स्यात्" इत्यादिपशुक्रमे "इन्द्रस्तरस्वान्" इत्यादिषडृचेषु "इन्द्रं स्तुहि वज्रिणं स्तोमपृष्ठं

---

१. हि. क.
२. सोमयागाङ्गम्, क.
३. पशुर्हि. अ.
४. क्रमेण च. अ.

पुरोडाशस्य जुषताम्" इत्यादिमध्यमयुगलानां प्रायेण पुरोडाशलिङ्गत्वात्। न च 'वचनात्त्वयथार्थमैन्द्री स्यात्' इति पुरोडाशशब्दो वपापरो हृदयादिहविःपरो वा सम्भवतीति वाच्यम्, श्रुत्या विनियोगस्थल एव तन्न्यायप्रवृत्तेः। एतेषाञ्च लिङ्ग-क्रमाभ्यामेव विनियोज्यत्वात्। अतो लिङ्गादपि पशुदेवतासंस्कारार्थ एव पशुपुरो-डाशः। एवञ्च प्राकृतेनाग्नीषोमदेवत्येन पशुपुरोडाशयाज्यापुरोनुवाक्यायुगलेन वाय्वादिदेवतानामभिधानासम्भवात् तत्तल्लिङ्गमध्यमयुगलाम्नानमर्थवत्॥

तत्र पूर्वपक्षी प्रत्यवतिष्ठते —

## गुणो वा स्यात्कपालवद् गुणभूतविकाराच्च॥ २०॥

वा शब्दः प्रत्यवस्थाने। पुरोडाशयाग आरादुपकारक एवास्तु, न तु पशु-देवतासंस्कारकर्म। यतस्सम्प्रदानकारकत्वेन देवता यागं प्रति [1]गुणः–शेषभूतः। द्वितीयाश्रुत्याद्यभावेनारादुपकारकत्वस्यौत्सर्गिकस्यैवाश्रयितुमुचितत्वादिति यावत्। गुणभूतविकाराच्च–भावप्रधानो निर्देशः। आरादुपकारकभूतस्यैव पशुपुरोडाशया-गस्य विकारत्वाच्च प्राकृतधर्मग्राहित्वात्। दर्शपूर्णमासयोस्तावदग्नीषोमीयपुरोडाश-यागो देवतागुणक एव, न तु देवतासंस्कारकः[2]। तद्धर्मग्राहित्वञ्चास्य पशुपुरोडाश-यागस्यारादुपकारकत्वे सत्येव घटते, न तु संस्कारकर्मत्वे। न चेष्टापत्तिः; तथा सति "अनिरुक्तः [3]स्विष्टकृत्" इति विरोधात्। निरुक्तं निर्वचनं यत्र नास्ति सोऽनि-रुक्तः। प्रकृतौ स्विष्टकृद्याज्यायाम् "अयाडग्नेः प्रिया धामान्ययाट् सोमस्य प्रियाधामानि" इत्यादिनेष्टयक्ष्यमाणदेवतासङ्कीर्तनं स्थितम्। तदेतत् पशुपुरोडाशे स्विष्टकृद्यागे नास्तीत्यर्थः। अत्र च स्विष्टकृदनुवादः प्राकृतधर्माग्राहित्व एव कल्पते। प्राकृतधर्मग्राहित्वञ्चारादुपकारकत्वे सत्येव सङ्गच्छत इति पशुपुरोडाश-याग आरादुपकारक एव, न तु संस्कारकर्म। नन्वेकैवाग्नीषोमदेवता कथं पशुयागं पुरोडाशयागञ्च प्रति शेषभूता? तत्राह–कपालवदिति। "पुरोडाशकपालेन तुषानुपव-पति" इति "कपालेषु श्रपयति" इति च वचनात् कपालं यथानेकत्र शेषभूतं तद्वत्॥

१. गुणभूतः. क. २. संस्कारकस्सः. अ.
३. सहविष्कृत्. क.

अथ सिद्धान्ती निराचष्टे—

**अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत स्वाहाकारवदङ्गा-नामर्थसंयोगात् ॥२१॥**

अपि वेति पक्षव्यावृत्तौ। पशुपुरोडाशयागात्तत्संस्कारः-पशुदेवतासंस्कारः प्रतीयेत। कुतः? शेषभूतत्वात्-पुरोडाशयागस्य पशुदेवतां प्रति शेषभूतत्वसम्भवात्। ननु द्वितीयाश्रुत्याद्यभावादौत्सर्गिकमारादुपकारकत्वमेवोचितमित्यत आह-स्वाहाकारवदङ्गानामर्थसंयोगादिति। द्वितीयाश्रवणाद्यभावेऽपि स्वाहाकाराख्योत्तमप्रयाजस्य तदीययाज्यानिगदेऽग्न्यादियक्ष्यमाणदेवतानां प्रत्यभिज्ञानबलादेव तत्स्मरणरूपदृष्टार्थत्वसम्भवान्नारादुपकारकत्वमित्यनुपदमेवोक्तम् 'प्रयाजे च तन्न्यायत्वात्' इत्यत्र। ततश्चैवञ्जातीयकानामन्येषामप्यङ्गानां द्वितीयाश्रवणाद्यभावेऽपि देवतास्मरणरूपदृष्टप्रयोजनसम्भवे तेनैव संयोगावश्यम्भावादित्यर्थः। ततश्च पशुपुरोडाशयागस्याप्युद्देशांशेन देवतास्मरणरूपदृष्टप्रयोजनसम्भवान्नारादुपकारकत्वम्॥

इतोऽप्येवमित्याह—

**व्यृद्धवचनञ्च विप्रतिपत्तौ तदर्थत्वात् ॥२२॥**

ल्यब्लोपे पञ्चमी। देवतासंस्कारार्थत्वं सिद्धवत्कृत्येत्यर्थः। "आश्विनं धूम्रमालभते सारस्वतं मेषमिन्द्राय सुत्राम्ण ऋषभम्" इति [1]त्रिपशुका सौत्रामणी श्रुता। सन्ति च तत्र सुराग्रहाः-"आश्विनं ग्रहं गृह्णाति सारस्वतं गृह्णाति ऐन्द्रं गृह्णाति" इति। सन्ति च तत्र क्रमेण पशुपुरोडाशाः-"ऐन्द्रमेकादशकपालं निर्वपति सावित्रं द्वादशकपालं वारुणं दशकपालम्" इति। ते च पशुदेवतापेक्षया भिन्नदेवत्या इति स्थितिः। तत्रास्ति कश्चिद् वाक्यविशेषः[2]-"यद्वै सौत्रामण्या व्यृद्धं तदस्यास्समृद्धं यदन्यदेवत्याः पशवो भवन्त्यन्यदेवत्याः [3]पशुपुरोडाशा इति। अत्र प्रकृतौ [4]पशुपुरोडाशस्य देवतासंस्कारकत्वं सिद्धवत्कृत्य सौत्रामण्यां विप्रतिपत्तौ-पशुदेवतापेक्षया

---

१. पाशुक. क. २. वाक्यविशेषः. अ.

३,४. पशु. नास्ति. क.

भिन्नदेवताकतया पशुपुरोडाशयागावगतौ सत्यां पशुदेवतानां [1]पशुपुरोडाशयागकृतसंस्कारस्य प्राकृतस्य लोपात्तत्कृतव्यृद्धत्ववादः प्रवृत्तः। तदिदं व्यृद्धवचनं पशुपुरोडाशयागस्यारादुपकारकत्वे सति नोपपद्येत। तथा सति सौत्रामण्यां भिन्नदेवत्यैरपि पशुपुरोडाशयागैः पशुयागेष्वदृष्टोपकारसम्भवेन व्यृद्धत्वाप्रसक्तेः। अतोऽपि प्रकृतौ पशुपुरोडाशयागः संस्कारकर्म॥

ननु "यदन्यदेवत्याः पशुपुरोडाशा अन्यदेवत्याः पशव इति तदस्यां समृद्धं भवति" इति समृद्धवचनमारादुपकारकत्वे सत्येवोपपद्यते, प्रकृतौ [2]पशुपुरोडाशस्यारादुपकारकत्वे सौत्रामण्यां भिन्नदेवत्यैः पशुपुरोडाशयागैः पशुदेवतासंस्कारसम्भवात् समृद्धवचनन्नोपपद्येतेति [3]प्रतिबन्द्या प्रत्यवतिष्ठमानं पूर्वपक्षिणं सिद्धान्ती निराचष्टे—

## गुणोऽपीति चेन्नासंहानात् कपालवत् ॥२३॥

पुरोडाशयागं प्रति देवता गुण एव, न तु संस्कार्येत्यत्रापि लिङ्गमस्ति समृद्धवचनमिति चेत्तन्न; कुतः? असंहानात्-"पुरोडाशकपालेन तुषानुपवपति" इत्येकेन कपालेन तुषोपवपने क्रियमाणेऽन्येषां कपालानां न [4]काचिदपि हानिर्भवति। एवं पशुपुरोडाशयागस्य प्रकृतावारादुपकारकत्वे भिन्नदेवतागुणकैः पुरोडाशयागैः पशुयागेषु न काचिदपि हानिर्भवतीति व्यृद्धत्ववचनमनुन्मिषदेव स्यात्। देवतासंस्कारार्थत्वे तु भिन्नदेवत्यैः पुरोडाशयागैः [5]पशुदेवतास्मरणरूपसंस्कारहानात्तथाविधदेवताकपशुयागेषु व्यृद्धत्ववाद उन्मिषति। न च संस्कारकर्मत्वे समृद्धवचनस्यानुन्मेष इति शङ्क्यम्। न हि व्यृद्धत्वादन्यत् समृद्धत्वमिह विवक्षितम्, येन संस्कारकर्मत्वे नानादेवत्यत्वप्रयुक्तसंस्कारहानकृतव्यृद्धत्वस्यैव सत्वात् समृद्धत्ववचनं नोन्मिषेत्। किन्तु संस्कारकर्मत्वं सिद्धवत्कृत्य [6]देवताभेदप्रयुक्तसंस्कारहानकृतव्यृद्धिरेवात्र समृद्धित्वेन रूप्यते। देवताभेदं स्तोतुं "यद्वै सौत्रामण्या व्यृद्धं तदस्याः समृद्धम्" इति यत्तच्छब्दाभ्यामभेदप्रत्यभिज्ञानात्। अतो व्यृद्धवचनादपि लिङ्गात् संस्कारकर्म पशुपुरोडाशः॥

---

१. पशु. नास्ति. अ.
२. पशुपुरोडाशयागस्य. क.
३. प्रतिबन्द्या. नास्ति. क.
४. क्वचिदपि न हानिः. क.
५. पशुदेवतास्मरण इव. क.
६. देवताभेदकृत. अ.

इतोऽपि प्रकृतौ पशुपुरोडाशयागः संस्कारकर्मेत्याह—

**ग्रहाणाञ्च सम्प्रतिपत्तौ तद्वचनं तदर्थत्वात् ॥२४॥**

प्रकृतौ [१]पशुपुरोडाशस्य देवतासंस्कारार्थत्वं सिद्धवत्कृत्य सौत्रामण्यां भिन्नदेवताकैः [ पुरोडाशयागैः ] पशुदेवतासंस्कारासम्भवात् [२]संस्कारलोपमाशङ्क्य ग्रहाणां समानदेवताकत्वप्रतिपत्तेस्तैस्तत्संस्कारानुग्रहवचनं प्रवृत्तं दृश्यते "नैतेषां पशूनां पुरोडाशा विद्यन्ते ग्रहपुरोडाशा ह्येते पशवः" इति । एतेषां सौत्रामणिकानां पशूनां [न] समानदेवत्याः पशुपुरोडाशाः[३] सन्ति, अथापि पशुदेवतासंस्कारा [न] लुप्यन्ते, हि यतः, एते-पशवः ग्रहपुरोडाशाः-ग्रहा एव पुरोडाशयागसाध्यदेवतासंस्कारिणो येषान्ते तथाविधा इत्यर्थः । तदेतत् पशुपुरोडाशस्य देवतासंस्कारार्थत्व एवावकल्पते । अतोऽपि संस्कारकर्मत्वम् ॥

इतोऽप्येवमित्याह—

**ग्रहाभावे च तद्वचनम् ॥२५॥**

सौत्रामण्यामेव श्रुतम्--"बार्हस्पत्यं पशुञ्चतुर्थं सोमातिपवितस्यालभते" इति । पीतस्य सोमस्य जरणाशक्त्या यस्य विरेचनं भवति स सोमातिपवितः । तत्र श्रुतम्--"पुरोडाशवानेष पशुर्भवति न ह्येतस्य ग्रहं गृह्णाति" इति । एषः-बार्हस्पत्यः पशुः प्रकृतिवत् समानदेवत्यपुरोडाशवान् भवति, हि यतः, एतस्य पशोः समानदेवत्यं सुराग्रहं न गृह्णन्ति । अतः पशुदेवतासंस्कारस्य ग्रहतस्सिध्यभावात् तदर्थः समानदेवत्यः पशुपुरोडाशः स्यादित्यर्थः । अतोऽपि विज्ञायते प्रकृतौ पशुपुरोडाशस्संस्कारकर्मेति ॥

इतोऽप्येवमित्याह—

**देवतायाश्च हेतुत्वं प्रसिद्धं तेन दर्शयति ॥२६॥**

"अग्निभ्यः कामेभ्यः पशव आलभ्यन्ते, आग्नेयाः पुरोडाशा भवन्ति, आग्नेया हि पशवः" इति श्रुतम् । पशूनामाग्नेयत्वात्तद्देवतासंस्कारार्था अपि पुरोडाशा आग्नेया इति गम्यमानोऽर्थः । प्रकृतौ पशुपुरोडाशस्यारादुपकारकत्वे तु

---

१. पुरोडाशयागस्य. अ.    २. तत्संस्कार. अ.

३. पुरोडाशयागाः. अ.

पशुपुरोडाशानामिह प्रकृतिवदग्नीषोमदेवत्यत्वप्रसङ्गाद् आग्नेयाः पुरोडाशा इति विधिः स्यात्। "आग्नेया हि पशवः" इति हिशब्देन प्रसिद्धत्वहेतुत्ववादश्चानुपपन्नः स्यात्। आराद्युपकारकत्वे प्रकृतौ समानदेवत्यत्वनियमस्याप्रसिद्धत्वात्। अतोऽपि पशुपुरोडाशयागस्संस्कारकर्म। तदयमत्र सूत्रार्थः–तेन प्रसिद्धं-पशुदेवता-संस्कारलक्षणकार्यवशेन लब्धात्मकं पशूनामाग्नेयत्वस्य पुरोडाशाग्नेयत्वं प्रति हेतुत्वं वाक्यशेषो दर्शयति। अतोऽपि संस्कारकर्मेति॥

अथ यदुक्तं दर्शपूर्णमासयोरग्नीषोमीयपुरोडाशयागेऽग्नीषोमयोर्गुणभूतत्वात् संस्कार्यत्वाभावादिह च पशुपुरोडाशयागेऽग्नीषोमयोस्संस्कार्यत्वेन प्रधानत्वात् कथं तद्धर्माः स्युरिति, तत्राह—

**अविरुद्धोपपत्तिरर्थापत्तेः शृतवद् गुणभूतविकारस्स्यात्॥२७॥**

अग्नीषोमदेवतां गुणत्वेन प्राप्तः प्रकृतोऽग्नीषोमीययागः गुणभूतः, तस्यायं पशुपुरोडाशयागः विकारः–धर्मग्राही स्यात्। कुतः? अर्थापत्तेः–अर्थस्य-अतिदेशबीजोपकारस्य यागनिर्वृत्तिलक्षणस्य आपत्तेः उत्पत्तेः[1] उपकारमुखेनैव पदार्थानामतिदेशः। उपकारश्च यागनिर्वृत्तिलक्षणः अग्नीषोमदेवताया गुणत्वे संस्कार्यत्वे चाविशिष्टः। अतः शृतवद् उपपत्तिः—पशुपुरोडाशे दार्शपूर्णमासिकाग्नीषोमीयधर्मप्राप्तिरविरुद्धा। शृतेति पय उच्यते। दध्नोऽप्युपलक्षणम्। अभ्युदयेष्टौ "शृते चरुं दधंश्चरुम्" इति दधिपयसोः प्राकृतयागार्थयोरेव पूर्वदेवतापनयः देवतान्तरोपनयश्च, न तु कर्मान्तरमिति स्थितम् 'अभ्युदये कालापराधात्' इत्यत्र षष्ठे। अतो न तत्र श्रपणार्थप्रणीताधर्माः प्रवर्तन्ते प्रदेयद्रव्यत्वादिति **नवमस्य** चतुर्थे स्थितम्-'अभ्युदये दोहापनयः स्वधर्मा स्यात् प्रवृत्तत्वात्' इत्यत्र। 'अपनयो वार्थान्तरे विधानाच्चरुपयोवत्' इति तदुत्तराधिकरणे तु "यः पशुकामस्स्यात् सोऽमावास्यामिष्ट्वा" इत्यादिवाक्यमभ्युदयेष्टिवाक्यतुल्यमुदाहृत्य तत्र "शृते चरुं दधंश्चरुम्" इति दधिपयोविशिष्टचरुविशिष्टकर्मान्तरविधिः। दधिपयसोश्च सप्तमीश्रुत्या श्रपणे आधारत्वेन विधानात् प्रणीताधर्माः प्रवर्तन्त इति स्थितम्। प्रकृतौ च प्रणीतानां पुरोडाशश्रपणे आधारत्वन्नास्ति, चरुश्रपणे त्वाधारत्वं दधि-

१. उत्पत्तेः. नास्ति.क.

पयसोः । अथाप्याधारत्वमतन्त्रीकृत्य श्रपणनिर्वृत्तिलक्षणं कार्यमादाय प्रणीताधर्मो दधिपयसोस्तत्र यथा प्रवर्तन्ते तद्वदिहाप्यग्नीषोमयोर्गुणप्रधानभावमतन्त्रीकृत्य यागनिर्वृत्तिलक्षणकार्यमुखेन धर्मप्रवृत्तिर्निर्बाधा ॥

नन्वेवं पशुपुरोडाशस्य पशुदेवतासंस्कारार्थत्वे सौत्रामण्यां पशूनां पशुपुरोडाशानाञ्च भिन्नदेवत्यतया पशुपुरोडाशैः पशुदेवतानां संस्कारासम्भवात् पशुपुरोडाशास्सौत्रामण्यास्सकाशादुत्कृष्येरन् इत्याशङ्क्य तत्र परोक्तं परिहारमुद्भाव्य निराचष्टे—

**स द्व्यर्थः स्यादुभयोः श्रुतिभूतत्वाद्विप्रतिपत्तौ तादर्थ्यात्तद्विकारत्वमुक्तं तस्यार्थवादत्वम् ॥ २८ ॥**

सः—प्राकृतः पशुपुरोडाशः द्व्यर्थस्स्यात्-पशुदेवतासंस्कारार्थः छिद्रापिधानार्थश्च । कुतः ? उभयोः श्रुतिभूतत्वात्—देवतासंस्कारार्थत्वछिद्रापिधानार्थत्वयोरुभयोर्लिङ्गवाक्यशेषकल्पितश्रुत्या प्राप्तत्वात् । तत्र 'अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत स्वाहाकारवदङ्गानामर्थसंयोगात्' इति सूत्रेण सामर्थ्याद्देवतासंस्कारार्थत्वमस्मिन्नेवाधिकरणे वर्णितमेव । सामर्थ्यमेव च लिङ्गम् । तस्माच्च तथाविधा श्रुतिः कल्प्या । "अवीवृधेतां पुरोडाशेन" इत्यस्ति च मन्त्रलिङ्गम् । तेन पशुदेवता वर्धत इत्यस्ति च वाक्यशेषः । "सुषिरो वै तर्हि पशुर्यर्हि वपामुत्खिदति यद्व्रीहिमयः पुरोडाशो भवत्यपिधानायासुषिराय" इति च वाक्यशेषः । ततश्च सौत्रामण्यां विप्रतिपत्तौ भिन्नदेवत्यत्वावगतौ सत्यां पशुपुरोडाशानां पशुदेवतासंस्कारार्थत्वासम्भवेऽपि तादर्थ्यात्-पशुच्छिद्रापिधानार्थत्वसम्भवात् तद्विकारत्वं-सौत्रामणीगतकार्यविशेषकारित्वमेव सम्भवतीति न सौत्रामणीप्रकरणादुत्कर्षः पशुपुरोडाशानाम् । अयं तावदुत्कर्षाक्षेपस्य परिहारः कैश्चिदुत्प्रेक्षितः । स त्वनुपपन्नः; पशुपुरोडाशयागे पशुच्छिद्रापिधानार्थत्वस्य प्रत्यक्षविरुद्धत्वात् । एवञ्जातीयकानाञ्च वाक्यानां गुणवादत्वमर्थवादाधिकरणे 'गुणवादस्तु' इति सूत्रे वर्णितम् । [1]अतश्छिद्रापिधानार्थत्वमादाय नायमुत्कर्षपरिहारः ॥

---

१. अतश्च. क.

तर्हि कस्तत्र परिहार इत्यत आह

**विप्रतिपत्तौ तासामाख्याविकारः स्यात् ॥ २९ ॥**

सौत्रामण्यां पशुपुरोडाशानां विप्रतिपत्तौ-पशुयागापेक्षया भिन्नदेवत्यत्वप्रतिपत्तौ सत्यामुत्कर्षाक्षेपस्यायं परिहारः—तासामाख्याविकारस्स्यादिति। तासाम्-अश्विप्रभृतिपशुदेवतानाम् 'ऐन्द्रमेकादशकपालं निर्वपति सावित्रं द्वादशकपालं वारुणं दशकपालम्" इति इन्द्रादिशब्दः आख्याविकारः-एकदेशविकारेण वाचकस्स्यात्। यथा गाव्यादिशब्दा गवादीनाम्, यथा वा "प्रजां विश्वस्य प्रसयस्य माथिनः" इति मन्त्रे प्रसयशब्दो बृहच्छब्दार्थं गमयति, तद्वत्। ततश्चेन्द्रसवितृवरुणशब्दैः पुरोडाशदेवतावाचकैरश्व्यादिपशुदेवताभिधानसम्भवान्नोत्कर्षः॥

नन्वत्यन्तवैरूप्यादिन्द्रसवितृवरुणशब्दैरश्व्यादिशब्दितपशुदेवताभिधानासम्भवान्नायमप्युत्कर्षपरिहार इत्यतः परिहारान्तरमाह—

**अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः ॥ ३० ॥**

वा शब्दो नार्थे। नोत्कर्षः, किन्त्वभ्यासो भवति। सौत्रामण्यां हि अश्व्यादिपाशुकदेवताकाः पुरोडाशयागाश्चोदकतः प्राप्ताः। तानुद्दिश्य "आश्विनं गृह्णाति सारस्वतं गृह्णात्यैन्द्रं गृह्णाति" इति पुरोडाशस्थाने सुराद्रव्यविधयः—आश्विनसारस्वतैन्द्रैस्सुराग्रहैः पशुदेवतास्संस्कुर्यादिति वचनव्यक्तिः। तानेव [1]चोदकतः प्राप्तान् पुरोडाशयागानुद्दिश्याश्व्यादिदेवतास्थाने "ऐन्द्रमेकादशकपालन्निर्वपति सावित्रं द्वादशकपालं वारुणं दशकपालम्" इति देवतान्तरविधयः। इन्द्रादिदेवत्यैः पुरोडाशयागैराश्विनादिपशूनुपकुर्यादिति वचनव्यक्तिः, न तु पशुदेवता उपकुर्यादिति, भिन्नदेवत्यत्वात्। एवञ्च चोदकप्राप्त एकैकस्मिन् यागे चोदकप्राप्तस्य द्रव्यस्य दैवतस्य चापनयः द्रव्यान्तरस्य [ देवतान्तरस्य ] च विधिः। यागस्त्वेकैकश्चोदकप्राप्तस्स एवावतिष्ठते। अभ्युदितेष्टिवत्। ततश्चैकैकस्मिन् यागे द्रव्यद्वयं देवताद्वयञ्चावगतम्। तत्सम्पादनञ्चाभ्यासेन विना न सम्भवतीत्येकैको यागो द्विरभ्यस्यते। यथैक एव सोमयाग इन्द्रवाय्वादिदेवताभेदादभ्यस्यते तद्वत्। तत्र च प्रथमं प्रयुज्यमान एकैको यागः अश्व्यादिपाशुकदेवताकसुराद्रव्यकस्समानदेवत्यत्वात् पशुदेवतासंस्कारकः। यस्त्वेकदेशः द्वितीयवारं प्रयुज्यमानः स त्वेकैको यागोऽन्य-

---

१. चोदकप्राप्तान्. अ.

देवत्यः। अत एवारादुपकारकः प्रयाजवत्। यथा 'पशौ[1] पञ्चानां प्रयाजानां चोदकतः प्राप्तावेकादशत्वसङ्ख्याविधिबलादभ्यासः। तत्रापि पञ्चमषष्ठयोरभ्यास इति सङ्कर्षकाण्डे वक्ष्यते। तत्र चतुर्थबर्हिर्यागस्याभ्यासे सति पञ्चमषष्ठसप्तमप्रयाजेषु द्वारादयो देवताः। पञ्चमस्याभ्यासे सति अष्टमादिप्रयाजेषु तिस्रो देव्यस्त्वष्टेत्यादयो देवता इति स्थितिः।[2] तद्वदिहापि। ततश्चैन्द्रादिवाक्येषु प्राकृतकार्यकरतयैव विहितस्य पशुपुरोडाशयागाभ्यासस्य तत्रैव निवेशसम्भवान्नोत्कर्ष इति सूत्रभाष्याक्षरानुसारी पन्थाः।

वर्तिककृतस्तु नैतत्सम्मन्यन्ते—ऐन्द्रादिवाक्येषु हि प्राकृतपशुपुरोडाशयागोद्देशेन देवतान्तरविधिरित्ययुक्तम्, उपकारपृष्ठभावेनैव पदार्थानामतिदेशात्। इह च भिन्नदेवताविधानेन प्राकृतोपकारस्य वस्तुतोऽनतिदेशेन तत्पृष्ठभावेन पशुपुरोडाशयागस्यातिदेशासम्भवेन तदुद्देशेन देवतान्तरविध्यसम्भवात्। किञ्च "अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालन्निर्वपति द्वादशकपालं वा" इति प्रकृतौ स्थितम्। इह च वारुणस्यैकादशकपालत्वे द्वादशकपालत्वे वा प्राप्ते दशकपालमिति सङ्ख्यापि विधातव्या। ऐन्द्रसावित्रयोस्तु एकादशत्वद्वादशत्वयोः कपालेष्वनियमतः प्राप्तौ "ऐन्द्रमेकादशकपालं सावित्रं द्वादशकपालम्" इति सङ्ख्ये अपि विधातव्ये। ततश्च प्राप्तकर्मानुवादेनानेकगुणविधानाद्वाक्यभेदः। ततश्चैन्द्रादिवाक्येषु द्रव्यदेवताकपालसङ्ख्याविशिष्टा अन्ये पशपुरोडाशयागा अप्राकृतकार्या विधीयन्ते। "यदन्यद्देवत्याः पशुपुरोडाशाः" इति तु पशुपुरोडाशयागत्वेन व्यपदेशमात्रम्। न चैवं सति पशुदेवतासंस्कारालाभात्तदर्थमश्व्यादिपाशुकदेवताकपुरोडाशान्तरानुष्ठानमपि स्यादिति वाच्यम्, "आश्विनं गृह्णाति" इत्यादिसुराग्रहवाक्येषु हि पशुपुरोडाशयागे चोदकप्राप्ते सुराद्रव्यविधिर्न सम्भवति। एवं हि य आश्विनः पशुपुरोडाशयागस्स सुराद्रव्यक इत्येवं वचनव्यक्तयस्स्युः। न चैतत्सम्भवति, "आश्विनं गृह्णाति" इत्यादिविधिषु गृह्णातेः प्रमादपाठापत्तेः। अतस्सुराग्रहवाक्येषु द्रव्यदेवताविशिष्टग्रहणविधिः। द्रव्यदेवतासम्बन्धाच्च यागकल्पनेति वास्तवी स्थितिः। तेषु च यागेषूद्देशांशेनाश्व्यादिपशुदेवतास्मरणस्यापि सामर्थ्यतस्सम्भवान्न तद्देवताकपुरोडाशान्तरानुष्ठानम्। तत्र च लिङ्गम्—"न ह्येतेषां पशूनां पुरोडाशा भवन्ति, ग्रह-

---

१. पशौ. नास्ति. क. २. तद्वदिहापि. नास्ति. क, ग.

पुरोडाशा ह्यन्ते" इति। एतेषाम्—अग्न्यादिदेवताकानां पशूनां पुरोडाशयागा देवतास्मारका न विद्यन्ते, किन्तु ग्रहयागा एव पुरोडाशकार्यकरा इति तदर्थ इत्यलमतिविस्तरेण ॥

इति नवमं पशुपुरोडाशयागस्य संस्कारकर्मत्वाधिकरणम् ॥ ९ ॥

१०

"सौर्यं चरुम्" इत्यत्र चरुशब्देन स्थाली विवक्षिता, सा च यागे प्रदेयत्वेन विधीयते ? उत चरुशब्दवाच्या स्थाली कपालकार्ये श्रपणे विधीयते ? अथवा चरुशब्दवाच्य ओदनः, स प्रदेयत्वेन विधीयते ? इति संशये, प्रथमपक्षमुपक्षिपति—

**चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥ ३१ ॥**

चरुशब्दवाच्यस्थालीविशेषः हविर्विकारः—हविःकार्यकारी स्यात्। प्रदेयत्वेन विधीयत इति यावत्। कुतः ? इज्यासंयोगात्—देवतासम्बन्धावगतयागसम्बन्धात्। यागस्य च प्रदेयद्रव्याकाङ्क्षत्वात् ॥

ननु कथं चरुशब्दवाच्यत्वं स्थाल्या इत्यत आह—

**प्रसिद्धग्रहणत्वाच्च ॥ ३२ ॥**

चरुशब्दश्चायं स्थालीवचनः। कुतः ? प्रसिद्धग्रहणत्वात्—ग्रहणेति कर्मणि ल्युट्। प्रसिद्धस्यैव ग्राह्यत्वात्। चरुशब्दो हि स्थाल्यां प्रसिद्धः 'अग्नावधिश्रिते चरावुदकमासिच्य तण्डुलानावपति' 'चरुर्भिन्नः' इत्यादौ। तस्माच्चरुशब्दवाच्या स्थाली प्रदेयत्वेन विधीयते ॥

अत्र शङ्कते—

**ओदनो वान्नसंयोगात् ॥ ३३ ॥**

चरुरित्योदन एव विवक्षितः। 'चरुभुंक्त इत्यादावोदनेऽपि याज्ञिकैश्चरुशब्दप्रयोगात्। न च विनिगमनाविरहश्शङ्क्यः, अन्नसंयोगात्—अदनीयस्यैव

---

१. चरुर्हि. क.

द्रव्यस्य देवतासंयोगात्। अदनीयेनैव हि द्रव्येण देवतायागमाचरन्ति शिष्टाः, [1]न त्वनदनीयेन। आचाराच्च स्मृतिरनुमीयते, ततश्च श्रुतिः। तस्मान्न स्थाली प्रदेयत्वेन विधीयते ॥

अथ परिहरति—

**न द्व्यर्थत्वात् ॥ ३४ ॥**

ओदनोऽपि न चरुशब्दवाच्यः, तथा सति द्व्यर्थत्वप्रसङ्गात्। किन्तु स्थाल्येव। स्थाल्यां प्रयोगस्य सार्वलौकिकतया मुख्यत्वात्। ओदने याज्ञिकमात्रप्रयोगस्य क्वाचित्कतया चरुशब्दवाच्यस्थालीयोगमादाय लाक्षणिकत्वसम्भवात्। न च स्थाल्या अनदनीयत्वान्न प्रदेयत्वमिति वाच्यम्, विधिबलादेव कृष्णलादिवदनदनीयत्वेऽपि प्रदेयत्वसम्भवात्। उक्ताचारस्य च[2] प्रत्यक्षश्रुतिविरुद्धत्वेनैतद्व्यतिरिक्तविषयत्वात्। तस्मात् स्थाल्येवात्र[3] प्रदेयतया विधीयते ॥

अथ चरुशब्दवाच्या स्थाली श्रपणे विधीयत इति द्वितीयपक्षमुत्थापयति—

**कपालविकारो वा विशयेऽर्थोपपत्तिभ्याम् ॥ ३५ ॥**

स्थाल्याश्चरुशब्दवाच्यत्वपक्षे प्रदेयत्वेन श्रपणार्थत्वेन वा विधिरिति संशये सत्युक्तरीत्या स्थाल्येव चरुशब्दवाच्या। सा च कपालविकार एव श्रपणलक्षणकपालकार्यकारिणी, न[4] तु प्रदेयभूता। कुतः? अर्थोपपत्तिभ्याम्-प्रदेयत्वाभावेऽपि स्थाल्यां सौर्यमिति तद्धितार्थसम्भवात् यागकल्पनाया अप्युपपत्तेश्च। सौर्यमिति हि नायं देवतातद्धितः, किन्तु सम्बन्धसामान्ये। ततश्च स्थाल्याः प्रदेयहविष्ट्वाभावेऽपि तस्यां श्रपितस्य प्रदेयहविष्ट्वमात्रेण परम्परासम्बन्धमादाय सौर्यमिति तद्धितनिर्देशस्याविरोधः। नन्वेवं देवतातद्धितत्वाभावे यागकल्पनानुपपत्तिः, यागाभावाच्च स्थाल्यां श्रपितस्य प्रदेयहविष्ट्वानुपपत्तिः, ऐष्टिकविध्यन्तप्राप्त्यसम्भवात् स्थाल्याः कपालविकारत्वानुपपत्तिश्चेति चेन्न; सम्बन्धसामान्ये बोधिते सति द्रष्टद्वारा सूर्यसम्बन्धनिर्वाहाय तत्र श्रपितस्य हविष्ट्वकल्पनावश्यम्भावेन तद्बलाद् याग-

---

१. न त्वनदनीयेन. नास्ति. क, ग.

२. च. नास्ति. अ.

३. अत्र. नास्ति. अ.

४. न तु प्रदेयभूता. नास्ति. क, ग.

कल्पनाया अभ्युपपत्तेः। एवञ्चोक्ताचारस्याप्यविरोधः। तस्माच्चरुशब्दवाच्या स्थाली श्रपणे विधीयते ॥

इतोऽप्येवमित्याह—

**गुणमुख्यविशेषाच्च ॥ ३६ ॥**

स्थाल्याः प्रदेयत्वेन विधौ चोदकप्राप्तः पुराडाशो बाध्येत। श्रपणार्थत्वेन विधौ तु पुरोडाशगुणभूतानि कपालानि बाध्यन्ते। गुणमुख्ययोश्चास्ति विशेषः-गुणो बाधितव्यः, मुख्यस्तु न बाधितव्य इति। तदिदं वक्ष्यते द्वादशे-'अङ्गगुणविरोधे च तादर्थ्यात्' इति। तस्मादपि चरुशब्देन स्थालीश्रपणे 'विधीयते ॥

इतोऽप्येवमित्याह—

**तच्छ्रुतौ चान्यहविष्ट्वात् ॥ ३७ ॥**

चरुशब्दश्रवणे सति तदन्यस्य प्रदेयहविष्ट्वेन विधानं दृश्यते-"प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्कामः" इति। अतोऽपि चरुशब्दवाच्या स्थाली न प्रदेयत्वेन विधानमर्हति ॥

इतोऽप्येवमित्याह--

**लिङ्गदर्शनाच्च ॥ ३८ ॥**

"वारुणो यवमयश्चरुर्भवति" इति चरोर्यवप्रकृतिकत्वं श्रुतम्। न ह्येतन्मृण्मय्या[2] स्थाल्या अवकल्पते। अतश्चर्वाधारो यवमय ओदन इत्यर्थः। अतोऽपि लिङ्गात् चरोरन्यदेव हविः। स्थाल्येव चरुशब्दवाच्या श्रपणे विधीयत इति द्वितीयः पक्षः ॥

अथ तृतीयपक्षमवलम्ब्य सिद्धान्तयति

**ओदनो वा प्रयुक्तत्वात् ॥ ३९ ॥**

वा शब्दोऽवधारणे। ओदन एव चरुशब्दवाच्यः प्रदेयत्वेन विधीयते, न तु[3] स्थाली चरुशब्दवाच्या। कुतः? प्रयुक्तत्वात्-अनवस्नावितान्तरूष्मपाके[4]

१. विनियुज्यते. क. २. मृण्मयस्थाल्या. क.
३. च. क. ४. पाकविशिष्टसिद्धे. क.

विशदसिद्धे ओदने चरुशब्दस्य याज्ञिकप्रयोगात्। न च स्थाल्यां चरुशब्दप्रयोगस्य सार्वत्रिकत्वाद् ओदने च याज्ञिकप्रयोगस्य क्वाचित्कत्वाद् याज्ञिकप्रयोगस्य लाक्षणिकत्वमिति वाच्यम्। याज्ञिका हि शब्दैकसमधिगम्यधर्मव्यवहाराय शब्दार्थेष्वभिनिविशन्ते। लौकिकास्तु शब्दार्थव्यवहारस्य यथाकथञ्चित्सम्भवान्न तत्राभिनिविशन्ते। अतो याज्ञिकव्यवहारादेवात्र शब्दार्थनिर्णयः, लौकिकापेक्षया याज्ञिकानां प्रत्ययिततमत्वात्। अतः स्थाल्यां चरुशब्दस्य लौकिकप्रयोग एव लाक्षणिक इति युक्तम्॥

इतोऽप्येवमित्याह—

अन्यव्यपदेशाच्च ॥४०॥

"दीक्षणीयामिष्टिं निर्वपति" "अग्नावैष्णवमेकादशकपालं निर्वपति" "आग्नावैष्णवं वा चरुम्" इति श्रुतम्। अत्र च वाशब्दात् चरुपक्षे पुरोडाशो नास्ति, पुरोडाशपक्षे चरुर्नेति चरुपुरोडाशपक्षयोरन्य [तरत्वं] प्रतीयते। तत्र यदि चरुशब्दवाच्या स्थाली श्रपणार्थे विधीयते, तर्हि "आग्नावैष्णवं चरुम्" इति वाक्यमुन्मत्तप्रलपितं स्यात्। न ह्यत्र स्थाल्या अग्नाविष्णुदेवत्यत्वमस्ति, स्थाल्या अनदनीयत्वात् 'यदार्याणामनदनीयं स्यान्न तेन यजेत' इति निषेधात्। सम्बन्धसामान्यतद्धिताश्रयणे च याग एव न स्यात्, ततश्च तदीयद्रव्यस्य श्रपयितव्यस्याभावात्[1] स्थालीविधिरनर्थकः। न चोक्तरीत्या द्रष्टद्वारा सम्बन्धनिर्वाहाय श्रपयितव्यद्रव्यस्य [यस्य] कस्यचिल्लाभाद्यागसिद्धिरिति वाच्यम्, विशेषरूपेण श्रपयितव्यस्यालाभात्। न च चोदकतः पुरोडाशस्य श्रपयितव्यस्य प्राप्तिरिशङ्क्या, यागस्वरूपासिद्धौ चोदकस्यानुन्मेषात्। ततश्च "आग्नावैष्णवमेकादशकपालं निर्वपति" इति पूर्ववाक्ये पुरोडाशे श्रपणार्थतया स्थालीविधिरिति वक्तव्यम्। तत्तु न सम्भवति। वाशब्देन चरोः पाक्षिकत्वावगमविरोधात्। अतोऽपि न[2] चरुशब्दवाच्या स्थाली, किन्त्वोदन एव॥

---

१. अलाभात्. क.

१. चरुवाच्या अ.

इतोऽप्येवमित्याह—

## तथा च लिङ्गदर्शनम् ॥४१॥

"आदित्यः पयसि प्रायणीयश्चरुः" इत्यत्र "अदितिमोदनेन" इति वाक्यशेषोऽप्यत्र लिङ्गम्। न च "सौर्यं चरुम्" इत्यत्र वाक्यशेषाभावात् कथं शब्दार्थनिर्णय इति शङ्क्यम्। एकत्रानुवादबलाच्चरुशब्दस्यौदनपरत्वे निश्चिते सति सर्वत्राप्योदनपरत्वस्यैवाश्रयितुमुचितत्वात्, अन्यथानेकार्थत्वापत्तेः। ननु 'चरुं भुङ्क्ते' इत्यादौ चरुशब्दं स्थालीपक्व एवौदने प्रयुञ्जते, न तु शरावकटाहादिपक्वेऽपि। एवञ्चौदनस्य वाच्यत्वं वदतापि स्थल्या विशेषणत्वमभ्युपगन्तव्यम्। ततश्च नागृहीतविशेषणान्यायेन स्थाल्येव चरुशब्दवाच्या, ओदने तु क्वचिल्लक्षणयेति युक्तमिति चेन्न; स्थालीपक्वेऽपि ह्यनवस्रावितान्तरूष्मविशदपाकसिद्ध एवौदने चरुशब्दं प्रयुञ्जते, न त्वनेवंविधे। स्थालीमन्तरेण च स पाको न निर्वर्तत इति कृत्वा स्थाल्यादरः। ततश्च कटाहादिपक्व ओदने चरुशब्दव्यवहाराभावस्य पाकविशेषाभावेनान्यथासिद्धत्वान्न तदनुसारेण च स्थाल्या विशेषणत्वम्। अतो नागृहीतविशेषणेति न्यायानवतारान्न स्थालीवचनश्चरुशब्दः, किन्त्वोदनवचन एव। तदेतत् त्रिवृच्चर्वश्ववालाधिकरणे विचारितमपि बाधोपयोगितया विस्तरेणेह विचारितम्। प्रयोजनं प्रथमपक्षे-"सौर्यं चरुम्" इत्यत्र स्थाल्याः प्रदेयद्रव्यत्वात्[1] प्रकृतिप्राप्तः पुरोडाशो निवर्तते। द्वितीयपक्षे तु–पुरोडाशश्रपणे स्थाल्या विधानात् कपालानि निवर्तन्ते। सिद्धान्ते तु–ओदन एव हविः। तस्य हविष्ट्वात् पुरोडाशो निवर्तते। तस्य च कपालेषु पाकासम्भवात् तन्निवृत्तौ स्थाल्यां श्रपणमर्थसिद्धमित्याद्यूह्यम्[2] ॥

इति दशमं चरुशब्दस्योदनवाचित्वाधिकरणम् ॥१०॥

११

पूर्वाधिकरणसिद्धान्तप्रयोजनं प्रपञ्चयितुमिदमारभ्यते। चरुरोदन इति स्थितम्। स किं कपालेषु श्रपयितव्यः? उत यत्र क्वचित्? अथवा स्थाल्यामेव?

---

१. प्रदेयत्वात्. क, ग.    २. इत्यूह्यम्. क.

इति संशये प्रथमपक्षयति—

**स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात् ॥४२॥**

सः—चरुः प्रकृतितः प्राप्ते कपाले श्रपयितव्यः स्यात् । पुरोडाशकार्ये चरोरिव कपालकार्येऽन्यस्याविधानाच्च ॥

अत्र शङ्कते—

**सङ्ख्या चापि कपालवत् ॥४३॥**

"अष्टाकपालो भवति" इति कपालवत् सङ्ख्यापि विहिता । ततश्च सङ्ख्याकपालयोरेकपदोपादानेनान्यतरस्य पदार्थैकदेशत्वेनाशास्त्रार्थत्वादष्टसु च[1] कपालेषु चरोः श्रपणासम्भवात् सङ्ख्याबाधे कपालबाधोऽपि न्याय्यः ॥

अथ परिहरति—

**एकस्मिन्वा विप्रतिषेधात् ॥४४॥**

अष्टसु कपालेषु विप्रतिषेधात् चरोः श्रपणासम्भवादष्टत्वसङ्ख्याभावेऽपि एकस्मिन् कपाले महति चरुश्रपणयोग्यबिलं सम्पाद्य चरोः श्रपणं स्यात् । समासान्तवर्तिकपालपदमादाय कपालमात्रस्यापि शास्त्रार्थत्वात् । ततश्चैकस्मिन्नेव कपाले आसादनप्रोक्षणादिसंस्कृते चरुः श्रपयितव्य इति फलति ॥

अथ द्वितीयपक्षयति—

**न वार्थान्तरसंयोगादपूपे पाकसंयुक्तं धारणार्थश्चासौ भवति तत्रार्थात् पात्रलाभः स्यादनियमोऽविशेषात् ॥४५॥**

वा शब्दस्सम्भावनायाम् । नैव चरोः कपाले श्रपणम्, कपालप्रापकाभावात् । चोदकस्तु न तत्प्रापकः । कुतः? अर्थान्तरसंयोगात्—अप्राकृतकार्यसंयोगात् । प्रकृतौ हि पुरोडाशलक्षणेऽपूपे साध्ये कपालं तद्गतोष्मद्वारा पाकसंयुक्तं-पाकजनकम् उपादीयते, कपालगतोष्मणा पुरोडाशपाकनिष्पत्तेः । चरौ तु श्रपणीये उदकधारणार्थं कपालमुपादेयम्, उदकगतोष्मणैव चरुपाकनिष्पत्तेः । ततश्च तत्र चरुश्रपणे कार्ये

---

१. च. नास्ति. क.

कपालगतोष्मलक्षणप्राकृतद्वाराभावान्न चोदकतः कपालप्राप्तिरस्तीत्यर्थात् शराव-कटाहस्थाल्यादिपात्रलाभः स्यात्। अविशेषान्नान्यतमनियमः। ततश्चाप्राकृतकार्य-[कारि] त्वाच्चरुश्रपणपात्रस्य न प्रोक्षणादिप्राकृतधर्माः ॥

अथ सिद्धान्तयति—

**चरौ वा लिङ्गदर्शनात् ॥४६॥**

वाशब्दोऽवधारणे। चरुशब्दः स्थाल्यां लाक्षणिकः। स्थाल्यामेव चरोः पाकः। कुतः ? लिङ्गदर्शनात्। दृश्यते निर्णीयतेऽनेनेति दर्शनं-न्यायः। लिङ्गान्न्यायाच्चेत्यर्थः। अनवस्रावितान्तरूष्मपाकविशदसिद्ध[1] एवौदने चरुशब्दो याज्ञिकप्रसिद्धः। तथाविधपाकश्च स्थाल्यामेव भवति, न तु कटाहादाविति चरुविधिबलादेव स्थाली प्राप्यत इति न्यायः। "यासु स्थालीषु सोमा भवन्ति तासु देविकाहवींषि श्रपयन्ति" इति सिद्धवत्स्थाल्यनुवादोऽन्येषामपि चरूणां स्थाल्यामेव श्रपणे लिङ्गम्। अन्यथा स्थालीषु श्रपयतीति ताश्च [2]सोमग्रहण्य इत्यनेकार्थविधानापत्तेः। तस्मात् स्थाल्यामेव चरुश्रपणम्। तस्याश्चोक्तरीत्या प्राकृतकार्यकरत्वान्न प्राकृताः प्रोक्षणादिधर्माः। चरोस्तु प्रदेयत्वेन पुरोडाशकार्यकारित्वात्तद्धर्मा भवन्तीति ॥

इति द्वादशं चरोः स्थाल्यामेव पाकाधिकरणम् ॥११॥

१२

चरुरोदन इति स्थितम्। तत्र पेषणं भवति न वेति संशये पूर्वपक्षयति—

**तस्मिन् पेषणमनर्थलोपात्स्यात् ॥४७॥**

तस्मिन्—चरौ तदीयतण्डुलानां पेषणं चोदकतो भवति। अर्थस्य पेषणलक्षणकार्यस्य तण्डुलेषु लोपाभावात्। कर्तुं शक्यत्वादिति यावत् ॥

सिद्धान्तयति—

**अक्रिया वापूपहेतुत्वात् ॥४८॥**

वाशब्दोऽवधारणे। चरौ पेषणक्रिया नैव भवति। कुतः ? अपूपहेतुत्वात्। उपकारमुखेन पदार्थानामतिदेशः। प्रकृतौ च पुरोडाशलक्षणापूपनिष्पादनद्वारापूर्व-

---

१. पाकसिद्धः. अ. २. सोमग्रह एव. अ.

साधनत्वं स्थितम्। पिष्टञ्च पक्वं यवागूर्वा स्यात् खलिर्वा। ततश्च पेषणे ओदनस्वरूपमेव न सम्पद्येत। अतो द्वारलोपान्न चरौ पेषणम्॥

इति द्वादशं चरौ पेषणबाधाधिकरणम्॥१२॥

१३

उक्तमधिकरणमन्यत्राप्यतिदिशति–

**पिण्डार्थत्वाच्च संयवनम्॥४९॥**

"प्रणीताभिर्मदन्तीभिश्च पिष्टं संयौति" इति मिश्रणमपि पिण्डविशेषप्रकृतिकपुरोडाशनिष्पादनमुखेनापूर्वार्थत्वाच्चरौ निवर्तते॥

इति त्रयोदशं चरौ संयवनबाधाधिकरणम्॥१३॥

१४

अन्यत्राप्यतिदिशति–

**संवपनश्च तादर्थ्यात्॥५०॥**

"निष्टप्तायां पात्र्यां पिष्टानि संवपति" इति संवपनमपि चरौ निवर्तते, तस्य संयवनार्थत्वात्, चरौ चोक्तरीत्या संयवनाभावात्॥

इति चतुर्दशं चरौ संवपनबाधाधिकरणम्॥१४॥

१५

अन्यत्राप्यतिदिश्यति–

**सन्तापनमधः श्रपणात्॥५१॥**

"भृगूणामङ्गिरसां तपसा तप्यध्वम्" इति कपालेष्वङ्गारानध्यूहति" इति कपालसन्तापनमपि चरौ न भवति। सन्तापनं ह्युपरि तापनम्। तच्च तदूष्मणा पुरोडाशाधोभागश्रपणार्थम्। चरुस्तु स्थाल्यामधस्तप्तायां [1]तप्ते जले तदूष्मणा

1. तप्तजले. क, ग.

पच्यते। पच्यमाने च तस्मिन्नुपरितनास्तण्डुला अधो भवन्ति। अधस्त्वाश्चोपरि भवन्ति। ततश्चाप्राकृतकार्यकरत्वान्न सन्तपनम् ॥

इति पञ्चदशं चरौ सन्तापनबाधाधिकरणम् ॥१५॥

१६

अन्यत्राप्यतिदिशति—

**उपधानश्च तादर्थ्यात् ॥५२॥**

"आदेवयजमित्यङ्गारमावर्त्य ध्रुवमसीति तस्मिन् कपालमुपदधाति" इत्येतदपि चरुस्थल्यां न भवति, कपालोपधानस्योपहितकपालगतोष्मद्वारकपुरोडाशाधोभागपाकार्थत्वात्, चरोश्चोक्तरीत्या तदभावात्। याज्ञिकास्तु ()कल्पसूत्रकृतः कपालोपधानकाले तन्मन्त्रेण ध्रुवोऽसीत्यूहितेन स्थाल्या उपधानमाहुः। तत्र वचनमेव शरणम् ॥

इति षोडशं चरावुपधानबाधाधिकरणम् ॥१६॥

१७

अन्यत्राप्यतिदिशति-

**पृथुश्लक्ष्णे चापूर्वार्थत्वात् ॥५३॥**

"उरु प्रथस्वेति पुरोडाशं कपालेषु प्रथयति" इति "त्वचं गृह्णीष्वेत्यद्भिः श्लक्ष्णीकरोति" इति च चरौ न भवति, पुरोडाशलक्षणापूपनिष्पादनार्थत्वात् ॥

इति सप्तदशं चरौ प्रथनश्लक्ष्णीकरणबाधाधिकरणम् ॥१७॥

१८

अन्यत्राप्यतिदिशति-

**अभ्यूहश्चोपरिपाकार्थत्वात् ॥५४॥**

"पुरोडाशे साङ्गारं भस्माध्यूहति" इत्यपि चरौ निवर्तते, उपरिप्रदेशे पाकार्थत्वात्। चरौ च श्रप्यमाणे उपरि साङ्गारभस्माध्यूहने चरुस्वरूपस्यैव विनाशप्रसङ्गात् ॥

इत्यष्टादशं चरौ भस्माङ्गाराध्यूहनबाधाधिकरणम् ॥१८॥

१९

अन्यत्राप्यतिदिशति—

**तथावज्वलनम् ॥५५॥**

"अग्निस्ते तनुवं मातिधागिति दर्भैः पुरोडाशमभिज्वलयति" इत्युपरिज्वलनमपि चरोरुक्तयुक्त्या[1] न भवति ॥

इत्येकोनविंशं चराववज्वलनबाधाधिकरणम् ॥१९॥

२०

प्रकृतौ कपालेषु श्रुतम्—"पुरोडाशं कपालेभ्यो व्युद्धृत्य पात्र्यां प्रतिष्ठाप्य वेद्यामासादयति" इति । तदिदं व्युद्धरणं चरोर्भवति न वेति संशये, चोदकतो भवेदिति प्राप्ते, सिद्धान्तयति—

**व्युद्धृत्यासादनञ्च प्रकृतावश्रुतत्वात् ॥५६॥**

स्थाल्या व्युद्धृत्य पात्र्यां प्रतिष्ठाप्य चरोर्न वेद्यामासादनम्, किन्त्वव्युद्धृत्यैवासादनम्, स्थालीस्थस्यैव । कुतः? कपालेभ्यो व्युद्धरणस्य प्रकृतावश्रुतत्वात् । "पुरोडाशमुद्वासयति" इत्येतावच्छ्रुतम् । तदिदमुद्वासनं वेद्यामासादनार्थम् । आसादनञ्च यागप्रचरणार्थम् । न हि सकपालस्य पुरोडाशस्योद्वासने प्रयोजनमस्ति । कपालानां वेद्यामासादने प्रयोजनाभावादिति कपालेभ्यो व्युद्धरणमर्थसिद्धं पुरोडाशस्य प्रकृतौ । न चार्थिकं चोदकः प्रतिदिशति । तस्मात् स्थालीविशिष्टस्यैव चरोरुद्वासनासादनमिति सिद्धम् ॥

इति विंशं चरौ व्युद्धरणबाधाधिकरणम् ॥२०॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ
दशमस्याध्यायस्य प्रथमः पादः ॥

---

१. रीत्या. क.

# अथ दशमाध्यायस्य द्वितीयः पादः

निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

द्वारलोपनिबन्धनबाधो विचारितः प्रथमपादे । अथास्मिन् द्वितीयपादे तदपवादः प्राधान्येन प्रस्तूयते—"प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलमायुष्कामः" इति श्रुतचरोः[1] पाकोऽस्ति न वेति संशये, नास्तीति पूर्वपक्षयति—

**कृष्णलेष्वर्थ[2] लोपादपाकः स्यात् ॥ १ ॥**

कृष्णलेषु पाको न स्यात् । कुतः ? अर्थलोपात् । प्रकृतौ हि पुरोडाशलक्षणहविर्निष्पत्त्यर्थः पाकः । इह च पाकं विनापि कृष्णलरूपहविषः सिद्धत्वेन प्रयोजनलोपान्न पाकः कर्तव्यः । न च प्राकृतप्रयोजनाभावेऽपि "घृते श्रपयति" इति वचनबलादेवादृष्टार्थः पाकोऽस्तीति वाच्यम्, पच्यर्थस्य विक्लत्तेः कृष्णलेषु कर्तुमशक्यत्वात्, अशक्यार्थस्य च विधानायोगात् । अत एव च "घृते श्रपयति" इति वचनमपि द्वितीयार्थे सप्तमीमाश्रित्य घृतं श्रपयतीति विधिपरं [3]भविष्यति, श्रपयतीति वा प्रक्षेपपरो भविष्यति । न चाग्निसंयोजनमेव पच्यर्थः, स च कृष्णलेषु शक्यत इति वाच्यम्, अग्निसंयोजनमात्रस्य पच्यर्थत्वे आकाशादेरपि पक्वत्वप्रसङ्गात् । ततश्च विक्लत्तिहेतु[4] भूताग्निसंयोजनमेव पच्यर्थ इति वक्तव्यम् । विक्लत्तिश्च न कृष्णलेषु सम्भवति । न चैवं सति धानाः पचति पृथुकान् पचतीति न स्यात्, धानादिषु विक्लत्त्यभावादिति वाच्यम् । न हि विशदभाव एव विक्लत्तिः, पूर्व-

---

१. इत्यत्र चरोः. अ.
२. लोपान्न पाकः.
३. भवति. अ.
४. भूतं. क.

कालीनरूपरसगन्धाद्यन्यथाभावात्मकपूर्वरूपपरावृत्तेरेव विक्लित्तिशब्दार्थत्वात्। एवंविधविक्लित्तेश्च कृष्णलेष्वसम्भवात्। तस्मान्न कृष्णलेषु[1] पाकः ॥

अथ सिद्धान्तयति—

**स्याद्वा प्रत्यक्षशिष्टत्वात् प्रदानवत् ॥ २ ॥**

वाशब्द एवार्थे। स्यादेव कृष्णलानां पाकः। कुतः? प्रत्यक्षशिष्टत्वात्–"घृते श्रपयति" इति प्रत्यक्षविधानात्। पाको ह्यत्र प्रकृतितः प्राप्तः पुरोडाशनिष्पत्तिलक्षणप्राकृतकार्याभावान्निवर्त्तमानोऽपि वचनात् प्रतिप्रसूयते। किमिह वचनं न कुर्यान्नास्ति वचनस्यातिभारः। प्रदानवत्। यथादनीयत्वाभावेऽपि कृष्णलानां देवतायै[2] प्रदानं वचनबलात् तद्वत्। न च प्राकृतकार्याभावे पाकः किमर्थं विधातव्य इति वाच्यम्, अदृष्टार्थतया तद्विधिसम्भवात्। न च पाकस्यात्राशक्यविधानत्वं शङ्क्यम्। अनुष्णस्पर्शवद्द्रव्यस्योष्णीकरणमेव हि पच्यर्थः। पूर्वरूपपरावृत्तिस्तु विक्लित्तिरस्य प्रायिकं फलम्, न तु तदपि पचिशब्दार्थप्रविष्टम्, तथा विक्लित्त्यसम्भवेऽपि कृष्णलानां श्रपणविधेः तत्र श्रपयतेर्लक्षणायां द्वितीयायाश्च व्यत्यये प्रमाणाभावात्। 'पचेर्विक्लित्तिः प्रधानार्थः' इति महाभाष्यमप्येतदभिप्रायकमेव। एवञ्च धानादावपि पचिव्यवहार उपपन्नो भवति। आकाशस्यापि न पाकप्रसङ्गः। तस्मात् कृष्णलेष्वदृष्टार्थः पाकः। अप्राकृतकार्यत्वाच्च तस्मिन् पाके प्राकृतधर्मा न प्रवर्तन्ते ॥

इति प्रथमं कृष्णलचरौ पाकानुष्ठानाधिकरणम् ॥ १ ॥

२

"आज्यस्योपस्तीर्य द्विर्हविषोऽवदायोपरिष्टादाज्यस्याभिघारयति" इत्युपस्तरणाभिघारणे कृष्णलचरौ भवतो न वेति संशये, सिद्धान्तमुपक्षिपति—

**उपस्तरणाभिधारणयोरमृतार्थत्वादकर्म स्यात् ॥ ३ ॥**

कृष्णलचरावुपस्तरणाभिधारणयोः अकर्म–[3]अनुष्ठानं न स्यात्। कुतः? अमृतार्थत्वात्–"यदुपस्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोति" इति तयोरमृतार्थ-

---

१. कृष्णलानां. अ.  २. देवतायै. नास्ति. अ.

३. अननुष्ठानं स्यात्. क.

त्वावगमात्। अमृतेति हि स्वादुत्वं विवक्षितम्। कृष्णलेषु चोपस्तरणाभिघारणाभ्यां न स्वादिमा सम्भवति। अतोऽर्थलोपान्न कृष्णलेषूपस्तरणाभिधारणे ॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

**क्रियेत वार्थवादत्वात्तयोस्संसर्गहेतुत्वात् ॥ ४ ॥**

वाशब्दः प्रत्यवस्थाने। कृष्णलेषूपस्तरणमभिघारणञ्च क्रियेत, चोदकतः प्राप्तेः। न चामृताहुतिवाक्यात्तयोः स्वादिमार्थत्वं शङ्क्यम्, द्व्यवदानसंसर्गमात्रे हेतुत्वस्य तयोरुपस्तरणाभिघारणयोः प्रत्यक्षतयामृताहुतिवाक्यस्यामृतत्वारोपेण स्तुतिमात्रपरत्वात्। न ह्युपस्तरणाभिधारणाभ्याममृतत्वममृततुल्यस्वादुत्वं वा हविषो भवति, प्रत्यक्षविरुद्धत्वात्। अतः कृष्णलानामपि द्व्यवदानस्याज्येन संसर्गायोपस्तरणाभिधारणे कर्तव्ये ॥

अथ सिद्धान्ती स्वपक्षं युक्त्यन्तरेण समर्थयते—

**अकर्म वा चतुर्भिराप्तिवचनात् सहपूर्णं पुनश्चतुरवत्तम् ॥ ५ ॥**

वाशब्दोऽवधारणे। पुनश्शब्दस्तर्हीत्यर्थे, ह्यर्थे वा। कृष्णलेषूपस्तरणाभिधारणयोरक्रियैव। कुतः ? चतुर्भिराप्तिवचनात्। उपस्तरणाभिघारणाभ्यां हविरवदानाभ्याञ्च चतुरवत्तं प्रकृतौ स्थितम्। अत्र तु "चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै" इति चतुर्भिः कृष्णलावदानैश्चतुरवत्तस्याप्तिरुच्यते। अतः कृष्णलैरेव चतुरवदानसिद्धेः नोपस्तरणाभिघारणे। किञ्च यद्युपस्तरणाभिघारणे स्तः, तर्हि ताभ्यां सहैव चतुरवत्तं सम्पूर्णमिति तस्य विद्यमानस्य तैरेवाप्त्यनुग्रहवचनन्न समञ्जसं स्यात्। अविद्यमानस्य ह्यर्थान्तरेणानुग्रहो भवति। अतोऽप्यत्र नोपस्तरणाभिघारणे ॥

इमामपि युक्तिं पूर्वपक्षी दूषयति--

**क्रिया वा मुख्यावदानपरिमाणात् सामान्यात्तद्गुणत्वम् ॥ ६ ॥**

वा शब्द एवार्थे। कृष्णलेषूपस्तरणाभिधारणयोः क्रिया स्यादेव, चोदकतः प्राप्तेः। न चोपस्तरणाभिधारणयोश्चतुरवत्तसम्पत्त्यर्थत्वात्, कृष्णलचतुरवदानैरेव चतुरवत्तसम्पत्तेस्तयोरत्राप्रवृत्तिरिति वाच्यम्, मुख्यावदानपरिमाणात्– अवदानेति कर्मणि ल्युट्। "द्विर्हविषोऽवद्यति" इति यदवदीयते हविषः तदेतन्मुख्य-

यागसाधनत्वात्तस्य परिमाणमुपदिष्टम्। प्रकृतौ "अङ्गुष्ठपर्वमात्रं दैवतावदानमवद्यति" इति, तदिह कृष्णलेष्वप्यवदेयस्य प्राप्तम्। तत्रेदमुच्यते– "चत्वारि कृष्णलान्यवद्यति" इति। कृष्णलशब्दश्च गुञ्जापरिमितसुवर्णे वर्तते। ततश्च चतुर्गुञ्जापरिमितसुवर्ण-मवद्यतीत्यर्थः। अत्र च शतकृष्णलचरोर्हविषो यदवदीयते तस्यावदेयस्य चतुर्गुञ्जा-परिमाणमुपदिश्यते। प्राकृतमङ्गुष्ठपर्वमात्रपरिमाणं तेन बाध्यते, न तूपस्तरणाभि-धारणसम्पन्नमवदानचतुष्कमपि[1]। कुतः? सामान्यात्तद्गुणत्वम्—चोदनासामान्यतो लब्धेन चोदकेन तद्गुणत्वमुपस्तरणाभिधारणसम्पन्नावदानचतुष्टयस्यापि[2] कृष्णल-धर्मत्वं निर्बाधम्। उपस्तीर्य कृष्णलचरोश्चतुर्गुञ्जापरिमितसुवर्णं द्विरवदायाभि-धारयतीत्येवमुभयोरपि शास्त्रयोस्समावेशसम्भवे बाधासम्भवात्। एवञ्च विषय-भेदादवदेयकृष्णलगतचतुष्ट्वसङ्ख्ययावदानक्रियागत[3] चतुष्ट्वसङ्ख्यानिवृत्तिर्न सम्भ-वतीति स्यातामेवोपस्तरणाभिधारणे॥

इतोऽप्येवमित्याह—

**तेषाञ्चैकावदानत्वात्॥ ७॥**

"चत्वारि कृष्णलान्येकमवदानम्" इति वाक्यशेषादपि स्पष्टमेव कृष्णलचतुष्ट-यमेकमवदानमिति गम्यते। अतोऽप्युपस्तरणाभिधारणयोरनिवृत्तिः॥

ननूपस्तरणाभिधारणयोस्सत्त्वे कृष्णलचतुरवदानेन तदवाप्तिवचनं नाव-कल्पते, तत्राह—

**आप्तिस्सङ्ख्यासमत्वात्॥ ८॥**

"चतुरवत्तस्याप्त्यै" इति वचनन्तु चतुष्ट्वसङ्ख्यासाम्यमादाय स्तोतुं प्रवृत्तम्-यदेकस्मिन् कृष्णलचतुष्कावदाने कृते प्राकृतमुपस्तरणाभिधारणसम्पन्नचतुरवत्तत्वं प्राप्यते, तस्मात् कृष्णलचतुष्टयं[4] प्रशस्तमिति। ततश्चाप्तिवचनस्यार्थवादत्वान्न ततोऽप्युपस्तरणाभिधारणयोर्निवृत्तिः॥

---

१. चतुष्ट्वमपि. क. २. चतुष्ट्वस्यापि. क.
३. अवदानगत. क. ४. चतुष्टं. अ.

अथ सिद्धान्ती प्रत्याचष्टे—

**सतोस्त्वाप्तिवचनं व्यर्थम् ॥ ९ ॥**

तुनार्थे। प्राकृतोपस्तारणाभिधारणसम्पन्नचतुरवत्तत्वाप्तिमवलम्ब्य कृष्णलचतुष्टयस्तुतिरित्येन्न सम्भवति, यदुपस्तरणाभिधारणयोस्सतोः—विद्यमानयोः तदवाप्त्या कृष्णलचतुष्टयस्य स्तुतिवचनं व्यर्थम्—निरालम्बनम्। न हि प्राप्तार्थप्रापणात् कश्चिद्गुणोऽस्ति, येन तद्वर्णनात्मिका स्तुतिरुन्मिषेत्। तस्मात् "चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै" इत्यस्यायमर्थः—उपस्तरणाभिधारणसम्पन्नं प्राकृतं चतुरवत्तमवाप्तुं "चत्वारि कृष्णलान्यवद्यति" इति। एकैकं कृष्णलमेकैकस्य प्राकृतावदानस्य स्थाने कुर्यादिति यावत्। ततश्च भिन्नविषयत्वेऽप्यवदेयकृष्णलगतचतुष्ट्वसङ्ख्यया प्राकृतावदानक्रियागतचतुष्ट्वमाप्तिवचनादेव बाध्यते। अतो नात्रोपस्तरणाभिधारणे॥

ननु चत्वारि कृष्णलान्येकमवदानमिति चतुर्णामपि कृष्णलानामेकावदानत्ववचनात् कथमेकैकस्य प्राकृतावदानस्य स्थाने एकैककृष्णलविधिरित्यत आह—

**विकल्पस्त्वेकावदानत्वात् ॥ १० ॥**

अवदानेति कर्मणि ल्युट्। चतुर्णां कृष्णलानामेकावदेयद्रव्यत्ववचनाच्चतुरवत्तसम्पत्यर्थमुपस्तरणाभिधारणे भवतः। आप्तिवचनात्त्वेकैकं कृष्णलमेकैकस्यावदानस्य स्थाने विहितमिति नैते भवतः। ततश्च विरोधाद्विकल्पोऽस्तु॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

**सर्वविकारे त्वभ्यासानर्थक्यं हविषो हीतरस्य स्यादपि वा स्विष्टकृतः स्यादितरस्यान्याय्यत्वात् ॥ ११ ॥**

तुः पक्षव्यावृत्तौ। उपस्तरणाभिधारणे द्व्यदानमिति सर्वाण्यवदानानि चतुरवत्तम्, तस्याप्तिवचनात्। कृष्णलचतुष्ट्वेन विकारे-बाधेऽभ्युपगम्यमाने कृष्णलचतुष्कावदानं सकृदेव स्यात्, तावतैव प्राकृतचतुरवत्तावाप्तेः, न तु द्वितीयवारमपि। न चेष्टापत्तिः; तथा सति—"चत्वारि चत्वारि कृष्णलान्यवद्यति समृध्यै" इति वीप्सानुवादानुपपत्तेः। ननु प्रधानार्थमेकं कृष्णलचतुष्कावदानम्, द्वितीयन्तु

स्विष्टकृदर्थावदानमित्यभिप्राया वीप्सेत्यत आह-हविषो हीतरस्य स्यादपि वा स्विष्टकृतः स्यादिति। अपिवेति न त्वित्यर्थे। हि यतः, हविषस्सकाशात् प्रधानार्थं यदितरद् द्वितीयावदानं तद्विवक्षयैव वीप्सा युज्यते, न त्वप्रधानार्थादितरस्य स्विष्टकृतोऽवदानस्य विवक्षया वीप्सानुवादस्स्यात्। कुतः? अन्याय्यत्वात्—प्रधानस्यैव प्रकरणमिति न्यायेन प्रधानार्थावदानाभिप्रायकत्वस्यैव युक्तत्वात्। [ अतः ] कृष्णलचतुष्टमङ्गुष्ठपर्वमात्रमवदानमित्यस्यैव बाधकम्, न तु प्राकृतोपस्तरणाभिधारणयोरपि। "चतुरवत्तस्याप्त्या" इति तु कृष्णलचतुष्कद्व्यवदानस्यापि चतुरवत्तसम्पादकत्वमुपस्तरणाभिधारणसाहाय्येनेत्यभिप्रायकोऽनुवादः। अतोऽत्रोपस्तरणाभिधारणे कर्तव्ये॥

अथाप्तिवचनं परित्यज्य युक्त्यन्तरेण सिद्धान्ती स्वपक्षं समर्थयते—

**अकर्म वासंसर्गार्थनिवृत्तत्वात्तस्मादाप्तिसमर्थत्वम्॥१२॥**

वाशब्दोऽवधारणे। कृष्णलेषूपस्तरणाभिधारणयोरक्रियैव। कुतः? असंसर्गार्थनिवृत्तत्वात्-पुरोडाशहविषो द्व्यवदानस्य सूक्ष्मावयवानां स्रुचि संश्लेषान्न द्व्यवदानं कृत्स्नशोऽग्नौ पतेत्। ततश्च स्निग्धतासम्पादनमुखेन स्रुच्यसंश्लेषार्थमुपस्तरणम्। अभिघारणन्तु द्व्यवदानावयवानामेकतासम्पादनेनासंश्लेषणार्थम्। कृष्णलानाञ्चातिगुरुत्वलक्षणतया प्रक्षेपसमये स्रुचि संश्लेषो न प्रसज्यते। ततश्चासंसर्गार्थस्यासंश्लेषलक्षणप्रयोजनस्य कृष्णलेषु संसर्गाप्रसक्त्या निवृत्तत्वात्-अभावात्[1] नोपस्तरणाभिधारणे। एवञ्चाप्तिवचनस्यार्थवादत्वं सूपपादमित्याह-तस्मादिति। उपस्तरणाभिघारणयोरविद्यमानत्वात् तदवाप्त्या कृष्णलचतुष्टस्य स्तोतुं शक्यत्वादाप्तिवचनस्य समर्थत्वम्-सङ्गतार्थत्वमिति। संसर्गार्थनिवृत्तत्वादिति वा छेदः। कृष्णलानां स्रुचि संश्लेषणस्योपस्तरणाभिधारणनिवृत्त्यर्थस्याप्रवृत्तेरित्यर्थः[2]।

याज्ञिकास्तु-उपस्तरणाभिघारणयोरदृष्टार्थत्वमेव मन्यन्ते। युक्तञ्चैतत्, असंश्लेषणस्योपस्तरणाभिघारणयोरन्यतरेणैवोपपत्तावन्यतरवैयर्थ्यात्, आज्यलेपस्य स्रुच्यवर्जनीयतया तदासक्तहविस्सूक्ष्मावयवानामपि संश्लेषस्यावर्जनीयत्वाच्च; "अमृताहुतिमेवैनां करोति" इति वाक्यशेषाच्च। अमृतशब्देन हि-अमृततुल्यत्वादि-

---

१. अभावात्. नास्ति. क.  २. इत्यर्थः. नास्ति. क.

मापादकः[१] कश्चिददृष्टविशेष उच्यते। "यदुभयत आज्यं करोति देवेभ्य एवैतज्जुष्टं करोति" इति वाक्यशेषाच्च। ( किञ्च स्रुच्यसंश्लेषार्थत्वे सान्नाय्ये ) दधिपयसोरप्युपस्तरणाभिघारणे न स्याताम्। ततश्च तद्विकारभूतपशौ "यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या" इति चतुरवत्तानुवादोऽनुपपन्नस्स्यात्। सान्नाय्यानुनिष्पादिवाजिनावदाने च 'नाभिघारयति" इति प्रतिषेधोऽनुपपन्नस्स्यात्। अतश्चतुरवत्त[२]त्वसम्पत्तिद्वारा देवतायोग्यामृततुल्यस्वादिमाधयकादृष्टातिशयाधायके एवोपस्तरणाभिघारणे। यद्यपि चतुरवत्तसम्पत्तिः प्रकृतौ न विहिता, "चतुरवत्तं जुहोति" इति हि अवत्तोद्देशेन प्रक्षेपमात्रविधिः, चतुःपदन्तु "उपस्तृणाति, द्विर्हविषोऽवद्यति, अभिघारयति" इति वाक्यलब्धसङ्ख्यानुवादमात्रम्, अन्यथा विशिष्टोद्देशवाक्यभेदात्; गौरवाच्च। अतश्चतुरवत्तस्योद्देश्यत्वेनैवाप्रसिद्धौ विधेयत्वेन सुतरामप्रसिद्धेर्न तत्सम्पत्त्यर्थत्वमुपस्तरणाभिघारणयोरिति; तथापि चतुश्शब्दस्य प्रमादपाठापत्त्योद्देश्यतावच्छेदककोटिप्रविष्टत्वमस्त्येव। उद्देश्यत्वान्यथानुपपत्त्या चतुरवत्तसम्पत्तेरङ्गता च सङ्गच्छते। तस्माच्चतुरवत्तसम्पत्तिद्वारा देवताभक्षणयोग्यत्वाधायकातिशयविशेषार्थे उपस्तरणाभिघारणे। ते च कृष्णलेष्वपि भवत इति ॥

इति द्वितीयं कृष्णलचरावुपस्तरणाभिधारणयोर्बाधाधिकरणम् ॥ २ ॥

३

तस्मिन्नेव कृष्णलचरौ इडादिभक्षा भवन्ति, न वेति संशये, न भवन्तीति पूर्वपक्षयति—

**भक्षाणान्तु प्रीत्यर्थत्वादकर्म स्यात् ॥१३॥**

तुः प्रत्यवस्थाने। यदि कृष्णलेषु द्वारलोपान्नोपस्तरणाभिघारणे तर्हि इडादिभक्षणस्यापि तृप्त्यर्थत्वादननुष्ठानं स्यात्। न हि कृष्णलभक्षणात् तृप्तिस्सम्भवति। यद्यपि "इडां प्राश्नाति" इति द्वितीयाश्रुत्या शेषप्रतिपत्तित्वं भक्षाणां द्वादशे व्यवस्थापयिष्यते, तथापि सामर्थ्यात् प्रयाजशेषन्यायेन()उत्तराणि कर्माणि करिष्यत्सु

---

१. स्वादिमाधायकः. क.

२. सम्पादन. क.

() कपुस्तके ग्रन्थपातः.

ऋत्विक्षु बलाधानमुखेन शेषप्रतिपत्त्यर्थत्वमिति षष्ठस्य चतुर्थपादे स्थितम्-'निर्देशाच्छेषभक्षोऽन्यैः प्रधानवत्' इत्यधिकरणे 'निर्देशस्य गुणार्थत्वात्' इति सूत्रे। अतोऽस्य पूर्वपक्षस्य भवत्युन्मेषः ॥

अत्र सिद्धान्ती शङ्कते—

**स्याद्वा निर्द्धानदर्शनात् ॥१४॥**

वाशब्दश्शङ्कायाम्। स्यात् कृष्णलभक्षणम्। कुतः? निर्द्धानदर्शनात्-"निरिव धयन्तो भक्षयन्ति चुश्चूषाकारं भक्षयन्ति" इति श्रुतम्। इवेतीषदर्थे। धेट्पाने। निर्द्धयन्तः आज्यं निष्कृष्य पिबन्तः कृष्णलानि भक्षयन्ति। इक्षुद्राक्षादिमधुरद्रव्येषु तद्रसानुभवकालीनो यश्शब्दविशेषः तस्य चुश्चुषेत्यनुकरणम्। तथाविधं शब्दं कुर्वन्तो भक्षयन्तीत्यर्थः। अस्मिन्निर्द्धानवाक्ये द्वारलोपान्निवृत्तानां भक्षाणां प्रतिप्रसवविधिदर्शनात् स्यादेव तेषामनुष्ठानम् ॥

अथ पूर्वपक्षी समाधत्ते—

**वचनं त्वाज्यभक्षस्य प्रकृतौ स्यादभागित्वात् ॥१५॥**

तुश्शङ्कानिवृत्तौ। निरिव धयन्त इत्यस्याज्यन्निष्कृष्य पिबन्तः कृष्णलानि भक्षयन्तीति नार्थः, किन्तु प्रकृतौ-प्रकृते घृतश्रिते कृष्णलचरौ कृष्णलेभ्य आज्यन्निष्कृष्य भक्षयन्तीत्याज्यस्यैव भक्षणविधिः, न तु कृष्णलानाम्। कुतः? अभागित्वात्-कृष्णलानां भक्षणानर्हत्वादित्यर्थः। तृप्तिफलकस्य हनुचलनादिव्यापारस्यैव भक्षयत्यर्थत्वादिति भावः। न च तृप्त्यभावेऽपि वचनबलादप्राकृतद्रव्यप्रतिपत्त्यर्थं भक्षणमस्त्विति वाच्यम्। आज्यस्य [1]स्वादुद्रवद्रव्यतया तद्भक्षणे चुश्चूषाकरणस्य नित्यप्राप्ततया चुश्चूषाकारमित्यस्यानुवादत्वसम्भवेन तद्भक्षणमात्रविधौ लाघवात्। कृष्णलविधौ तु [2]तद्भक्षणे नियमेन चुश्चूषाशब्दस्याप्राप्त्या तस्यापि विधेयत्वे गौरवप्रसङ्गात्। तस्मान्न कृष्णलानां भक्षाः ॥

---

१. स्वादुद्रव्यतया. अ, ग. २. तत्. नास्ति. क.

अथ सिद्धान्तयति--

**वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् ॥ १६ ॥**

वा शब्द एवार्थे। "घृते शतकृष्णलं चरुम्" इत्याज्यस्य चरुं प्रति गुणभूतत्वं श्रुतम्। कृष्णलानामेव तु प्राधान्येन प्रदेयता। अतस्तेषामेवात्र भक्षणवचनम्। प्रकृतिप्राप्तभक्षानुवाद[1] इत्यर्थः। न च भक्षणस्य प्राकृतभक्षयितृपुरुषतृप्तिमुखेन शेषप्रतिपत्त्यर्थत्वात्, कथमिह तत्प्राप्तिरिति वाच्यम्। प्रकृतौ हि सति सम्भवे तृप्तिमुखेन द्रव्यप्रतिपत्त्यर्थं भक्षणम्, क्षुदभावे असत्यां तृप्तीच्छयान्तु केवलप्रतिपत्त्यर्थमेव भक्षणमिति शास्त्रार्थः। कृष्णलानां [2]भक्षानुवाद एव तत्र लिङ्गम्। एवञ्च कृष्णलेष्वपि भक्षणं चोदकाद् भवत्येवेति भक्षणं न विधेयम्। कृष्णलानामाज्यसंसृष्टत्वाद् आज्यविषये च निर्द्धानस्य चुश्चूषाकरणस्य च नित्यप्राप्तत्वादनुवाद एवेति च लाघवम्। न च कृष्णलानां नीरसत्वात् किं तद्भक्षणेनेति वाच्यम्, वचनादेवोपपत्तेः। प्रदानवत्। यथा नीरसत्वेऽपि कृष्णलानां देवतायै प्रदानं वचनात् तद्वत्। इयांस्तु विशेषः--कृष्णलानां प्रत्यक्षवचनात् प्रदेयता, भक्षणन्तु चोदकवचनादिति। न च तृप्तिपर्यन्तस्य हनुचलनादिव्यापारस्य भक्षयत्यर्थत्वात् कथमिह चोदकतोऽपि तत्प्राप्तिरिति वाच्यम्। आस्ये प्रक्षिप्तस्य द्रव्यस्य हनुजिह्वादिना चालनमेव हि भक्षयत्यर्थः, न तु तृप्तिपर्यन्तमपि, गौरवात्, प्रमाणाभावाच्च। अन्नशेषं भक्षयन्नपि न तृप्यतीत्यादिदर्शनाच्च। वृथामांससुरादिलेशभक्षणेऽभक्ष्यभक्षणदोषाभावप्रसङ्गाच्च। कृष्णलेषु भक्षणानुवाद एव चात्र लिङ्गम्। अतः कृष्णलेषु तृप्त्यसम्भवेऽपि द्रव्यप्रतिपत्त्यर्थं भक्षणमस्त्येवेति ॥

इति तृतीयं कृष्णलचरौ भक्षकर्तव्यत्वाधिकरणम् ॥ ३ ॥

४

प्रकृतौ तावदिडा-प्राशित्र-चतुर्धाकरण-शंयुवाकोत्तरभक्षाश्चत्वारो भक्षा ब्रह्मणस्सन्ति। ते च भिन्नकालाः। भक्ष्यद्रव्याणाञ्च तत्तद्भक्षकाले ब्रह्मसमीपे नयनमस्तीति स्थितिः। कृष्णलचरौ तु श्रुतम्--"एकधा [3]ब्रह्मण उपहरति" इति ब्रह्मणस्समीपे [4]भक्ष-

१. भक्षणानुवादः अ.
२. भक्षण. अ.
३. ब्रह्मणे परिहरति. क.
४. भक्ष्य. क.

द्रव्याणि एकधा नयतीत्यर्थः। एकधाशब्दश्चैकप्रयत्नसाध्यत्वाख्यसकृत्त्वे एककालत्वाख्यसहत्वे युज्यमानो दृश्यते। यथा—एकधा गाः कालयति न तु पुनः पुनरिति सकृदिति गम्यते। यथा वा एकधा गाः कालयति न तु पृथगिति युगपदिति गम्यते। तत्र यद्येकधाशब्दस्सकृत्त्वे तर्हि अन्यतमस्यैकस्यैवोपहरणं प्राप्नोतीति तस्यैव भक्षणम्। यदि त्वेककालकत्वलक्षणयौगपद्यम्, तर्हि चत्वार्यपि [1]भक्षद्रव्याणि युगपदपह्रियन्ते। तेषान्तु भक्षणं स्वस्वकाले स्यादेवेति फलति। तत्राविशेषात्सकृत्त्वं यौगपद्यं वैकध्यमित्यनियमे च प्राप्ते, सिद्धान्तयति--

**एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहृतत्वात्॥ १७॥**

ल्यब्लोपे पञ्चमी। प्रकृतौ स्थितं यद् विहृतत्वं भिन्नकालकत्वं ब्रह्मभक्षाणां तद् बाधित्वैकधोपहारवाक्ये एकधाशब्देनैककालकत्वलक्षणं सहत्वं विधीयते। सकृत्त्वविधौ प्रकृतिप्राप्त[2]भक्षणान्तरबाधप्रसङ्गात् तदबाधेनैव चोपपत्तेः। भक्षा हि इडामिति [3]द्वितीयाश्रुत्या प्रतिपत्त्यर्थाः प्रकृतौ प्रज्ञाताः। कतिपयभक्षणलोपे तु प्रतिपत्तिलोपात्तत्संस्कारा लुप्येरन्। सहत्वमेवैकध्यमित्याश्रयणे तु भक्ष्यद्रव्याणां युगपदुपहृतानामपि स्वस्वकाले भक्षणसम्भवान्न दोषः। न च तृप्त्यभावात् कृष्णलभक्षणमप्राकृतमेवेति शङ्कनीयम्, तृप्त्यभावेऽपि प्रतिपत्त्यर्थतया प्राकृत[4]भक्षानुवादत्वस्यैव पूर्वाधिकरणे प्रपञ्चितत्वात्। ततश्च ब्रह्मणः प्राकृतभक्ष्यद्रव्याणामुपहरणमेककालकमिति॥

इति चतुर्थं कृष्णलचरौ ब्रह्मभक्षाणां युगपदुपाहरणाधिकरणम्॥ ४॥

५

तत्रैव कृष्णलचरौ श्रुतम्-"सर्वं ब्रह्मणे परिहरति" इति। अग्रेणाहवनीयं परीत्य ब्रह्मणस्समीपे नयतीत्यर्थः। किमिह यो यो ब्रह्मणो भक्षणीयो भागस्तं सर्वं परिहरतीति विवक्षितम्? उत सर्वमेव चरुशेषं ब्रह्मणे परिहरति? इति संशयः।

---

१. भक्ष्य. क.
२. भक्षणबाध. क.
३. इत्यादि. अ.
४. भक्षण. अ.

तत्र पूर्वपक्षयति—

**सर्वत्वञ्च तेषामधिकारात्स्यात् ॥ १८ ॥**

तेषां-ब्रह्मभक्षाणामेवात्र परिहरणे सर्वत्वं विधेयं स्यात् । कुतः ? अधिकारात् ब्रह्मभागोद्देशेनैव तद्विधानात् । ब्रह्मणे भक्ष्यत्वेन चोदितं प्रकृतौ यत् तत्सर्वं परिहरतीति वचनव्यक्तौ हि ब्रह्मसम्बन्धी यावान् भागः तस्य सर्वस्य परिहरणं लभ्यते । ब्रह्मणे परिहरतीति यत् तत्सर्वमिति वचनव्यक्त्याश्रयणेऽपि ब्रह्मभागस्यैव सर्वस्य परिहरणं लभ्यते । एकैकेन च पदेनोद्देश्यप्रतीत्यपर्यवसानान्न विशिष्टोद्देशदोषः । ततश्च परिहृतान् स्वभागान् ब्रह्मा भक्षयति, इतरत्तु चरुशेषमध्वर्युहोत्रादयः प्रकृतिवद् भक्षयन्तीति फलति ॥

अथ सिद्धान्तयति—

**पुरुषापनयो वा तेषामवाच्यत्वात् ॥ १९ ॥**

वा शब्द एवार्थे । सर्वं चरुशेषं ब्रह्मण एव परहरति भक्षणार्थम्, न त्वध्वर्युहोत्रादिभ्य इत्येवं ब्रह्मव्यतिरिक्तपुरुषाणां [1]भक्षापनय एवात्र विधीयते, न तु ब्रह्मभागानामेवात्र परिहरणं भक्षार्थमिति विवक्षितम् । कुतः ? तेषामवाच्यत्वात् ब्रह्मभागानां सर्वेषां भक्षणार्थपरिहरणस्य प्रकृतित एव सिद्धत्वेन पुनस्तद्विधिवैयर्थ्यात् । न चैवं सति पुरुषान्तराणां भक्षणलोपाच्चोदकबाधश्शङ्क्यः, प्रत्यक्षवचनानर्थक्यप्रसङ्गेन चोदकबाधस्याप्यङ्गीकार्यत्वात् । तस्मात्सर्वानेव भक्षान् ब्रह्मणे परिहरति, स एव भक्षयतीति ॥

इति पञ्चमं कृष्णलचरौ सर्वभक्षाणां ब्रह्मणः परिहाराधिकरणम् ॥५॥

६

तदेवं "सर्वं ब्रह्मणे परिहरति, एकधा ब्रह्मण उपहरति" इति वाक्याभ्यामेतदधिगतम्—सर्वान् भक्षान्[2] युगपद् ब्रह्मण उपहरति, स एव भक्षयतीति । तांश्च ब्रह्मा किं युगपदेव भक्षयेत् ? उत प्रकृतिवद्[3] भिन्नकालेषु ? इति संशये, युगपदुप-

---

१. भक्षण. अ. २. भक्षान्सर्वान्. क, ग.

३. प्रकृतिवत्. नास्ति. क.

हरणस्य युगपद् भक्षणार्थत्वाद् युगपदेव भक्षणम्, अन्यथैकधावाक्यस्योपहरणमात्रे यौगपद्यपरत्वे "सर्वं ब्रह्मणे परिहरति" इत्यस्यापि परिहरणमात्रे ब्रह्ममात्रसम्बन्धपरत्वानापत्या पुरुषान्तराणामपि भक्षप्रसङ्गात्। तस्माद्युगपत्परिहृतानां युगपदेव भक्षणमिति प्राप्ते, सिद्धान्तयति—

**पुरुषापनयात् स्वकालत्वम् ॥ २० ॥**

सर्वस्य[1] परिहरणमात्रे विधावदृष्टार्थत्वापत्या भक्षेषु पुरुषान्तरापनयो विधीयत इति युक्तम्। एकधावाक्ये तूपहरणमात्रे यौगपद्यविधावपि नादृष्टार्थता। युगपदुपहृतानां प्रकृतिवत् तत्तत्काले भक्षणसम्भवात्। तस्माद्युगपत् परिहृतानामपि प्रकृतिवन्नानाकालकत्वमेव भक्षणस्य ॥

इति षष्ठं कृष्णलचरौ ब्रह्मणो भक्षाणां स्वस्वकाले भक्षविधानाधिकरणम् ॥ ६ ॥

७

दर्शपूर्णमासयोस्तावत् "आग्नेयं पुरोडाशं चतुर्धा करोति तं यजमानो व्यादिशति इदं ब्रह्मण इदं होतुरिदमध्वर्योरिदमग्नीध" इति। "अग्नीधे प्रथमा यादधाति वेदेन ब्रह्मणे ब्रह्मभागं परिहरति, अन्येन ततो होत्रे अथाध्वर्यवे" इति। तदिदं भक्षणार्थमिति तृतीयचतुर्थान्त्याधिकरणे स्थितम्। तत्रैकस्य पुरोडाशस्याविभक्तस्य चतुर्णामृत्विजां भक्षणसम्बन्धसिद्ध्यै चतुर्धाकरणम्। कृष्णलचरौ तु ब्रह्मव्यतिरिक्तानां[2] भक्षाभावादर्थलोपान्न चतुर्धाकरणम्, नाप्याग्नीध्रादिभ्यो[3] दानम्, व्यादेशोऽपि इदं होतुरिदमध्वर्योरिदमाग्नीध इति न भवत्येव। होत्रादीनां [4]भक्षाभावादिति निर्विवादम्। "इदं ब्रह्मण" इति व्यादेशस्तु भवति न वेति संशये, चोदकतो भवतीति प्राप्ते, सिद्धान्तयति—

**एकार्थत्वादविभागस्स्यात् ॥ २१ ॥**

कृष्णलचरुशेषस्य ब्रह्ममात्रभक्षणार्थत्वाद् अविभागः-इदं ब्रह्मण इति [5]विशिष्य निर्देशो न स्यात्, तन्निर्देशस्य ब्रह्मभागे पुरुषान्तरसम्बन्धव्यावर्तनेनैव

---

१. सर्वत्वस्य. क. २. व्यतिरिक्त. क.
३. अग्नीदादिभ्यः. क. ४. भक्षण. अ. ५. विशिष्ट. क.

भक्षार्थत्वात्। इह च पुरुषान्तराणां भक्षाभावादित्यर्थः ॥

इति सप्तमं कृष्णलचरौ चतुर्धाकरणबाधाधिकरणम् ॥ ७ ॥

८

ज्योतिष्टोमे श्रूयते- "तस्य द्वादशशतन्दक्षिणा" इति, "ऋत्विग्भ्यो दक्षिणां ददाति" इति च। ऋगतौ। ऋतुः प्राप्तव्यं भृतिद्रव्यम्। तस्मिन्निमित्ते यजन्तीति ऋत्विज इति निर्वचनीयम्। किमिदं दक्षिणादानमदृष्टार्थम्? उत ऋत्विगानमनार्थम्? इति संशयः। तत्र पूर्वपक्षयति--

**ऋत्विग्दानं धर्ममात्रं स्याद्ददातिसामर्थ्यात् ॥ २२ ॥**

ऋत्विग्भ्यो दक्षिणादानं धर्ममात्रम्- अदृष्टार्थं स्यात्। कुतः? ददातिसामर्थ्यात्-ददातीति [१]समानपदश्रुतिबलादित्यर्थः। ददातीत्यत्र हि प्रत्ययोपात्त भावनायां समानपदश्रुत्या धात्वर्थस्य कर्मत्वेनान्वयः। यथा पचति पाकं करोति इति। तथा च दानस्यैव कर्तव्यता श्रुत्या गम्यत इत्यदृष्टार्थमेव दानम्। ऋत्विक् पदलभ्यानत्यर्थता तु वाक्याद् गम्यत इति दुर्बला। ददातेरत्रादृष्टार्थदानपरत्व एव सङ्गतार्थकत्वाच्चेत्यप्यर्थः। आनत्यर्थत्वे हि द्वादशादिपरिमाणनियमोऽनुपपन्नः स्यात्। कश्चिदल्पेनानमति कश्चिदधिकेनेत्यानतेरनियतपरिमाणद्रव्यसाध्यत्वात्। किञ्च कर्माननुरूपत्वादपि नानत्यर्थता, अल्पे कर्मणि मित्रविन्दादौ सहस्रदक्षिणादर्शनात्। ऋतपेयाख्ये सोमक्रतौ "सोमचमसो दक्षिणा" इति दर्शनात्, दानमन्त्रादिविधेरानत्यर्थत्वे वैयर्थ्याच्च। [२]तस्मादृत्विग्दक्षिणादानमदृष्टार्थमेव ॥

अथ सिद्धान्तयति—

**परिक्रयार्थं वा कर्मसंयोगाल्लोकवत् ॥ २३ ॥**

वाशब्दोऽवधारणे। स्वकर्तव्ये कर्मण्यन्यस्यानमनं परिक्रयणम्। तदर्थमेव दक्षिणादानम्। कुतः? कर्मसंयोगात्-ऋत्विक्छब्दस्य भृत्यर्थयजननिमित्तकत्वाभिधानादित्यर्थः। ततश्च भृत्यर्थयजननिमित्तकत्वपुरस्कारेण क्रियमाणं दानमानत्यर्थमेवेति युक्तम्। न चोक्तरीत्या समानपदश्रुत्यादृष्टार्थत्वमेवेति वाच्यम्। यदि ह्यत्रान्यतः प्राप्तं दानमुद्दिश्य किञ्चिदन्यद्विधीयेत, तदा "दध्ना जुहोति" इत्यादिवद् धात्वर्थस्य

१. समानश्रुति. क. २. तस्माद्दृत्विग्भ्यः. क.

कर्मत्वं स्यात्। इह तु दानमेव विधीयते। तस्य च विधीयमानस्य करणत्वमेव, न तु कर्मत्वम्। तथा चादृष्टार्थत्वपक्षेऽपि दानेनादृष्टं कुर्यादित्येव[1] विधिर्वाच्यः। तद्वरं समभिव्याहृतर्त्विक्छब्दलभ्यानतेः कर्मत्वमाश्रित्य दानेनानतिं कुर्यादिति विधिस्वीकारः। तदेव दृष्टार्थत्वेऽपि दानस्य नियतपरिमाणादिनैवानतिस्सम्पादनीयेत्येवंरूपपरिमाणमन्त्रकर्मानुरूपद्रव्यनियमस्यादृष्टार्थत्वसम्भवान्न तद्बलेन दानस्यादृष्टार्थत्वम्। लोकवत्। लोके यथा कर्मकरेभ्यो भृतिदानमानत्यर्थं तद्वत्॥

इतोऽप्येवमित्याह—

**दक्षिणायुक्तवचनाच्च ॥ २४ ॥**

"दक्षिणायुक्ता यज्ञं वहन्त्यृत्विजः" इति मन्त्रे ऋत्विजां दक्षिणायुक्तत्वानुवादादपि दक्षिणादानमानत्यर्थम्। दक्षिणाभिरानता दक्षिणायुक्ताः॥

इतोऽप्येवमित्याह—

**न चान्येनानम्येत परिक्रयात् कर्मणः परार्थत्वात् ॥ २५ ॥**

चो भिन्नक्रमः। [2]कर्मणः परार्थत्वादपि दक्षिणादानमानत्यर्थम्। न ह्यानतिमन्तरेण परार्थे कर्मणि परः प्रवर्तते। ननु सामाद्युपायेन त आनम्यन्तामित्यत आह—नान्येनानम्येत परिक्रयादिति। अन्येन सामाद्युपायेनानमयितुमशक्यम्। कुतः? परिक्रयात्--परिक्रयस्य प्रत्यक्षविहितत्वात्। अवघातादिविधिवद् दक्षिणादानविधानविधेरानतिनियमार्थत्वादिति यावत्॥

इतोऽप्येवमित्याह—

**परिक्रीतवचनाच्च ॥ २६ ॥**

"दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयन्ति" इत्यनुवादादपि दक्षिणादानमानत्यर्थम्॥

इतोऽप्येवमित्याह—

**सनिवन्ये च भृतिवचनात् ॥ २७ ॥**

याच्ञालब्धं धनं[3] सनिवन्यम्। तस्मिन् भृतिशब्दश्श्रूयते—"दीक्षितो भृतिं वन्वीत" इति। कर्मकरेभ्य आनत्यर्थं यद्दीयते सा भृतिः। तां वन्वीत याच्ञया सम्पादयेदित्यर्थः॥

---

१. एव, नास्ति, क. २. कर्मणः, नास्ति, क. ३. लभ्यं द्रव्यं, अ.

इतोऽप्येवमित्याह—

**नैष्कर्तृकेण संस्तवाच्च ॥ २८ ॥**

निष्कृत्यः[१] दारुच्छेदः, तदर्थं यो भृतः स नैष्कर्तृकः। तेन तुल्यतया संस्तव ऋत्विजां दृश्यते। "यथा वै दारुहारो नैष्कर्तृक एवं वा एते[२] यज्ञस्य ऋत्विजः" इति। अतोऽप्यानत्यर्थं दक्षिणादानम्। अतस्सत्रे निवर्तते ॥

इत्यष्टमं दक्षिणादानस्यानत्यर्थत्वाधिकरणम् ॥ ८ ॥

९

दर्शपूर्णमासयोस्सन्ति हुतावशिष्टद्रव्यभक्षाः "इडां प्राश्नन्ति" इत्यादयः। सन्ति च सोमे "ऐन्द्रवायवं भक्षयन्ति" इत्यादयः। तेऽपि किमानत्यर्थाः? उत प्रतिपत्त्यर्थाः? इति संशये, पूर्वपक्षयति-

**शेषभक्षाश्च तद्वत् ॥२९॥**

दक्षिणादानवत् हविश्शेषभक्षा अप्यानत्यर्थाः। भक्षणतस्तृप्तेः तृप्त्या चानतेः प्रत्यक्षत्वात्। अतस्सत्रे न कर्तव्या भक्षाः ॥

अथ सिद्धान्तयति-

**संस्कारो वा द्रव्यस्य परार्थत्वात् ॥३०॥**

वाशब्दोऽवधारणे। हविश्शेषभक्षणं प्रतिपत्तिरेव, न त्वानत्यर्थम्। कुतः? परार्थत्वात्-द्रव्यं हि यागार्थमुत्पन्नम्। तस्य च कृतप्रयोजनस्य प्रतिपत्त्यपेक्षायां विधीयमानाः प्रतिपत्त्यर्था एव भवितुमर्हन्ति। एवञ्च "इडां प्राश्नन्ति" "सोमं भक्षयन्ति" इत्यादिद्वितीयाश्रुतिरप्यनुगृहीता भवति ॥

इतोऽप्येवमित्याह-

**शेषे च समत्वात् ॥३१॥**

"आग्नेयोऽष्टाकपालः" इति तद्धितपर्यालोचनया कृत्स्नमेव हविर्देवतायै प्रत्तम्। ततश्च हविश्शेषे ऋत्विजां यजमानस्य च स्वामित्वाभावस्समः। अतो न

१. निष्कृतः अ. २. एतस्य, अ.

तद्भक्षैर्यजमानेन ऋत्विजः परिक्रेतुं शक्यन्ते। यद्यपि भाष्यमते होतव्यांशस्यैव देवतायै त्यक्तत्वादवशिष्टांशे यजमानस्य स्वामित्वसम्भवः, तथापि तन्मते सूत्रमिदमन्यथा योज्यम्। तद्यथा-हविःशेषस्य प्रतिपत्त्यपेक्षस्यादनीयत्वेन योग्यतया भक्षणमेव प्रतिपत्तिरित्यवगतम्। भक्षणे च कर्तृविशेषापेक्षायां "यजमानपञ्चमा इडां प्राश्नन्ति" इत्यादिना तन्नियमविधिः। एवञ्च प्रतिपत्तये भक्षणविधौ नियममात्रस्य विधेयत्वाल्लाघवम्। आनत्यर्थं भक्षणविधौ तु-अन्वाहार्यादिदक्षिणान्तरेणर्त्विजामानतत्वात्तेन सह समुच्चयेन विकल्पेन वा भक्षणविधौ गौरवम्। एवञ्च हविश्शेषे आनतिफलकभक्षणविधीनामन्वाहार्यादिदक्षिणान्तरविधीनाञ्च समत्वात् तुल्यकार्यत्वात् समुच्चयविकल्पप्रसङ्गेन गुरुत्वाच्छेषभक्षाः प्रतिपत्त्यर्था एव[1] न त्वानत्यर्था इति ॥

इतोऽप्येवमित्याह-

**स्वामिनि च दर्शनात्तत्सामान्यादितरेषु तथात्वम् ॥३२॥**

"यजमानपञ्चमा इडां प्राश्नन्ति" इति यजमानस्यापि हविश्शेषभक्षणं दृष्टम्। यजमानश्च[2] स्वीये कर्मणि स्वद्रव्येण परिक्रेतुन्न शक्यत इति द्वितीयाश्रुत्यनुसारेण याजमानं भक्षणं द्रव्यप्रतिपत्त्यर्थमेव न त्वानत्यर्थमिति निर्विवादम्। तत्सामान्याद् भक्षान्तराणामपि प्रतिपत्त्यर्थत्वमेवास्थेयम् ॥

इतोऽप्येवमित्याह—

**तथा चान्यार्थदर्शनम् ॥३३॥**

कुण्डपायिनामयनाख्ये सत्रे श्रुतम्-"अत्सरुकैश्चमसैस्सोमं भक्षयन्ति" इति। त्सरुः दण्डः। [3]अत्र प्रकृतितः प्राप्तं चमसमभक्षमनूद्य अत्सरुकत्वविधिर्दृश्यते। प्रकृतौ ज्योतिष्टोमे यदि सोमभक्ष आनत्यर्थस्स्यात्, तर्हि सत्रेऽस्मिन् ऋत्विजामपि यजमानत्वात् स्वयमेवानतत्वात् सोमभक्षस्यैवाप्राप्तेस्तदनुवादो नावकल्पेत। अतोऽपि शेषभक्षा नानत्यर्थाः ॥

इति नवमं शेषभक्षाणां प्रतिपत्त्यर्थत्वाधिकरणम् ॥ ९ ॥

---

१. नानत्यर्थाः. क २. स्वकीये. क.
३. अत्र च. अ.

१०

ज्योतिष्टोमे श्रुतम्-"ऋत्विजो वृणीते" इति। तदिदं सत्रे भवति न वेति संशयः। चोदकतस्स्यात्। न च प्रकृतौ वरणस्यानमनार्थत्वात् सत्रे च स्वकर्मसु सर्वेषामानतत्वाद् द्वारलोपान्न कर्तव्यं वरणमिति वाच्यम्। "ऋत्विजो वृणीते" इत्यस्य हि ऋत्विजः स्वकर्मसु वरणेनानमयेदिति नार्थः, अशब्दार्थत्वात्; किन्तु वरणेन ऋत्विजः कुर्यादित्यर्थः। ऋत्विक्त्वाख्यं दृष्टसंस्कारार्थत्वमेव वरणम्। तच्च सत्रेऽपि सम्पाद्यम्, अन्यथा वैगुण्यप्रसङ्गादिति प्राप्ते, सिद्धान्तयति-

**वरणमृत्विजामानमनार्थत्वात् सत्रे न स्यात् स्वकर्मत्वात् ॥३४॥**

ऋतौ-भृतिद्रव्यप्राप्तौ निमित्ते यजन्तीति व्युत्पत्त्या ऋत्विक् शब्दः भृत्यर्थ-परकीययज्ञकर्मकर्तृषु कर्मकरविशेषेषु वर्तते। वरणं नाम प्रार्थनाख्यसत्कारविशेषः। तेन सत्कारेण स्वकर्मसु कर्तॄन् भृतिदानेन सम्पादयेदिति पर्यवस्यति। एवञ्चर्त्विजां वरणस्य भृतौ निमित्ते परकीयकर्मसु प्रवर्तनात्मकनमनार्थत्वात् सत्रे वरणं न स्यात्। कुतः? स्वकर्मत्वात्-सत्रस्य स्वार्थकर्मत्वात्। तत्र च यजमानानां स्वयमेव प्रवृत्तत्वात् ॥

इति दशमं सत्रे ऋत्विग्वरणबाधाधिकरणम् ॥१०॥

११

ज्योतिष्टोमे श्रूयते-'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च हिरण्यं च वासश्च" इत्युपक्रम्य "तस्य द्वादशशतं दक्षिणा" इति। तदिदं दक्षिदानमानत्यर्थमिति स्थितम् 'ऋत्विग्दानं धर्ममात्रं स्यात्' इत्यधिकरणे। तदिदं सत्रे भवति न वेति संशयः। चोदकतः कर्तव्यम्। यद्यप्यानत्यर्थमिति स्थितम्, सत्रस्य चात्मार्थत्वात् तत्र स्वयमेवानताः, तथापि प्रकृतावानत्यर्थत्वेऽपि सत्रेऽदृष्टार्थमेव दक्षिणादानम्, 'न हि तत्र गौर्दीयते न वासो न हिरण्यम्' इति केषाञ्चित्प्रतिषेधात् लिङ्गादिति प्राप्ते, सिद्धान्तयति-

**परिक्रयश्च तादर्थ्यात् ॥३५॥**

वरणवत् परिक्रयोऽपि न कर्तव्यः। भृतिदानेन भृत्यस्य स्वकर्मणि नियोजनं परिक्रयणम्। न ह्येतत्सत्रे सम्भवति। कुतः? तादर्थ्यात्--सत्रे ब्रह्मादीनामपि

यजमानतया तस्य सर्वार्थत्वात्। न हि स्वीये कर्मणि स्वेनैव स्वस्य परिक्रयस्सम्भवति ॥

अत्राशङ्कामुक्तामनुवदति--

**प्रतिषेधश्च कर्मवत् ॥३६॥**

चो हिपर्यायः। यतस्सत्रे गोहिरण्यादिकतिपयदानप्रतिषेधो दृश्यते, अतस्सत्रं कर्मवत्, न तु प्रत्ययः तदितरदक्षिणादानसहितं भवतीति प्रतीमः ॥

अथ परिहरति-

**स्याद्वा प्रासर्पिकस्य धर्ममात्रत्वात् ॥३७॥**

वाशब्दोऽनास्थायाम्। प्रसर्पकेभ्यो यद् गवादिदानं प्रसक्तं सत्रे तस्यैवायं प्रतिषेधः। कुतः? तत्र तत्प्रस[क्तेः] धर्ममात्रत्वात्-प्रसर्पकदानस्यादृष्टार्थत्वात्, आनत्यर्थत्वाभावात्। अतो नायं प्रतिषेधस्सत्रे तदन्यदक्षिणादाने लिङ्गं भवितुमर्हति ॥

तदिदं समाधानं प्रतिक्षिपन् प्रकारान्तरेण समाधत्ते—

**न दक्षिणाशब्दात्तस्मन्नित्यानुवादस्स्यात् ॥ ३८ ॥**

सत्रे गवादिदानप्रतिषेधो न [1]प्रासर्पिकदानविषयः, किन्तु ऋत्विग्दानविषय एव, "अदक्षिणानि सत्राणीत्याहुर्न ह्यत्र गौर्दीयते न वासो न हिरण्यम्" इति दक्षिणात्वेन प्रसक्तानामेव गवादीनां दानप्रतिषेधावगमात् प्रसर्पकदानस्य चादृष्टार्थत्वेन तत्र देयद्रव्यस्य दक्षिणात्वाभावात्। ननु तर्हि ब्रह्मादीनामपि [2]तत्र यजमानत्वाद् दक्षिणादानस्याप्रसक्तत्वाद्व्यर्थ एव स्यादयं प्रतिषेध इत्यत आह—तस्मादिति। तस्मात्सत्रे दक्षिणादानप्रतिषेधस्य न्यायत एव [3]सिद्धत्वान्नित्यानुवाद एवायम्। एवमाशङ्कासमाधानार्थत्वादेव 'ऋत्विग्दानं धर्ममात्रम्' इत्यधिकरणेनापुनरुक्तिः ॥

इत्येकादशं सत्रे परिक्रयाननुष्ठानाधिकरणम् ॥ ११ ॥

---

१. प्रसर्पक. क. २. तत्सभानत्वात्. दक्षिणादानस्य. क.
३. सिद्धत्वात्, किन्त्वनुवाद एव. क.

१२

"सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्" इति श्रुतम्। तत्र किं सहस्रदक्षिणादानमदृष्टार्थम्? उत परिक्रयार्थम्? इति संशये, पूर्वपक्षयति—

**उदवसनीयस्सत्रधर्मा स्यात्तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ ३९ ॥**

सत्रादुदवासायेति विहितः पृष्ठशासनीयः सत्रधर्मा—सत्रे ऋत्विक्कार्याण्यपि यजमानैः कर्तव्यानीति विहितधर्मकस्स्यात्। 'धर्मादनिच् केवलात्' इत्यनिच्। कुतस्सत्रधर्मकता? तदङ्गत्वात्—फलवतस्सत्रस्य सन्निधौ श्रुतस्य पृष्ठशमनीयस्य सत्राङ्गत्वात्। साङ्गप्रधानस्यैककर्तृकत्वनियमात्। न च 'षो अन्तकर्मणि' इति धातुः उदव इत्युपसर्गद्वयपूर्वकस्समाप्त्यर्थकः। ततश्च सत्रप्रयोगसमाप्त्यनन्तरं श्रूयमाणस्य कथं तदङ्गत्वमिति वाच्यम्, तदतिरिक्तयथोक्ताङ्गकलापसहितप्रयोगसमाप्तिमात्रेण उदवसायेत्युपपत्तेः, "वाजपेयेनेष्ट्वा बृहस्पतिसवेन" इतिवत्। ततश्च तत्र सत्रे ऋत्विक्कार्याणामपि यजमानकर्तृकत्वात्[1] परिक्रयासम्भवात् कर्मकरेभ्य एव केभ्यश्चिद् दक्षिणादानं धर्ममात्रम्—अदृष्टार्थमेव स्यात् ॥

अथ सिद्धान्तयति—

**न त्वतत्प्रकृतित्वाद्विभक्तचोदितत्वात् ॥ ४० ॥**

तुरवधारणे। नैव पृष्ठशमनीयस्सत्रधर्मा। कुतः? अतत्प्रकृतिकत्वात्—आसते उपेयुरिति सत्रलिङ्गाभावेन तस्य सत्रप्रकृतिकत्वाभावात्। बृहस्पतिसवाद् वैषम्यमाह—विभक्तचोदितत्वादिति। बृहस्पतिसवापेक्षया पृष्ठशमनीयस्य विलक्षणचोदितत्वात्। बृहस्पतिसवस्य हि प्रकरणलब्धाङ्गत्वबलाद् "वाजपेयेनेष्ट्वा" इति बृहस्पतिसवेतराङ्ग-कलापसहितवाजपेयप्रयोगसमाप्तिपरमिति युज्यते। इह तु—आस्यतिस्समाप्त्यर्थकः, उदिति चोत्कर्षे। ततश्च सत्रादुदवसायेत्यनेन [2]यज्ञं निश्शेषं समाप्येति लभ्यते। न हि निश्शेषं समाप्ते सत्रप्रयोगे श्रूयमाणः पृष्ठशमनीयस्सत्राङ्गमिति सम्भवति। ततश्च सत्रोदवसाने निमित्ते नैमित्तिक एवायं पुरुषार्थतया विधीयते। अतस्तदकरणे प्रत्यवायः, तत्करणाच्च तत्परिहारः। उदवसायेति निमित्तश्रुतिबलादेव फलकल्प-

१. कर्मत्वात्. अ. २. सत्रं. क.

नापि न दोषः। ततश्च सत्रं समाप्य प्रकृतिवदृत्विजो वृत्वा पृष्ठशमनीयेन यजेरन्। तेभ्यश्चर्त्विग्भ्यः परिक्रयार्थमेव दक्षिणादानमिति॥

इति द्वादशं पृष्ठशमनीये दक्षिणादानविध्यधिकरणम्॥ १२॥

१३

स पृष्ठशमनीयः किं सर्वैस्सत्रिभिस्संहत्य कर्तव्यः? उतैकैकेन? इति संशये, पूर्वपक्षयति—

**तेषान्तु वचनाद् द्वियज्ञवत् सहप्रयोगस्स्यात्॥ ४१॥**

तुरधिकरणान्तरारम्भे। तेषां—सत्रिणां संहत्यैव पृष्ठशमनीयप्रयोगस्स्यात्। कुतः? वचनात्—यजेरन्निति बहुवचनात्। यद्यप्येकैक उदवसा [य सत्रिभिः?] यजेतेति वचनेन निरपेक्षाणामेवोदवसाने कर्तृत्वात्तत्समानकर्तृकतया पृष्ठशमनीयेऽपि परस्परनिरपेक्षमेव कर्तृत्वमवगतम्, तथापि पृष्ठशमनीययागे सापेक्षा एव कर्तारः, आख्यातोपात्तसङ्ख्याया विवक्षितत्वस्य षष्ठे व्युत्पादनात् पदान्तरनिरपेक्षया यजेरन्निति पदश्रुत्यैव साहित्यस्यावगत्या उदवसायेति पदसमभिव्याहारेण निरपेक्षकर्तृत्वस्य वक्तुमशक्यत्वाच्च। अतस्संहत्यैव पृष्ठशमनीयेन यजेरन् द्वियज्ञवत्। यथा "एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्" इति विहितो यज्ञो द्वाभ्यां संहत्य क्रियते तद्वत्। तस्मात् समाप्ते सत्रे सत्रिणः संहत्य ( पृष्ठशमनीयेन यजेरन्निति स्थितः पूर्वपक्षः, सिद्धान्तो वक्ष्यते।

अन्तरा अधिकरणान्तरं प्रस्तूयते—यथोक्तपूर्वपक्षनीत्या संहत्य) पृष्ठशमनीयः सत्रिभिः क्रियते। तत्र किं त एव सत्रिण ऋत्विक्कार्याणि कुर्युः? उत तैरन्य एवर्त्विजो वरितव्याः? इति संशयः। सत्रादुदवसायेति क्त्वाप्रत्ययोपात्तस्य सत्रभावनायाः त्र्यंशायास्समापनस्य यजेरन्नित्याख्यातोपात्तयजिभावनायाश्च त्र्यंशायास्समानकर्तृत्वावगमात् सत्रिण एव यजमाना ऋत्विक्कर्माण्यपि कुर्युरिति प्राप्ते, सिद्धान्तयति—

**तत्रान्यानृत्विजो वृणीरन्॥ ४२॥**

तत्र—पृष्ठशमनीये संहत्य कुर्वाणास्सत्रिणः अन्यानेव ऋत्विजो वृणीरन् न तु स्वयमेव ऋत्विक्कर्माण्यपि कुर्युः। उदवसायेति क्त्वाप्रत्ययेन पृष्ठशमनीयस्य सत्र-

( ) कपुस्तके ग्रन्थपातः.

समापयितृसमानकर्तृकत्वावगमात् सत्रशब्दस्य च यागविशेषमात्रवाचितया यजमानानामेव तत्समापयितृत्वाद् उदवसायेत्यस्य साङ्गसत्रयागसमाप्तिपरत्वमाश्रित्य तत्समानकर्तृकत्वाश्रयणे "पृष्ठशमनीयेन यजेरन्" इति यजिसमानकर्तृकत्वानुपपत्तेः। ऋत्विक्कर्तृकानामङ्गानां यजिवाच्यत्वाभावात्। (न च तत्रापि यजेरन्निति साङ्गसत्र [वि] धिपरमिति वाच्यम्, यजेरन्नित्यात्मनेपदमहिम्ना फलसाधनभूतयागमात्रस्य धात्वर्थत्वात्।) न च यजेरन्निति प्रत्ययवाच्यत्र्यंशभावनायास्सत्रभावनासमापनस्य समानकर्तृकत्वमादाय प्रत्यय उपपद्यत इति वाच्यम्, 'समानकर्तृकयोः पूर्वकाले' इति सूत्रस्य धात्वधिकारस्थत्वेन धात्वर्थयोरेव समानकर्तृकत्वे क्त्वाप्रत्ययविधेरवगमात्। अन्यथा "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इत्यत्रापि वाजपेयबृहस्पतिसवभावनयोः क्त्वाप्रत्ययेन समानकर्तृकत्वावगमात्, तयोश्च त्र्यंशयोः ऋत्विग्यजमानकर्तृकत्वाद्वाजपेयिका एव ऋत्विजोऽपि बृहस्पतिसवे प्रसज्येरन्, एकवचनञ्च विरुध्येत। अतः पृष्ठशमनीये संहत्य कुर्वाणास्सत्रिणोऽन्यानृत्विजो वृणीरन्। एवञ्च सहस्रदक्षिणेनेत्यर्थवद्भवति, अन्यथाऽदृष्टार्थता स्यात्॥

इति त्रयोदशं पृष्ठशमनीये भिन्नर्त्विग्वरणाधिकरणम्॥ १३॥

१४

अथ पृष्ठशमनीयस्संहत्य सत्रिभिः कर्तव्य इति यः पूर्वपक्षः स्थितः, तत्र सिद्धान्तयति—

**एकैकशस्त्वविप्रतिषेधात् प्रकृतेश्चैकसंयोगात्॥ ४३॥**

तुरवधारणे। एकैकशः—प्रत्येकमेव सत्रिणः पृष्ठशमनीयेन यजेरन्, न तु संहत्यैव। कुतः? अविप्रतिषेधात्—प्रत्येकं कर्तृत्वे विरोधाभावात्। यद्यप्याख्यातोपात्ता सङ्ख्या विवक्षार्हा, तथापि प्रकृतेः प्राप्तत्वात् सा न विवक्षिता। उदवसाने प्रत्येकं प्रत्येकं कर्तृत्वे सत्यपि तस्य वस्तुतो बहुकर्तृकतया तत्समानकर्तृकपृष्ठशमनीयेऽपि बहुकर्तृकत्वस्य प्राप्तत्वात्, ततश्च बहुत्वस्य विधेयत्वाभावेन तद्बलान्न साहित्यावगम इति निरपेक्षमेव प्रत्येकं कर्तृत्वं युक्तमाश्रयितुम्। न चाविहितमपि

( ) कपुस्तके ग्रन्थपातः.

बहुत्वं बहुवचनेन प्रतीयमानतामात्रेणाङ्गं भवतीति तद्बलात् साहित्यावगम इति वाच्यम्, अङ्गत्वस्यालौकिकत्वेन विध्येकगम्यत्वात्। न चाख्यातोपात्तबहुत्वस्याविवक्षिततया तद्बलात्साहित्यानवगमेऽप्युद्वसाने सत्रसमभिव्याहारेण प्रतीयमानस्य बहुत्वस्याविवक्षाकारणाभावेन तद्बलादेव तत्समानकर्तृके पृष्ठशमनीये कर्तृबहुत्वं सिध्यतीति वाच्यम्। उद्वसानस्य निमित्तवदुद्देश्यतया तत्र गम्यमानस्यापि बहुत्वस्याविवक्षितत्वात्, प्रत्युत उद्वसानसमानकर्तृकत्वं प्रत्येकमेव कर्तृत्वेऽनुकूलम्, उद्वसाने प्रत्येकं निरपेक्षकर्तृत्वेन तत्समानकर्तृकत्वस्यापि प्रत्येकं निरपेक्षकर्तृकत्वस्यावश्यम्भावात्। तस्मात् सत्रिणः पृथगेव पृष्ठशमनीयेन यजेरन्। एवञ्च चोदकानुग्रहोऽपि भवतीत्याह—प्रकृतेश्चैकसंयोगादिति। प्रकृतिभूतज्योतिष्टोमस्यैकयजमानकतया विकृतिभूतपृष्ठशमनीयस्यापि तथात्वौचित्यादित्यर्थः॥

इति चतुर्दशं पृष्ठशमनीयस्यैकैककर्तृकत्वाधिकरणम् ॥ १४ ॥

१५

सारस्वतं नाम सत्रं सरस्वत्या विनशन आरभ्य सरस्वत्या दक्षिणे कूले प्लाक्षप्रस्रवणपर्यन्तं क्रियते। तत्रेदं श्रूयते—"प्लाक्षं प्रस्रवणं प्राप्याग्नये कामाय पुरोडाशमष्टाकपालन्निर्वपति तस्यामश्वाञ्च पुरुषीञ्च धेनुके दत्वा कारपचवं प्रति यमुनायामवभृथमभ्यवयन्ति" इति। सरस्वती नदी क्वचिद्विनष्टा कस्माच्चित् पर्वतात् प्लक्षमूलतः प्रवहति। सोऽयं प्लाक्षप्रस्रवणो नाम देशः। तत्रेयमिष्टिः कर्तव्या। तत्राश्वां मानुषीञ्च धेनुके। स्वार्थे कः। धेनू पयस्विन्यौ सद्यः प्रसूते दद्युः। ततः कारपचवदेशे यमुनायामवभृथः कर्तव्य इत्यर्थः। किमस्यामिष्टौ सत्रिणो यजमाना एव ऋत्विजः ? उतान्ये वरीव्याः ? इति संशये, पूर्वपक्षयति—

## कामेष्टौ च दानशब्दात् ॥ ४४ ॥

पृष्ठशमनीय इव कामगुणकाग्निदेवताकायामिष्टावपि अन्य एवर्त्विजो [1]वरीतव्याः, न तु सत्रिण एवर्त्विजो भवेयुः। कुतः ? दानशब्दात्—अश्वपुरुषीदानश्रवणात्। सत्रिणां यजमानानामेवर्त्विक्त्वे तद्विरोधात्। न च निश्शेषसत्रसमाप्तौ विहितस्य पृष्ठशमनीयस्यानुपदोक्तरीत्या सत्रानङ्गतया तत्र "ये यजमानास्त

१. वरितव्या इति. अ.

ऋत्विजः" इति प्रकृतिभूतद्वादशाहधर्मस्यानतिदेशादन्यर्त्विक्तया दक्षिणाशब्देन च तत्र दानस्य परिक्रयार्थत्वेऽपि कामेष्टेस्सारस्वतसत्रमध्यपतितत्वादङ्गतया तत्र सत्रिणामेवर्त्विक्त्वेन दक्षिणाशब्दाभावेन च तत्र दानं कस्मैचिदन्यस्मा अदृष्टार्थमेवेत्युचितमिति वाच्यम्। कामेष्टेरस्या द्वादशाहसत्रे प्रकृतावभावेनाप्राकृतकार्यकतया सत्रधर्मस्य "ये यजमानास्त ऋत्विजः" इत्यस्य तत्राप्रवृत्तेः। अतिदेशस्य प्राकृतकार्यमुखेनैव प्रवृत्तेः। अन्यथा यूपावटास्तरणबर्हिष्यपि प्राकृतलवनादिधर्मातिदेशापत्तेः। एवञ्च कामेष्टौ सात्रिकधर्माणामप्रवृत्तौ दार्शपूर्णमासिका एव धर्माः प्रवर्तन्ते। दर्शपूर्णमासयोश्च यजमानादन्य एव ऋत्विज इति तद्विकृतौ कामेष्टावपि तथैव भाव्यमिति दक्षिणाशब्दाभावेऽपि कर्मकरेभ्यो दानं परिक्रयार्थमेव पर्यवस्यति ॥

अथ सिद्धान्तयति—

## वचनं वा सत्रित्वात् ॥ ४५ ॥

वा शब्दोऽवधारणे। यस्मै कस्मैचिददृष्टार्थमेव वेदे दानवचनम्, न तु परिक्रयार्थम्। कुतः? सत्रित्वात्—सत्राङ्गत्वात्। पृष्ठशमनीयस्य निश्शेषं सत्रसमाप्तौ विहितस्य सत्रानङ्गत्वेऽपि कामेष्टेस्सारस्वतसत्राङ्गत्वात्, सारस्वतसत्रे च प्रकृतिभूतद्वादशाहतः "ये यजमानास्त ऋत्विजः" इत्यस्य प्रवृत्त्या कामेष्टावपि सत्रिणामेव यजमानानामृत्विक्त्वात् साङ्गप्रधानस्य समानकर्तृकत्वनियमात्। न च कामेष्टेरप्राकृतकार्यत्वात् कथं तत्र सत्रधर्मस्य यजमानर्त्विक्त्वस्य प्राप्तिः? अन्यथा यूपावटास्तरणबर्हिष्यपि प्राकृतलवनादिधर्मापत्तेरिति वाच्यम्। लवनादयो हि धर्मा बर्हिषः प्रातिस्विकाङ्गम्, "बर्हिर्लुनाति" "सम्भरति" 'सन्नह्यति" इत्यादिना विशिष्य बर्हिःशब्देनोद्दिश्य तद्विधानात्। अतः प्राकृतहविरासादनार्थस्तरण[1]बर्हिःकार्यापन्नेषु शरमयादिष्वेव तत्प्रवृत्तिः, न त्वप्राकृतकार्यके यूपावटबर्हिषीति युक्तम्। कर्ता तु न प्रातिस्विकपदार्थाङ्गम्, किन्तु प्रयोगाङ्गत्वात् सर्वपदार्थसाधारणः। स च विकृतावपि प्रयोगद्वारैव प्राप्नोति। प्रयोगश्च प्राकृतमप्राकृतञ्च सर्वमेव वैकृतमङ्गं व्याप्नोतीत्यप्राकृतकार्यायामपि कामेष्टौ "ये यजमानास्त ऋत्विजः" इति प्रवर्तत एव। न च प्रयोगद्वारापि प्राकृतकार्यकेष्वेवाङ्गेषु[2] चोदकतस्सत्रधर्मप्रवृत्तिः।

१. आस्तरण. क. २. कार्यकेष्वङ्गेषु. क.

तथा च कामेष्टावन्य एवर्त्विज इति युक्तमिति वाच्यम्। सारस्वतसत्रप्रयोगो हि स्वस्मिन् यदपूर्वमप्यङ्गं कामेष्टौ[1] निपतति तत्तैरेव सत्रिभिः प्रसङ्गसिद्धत्वान्न कर्त्रन्तरमपेक्षते। अतो नैष्ठिकचोदकप्रवृत्तिरिति सत्रिण एव कामेष्टावृत्विजः। दक्षिणाशब्दाभावादकर्मकराय कस्मैचिदिदं दानं न तु परिक्रियार्थमिति ॥

इति पञ्चदशं कामेष्ट्यधिकरणम् ॥ १५ ॥

१६

दर्शपूर्णमासयोः श्रूयते–"यदि पत्नीस्संयाजयन् कपालमभिजुहुयाद्वैश्वानरं द्वादशकपालन्निर्वपेत्तस्यैकहायनी गौर्दक्षिणा तां द्वेष्याय दद्यात्" इति। गार्हपत्ये पुरोडाशश्रपणार्थमुपहितेषु कपालेषु पत्नीसंयाजाहुतिद्रव्यं यदि स्कन्दतीत्यर्थः। अस्याश्चेष्टेर्दर्शपूर्णमासप्रयोगमध्यपातित्वाद्, दार्शपूर्णमासिका एव प्रसङ्गादुपकुर्वन्तीति स्थितिः। तत्र किमिदं दानमृत्विजां मध्ये द्वेष्यायैकस्मै परिक्रियार्थम्? उतानृत्विजे कस्मैचिद् दृष्टार्थम्? इति संशयः। पूर्वत्र कामेष्टौ दक्षिणाशब्दाभावाद् दानस्याकर्मकरविषयेऽदृष्टार्थत्वेऽपि इह दक्षिणाशब्दात् परिक्रयार्थत्वमेव न्याय्यम्। दक्षिणाशब्दस्य दक्षयति परकीयकर्मण्यानमयतीति व्युत्पत्त्या रूढ्या वा परिक्रयार्थद्रव्य एव प्रसिद्धत्वात्। यद्यपि दार्शपूर्णमासिकान्वहार्यदक्षिणयैव प्रसङ्गादृत्विज आनता भवन्ति, तथापि वाचनिकमिदं दक्षिणादानमित्यदोषः। तस्मादृत्विजां मध्ये कस्मैचिद् द्वेष्याय दानमिदं परिक्रियार्थमेवेति प्राप्ते, सिद्धान्तयति—

## द्वेष्ये वाचोदनाद्दक्षिणापनयस्स्यात् ॥ ४६ ॥

उक्तकामेष्टाविव प्रकृतवैश्वानरेष्टावपि द्वेष्ये—अनृत्विजि दानं प्रत्येतव्यम्। सम्प्रदानस्याधिकरणत्वविवक्षया सप्त [मी], न तु ऋत्विजे। कुतः? अचोदनात्–द्वेष्याय ऋत्विजे देयमित्यस्यार्थस्य विध्यसम्भवात्। न हि कश्चिदृत्विग् यजमानस्य द्वेष्यो भवति, "ऋत्विगाचार्यौ नातिचरितव्यौ" इति स्मरणात्। नन्वकर्मकराय दाने दक्षिणाशब्दविरोध इत्यत आह–दक्षिणापनयस्स्यात्—दक्षिणाशब्दस्य

---

१. कामेष्टि. क.

मुख्यार्थादपनयस्स्यादित्यर्थः। दक्षिणाशब्दोऽत्रागत्या देयद्रव्यमात्रे न तु वेतनद्रव्य इति यावत्। तस्मादनृत्विजे कस्मैचिदेवात्राद्दष्टार्थं दानमिति ॥

इति षोडशं वैश्वानरेष्टौ दक्षिणादानस्यादृष्टार्थत्वाधिकरणम् ॥ १६ ॥

१७

सत्रं [प्रकृत्य] श्रूयते–"यदि सत्राय सन्दीक्षितानां प्रमीयेत तं दग्ध्वा कृष्णाजिनेऽस्थीन्युपनह्य योऽस्य नेदिष्ठस्तं दीक्षयित्वा तेन सह यजेरन्, ततस्संवत्सरेऽस्थीनि याजयेयुः" इति। सत्राय--सत्रं कर्तुं सन्दीक्षितानां मध्ये यदि कश्चिद्दीक्षितः प्रमीयेत म्रियेत, तदा तं मृतं दग्ध्वा तदस्थीनि कृष्णाजिने उपनह्य–बध्वा यस्तस्य मृतस्य नेदिष्ठः--सन्निहितः भ्रात्रादिः तं तस्य स्थाने दीक्षयित्वा तेन सह सत्रं प्रक्रान्तं समाप्नुयुः। ततस्संवत्सरेऽतीते, अस्थीनि याजयेयुरित्यर्थः। अत्र च णिचि[1] प्रकृत्यर्थस्य यागस्यानिर्दिष्टद्रव्यदेवताकतया अव्यक्तत्वसामान्याद् 'अव्यक्तासु तु सोमस्य' इति सोमविध्यन्तो भवति। ततश्चाग्निष्टोमेन याजयेयुरिति फलितम्। "अग्निष्टोमेन याजयेयुः" इत्येव क्वचिच्छाखायां श्रुतम्। किमयमस्थियज्ञः अस्थिकर्तृकः? उत यो मृतस्तद्व्यतिरिक्तजीवत्सत्रिसर्वयजमानकर्तृकः? इति संशयः। णिजन्तात् परस्मैपदश्रुत्या परार्थे प्रयोजकत्वमवगतम्। ततश्चास्थीनि यजन्ते, तानि याजयेयुः ऋत्विज इति प्रतीयमानोऽर्थः। अस्थिकर्तृके च सति [यज्ञे] ऋत्विजां याजयितृत्वं प्राप्तमेवानूद्यते। अस्थीनि यजेरन्नित्येव विवक्षितम्। अस्थ्नां कर्तृत्वासम्भवे ऋत्विज एवानुमत्या तत्कर्माणि कुर्वन्ति सर्वस्वारवत् ॥

अथ सिद्धान्तयति---

**अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नाम् ॥ ४७ ॥**

"अस्थीनि याजयेयुः" इत्यस्थिशब्दसंयुक्तो यज्ञः मृतादितरेषां जीवतां सत्रिणां स्यात्, न त्वस्थिकर्तृकः, अविप्रतिषेधात्–जीवतामेव कर्तृत्वसम्भवात्। अस्थ्नामचेतनानां विप्रतिषेधात्--[2]कर्तृत्वस्यासम्भवात्। न हि देवतोद्देश्यकद्रव्यत्यागात्मकमानसव्यापारोऽस्थ्नां भवति। न च सर्वस्वारवद् अनुमत्या तत्सम्भव

---

१. प्रकृत्यर्थयागस्य, ग. २. कर्तृत्वासम्भवात्, ग.

इति वाच्यम्। तत्र "आर्भवे पवमाने समापयत मे यज्ञम्" इति ऋत्विजस्सम्प्रेष्य मृतस्यार्भवपवमानपर्यन्तं साक्षात्कर्तृत्वात्, तदूर्ध्वन्तु सम्प्रैषमुखेन प्रयोजककर्तृत्वसम्भवात्। कारयन्नपि हि करोत्येव। यथाषड्भिर्हलैः कृषतीति कर्षयन्नपि कृषतीति व्यपदिश्यते। न हि षड्भिर्हलैः कर्षणं साक्षादेव शक्नोति कर्तुम्। न च प्रकृते मरणात्प्रागेवंविधं सम्प्रैषवचनमपि। ततश्चाननुज्ञाप्याचरणसम्भवान्न प्रयोजककर्तृत्वस्यापि सम्भवः। न चास्थिशब्दस्यैव श्रवणात् कथं जीवतां कर्तृत्वावगम इति वाच्यम्। अस्थिशब्दस्याऽस्थिमत्साहचर्योपलक्षिततदितरजीवत्सत्रिपरत्वात्। न च ण्यन्तपरस्मैपदबलात् परार्थकर्मणि कर्तृत्वम्, न तु स्वार्थकर्मणीति वाच्यम्। "अतिरात्रेण प्रजाकामं याजयेत्" इतिवण्णिच्परस्मैपदयोरविवक्षितार्थत्वात्। एवञ्च सत्रमध्ये कस्यचिद्दीक्षितस्य मरणे सतीतरे सत्रिणो जीवन्तस्संवत्सरेऽतीतेऽग्निष्टोमेन यजेरन्निति फलितम्॥

नन्वत्रास्थ्नां कर्तृत्वाभावे "स्तोत्रेऽस्थिकुम्भमुपनिदधाति" इति क्वचिद्याजमानकर्मणि तन्निधापनविधानाल्लिङ्गादस्थ्नां सन्निधानमात्रेण सर्वेषु याजमानकर्मसु कर्तृत्वमित्यत आह—

**यावदुक्तमुपयोगस्स्यात् ॥४८॥**

यावति कर्मण्यस्थ्नां सन्निधापनमुक्तं तावत्येव तेषां विनियोगस्स्यात्, न सर्वत्र याजमाने कर्मणि, उक्तरीत्यासम्भवात्। तस्मान्नात्रास्थ्नामधिकारः, किन्त्ववशिष्टानामेव सत्रिणां जीवतामिति॥

इति सप्तदशमस्थियज्ञाधिकरणम् ॥१७॥

१८

पूर्वाधिकरणेऽस्थियज्ञस्य जीवदधिकारिकत्वे चोदकप्राप्तं न किञ्चिदपि बाधनीयम्। अस्थ्यधिकारपक्षे तु चोदकप्राप्तं किञ्चिन्निवर्तेत इत्याह—

**यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टि तदर्थत्वात् ॥४९॥**

इदन्न कर्तव्यमिति विवेचनायाः प्रसक्तिमात्रसम्पादनपरत्वात् पूर्वपक्षे नातीवाभिनिवेष्टव्यम्। तुरप्यर्थे। यदि "अस्थीनि याजयेयुः" इति वचनादस्थ्ना-

---

१. च. क.

मधिकारः, तदापि सेष्टि-दीक्षणीयेष्टिसहितं जपसंस्कारम्, समाहारद्वन्द्वः। 'अपः पीत्वा जपति' इत्यादयो जपाः, "केशश्मश्रु वपते" इत्यादयः फलिसंस्काराश्च 'जपसंस्कारम् अर्थलुप्तम्-अर्थान्निवृत्तं वेदितव्यम्। न ह्यपः पीत्वेत्यस्थिषूपपद्यते, वपनादिफलिसंस्कारास्तु केशाद्यभावादूरापास्ताः। दीक्षणीयेष्टिस्तु दीक्षार्था। दीक्षा च "नानृतं वदेत्" इत्यादिनियमसङ्कल्पात्मिका। न च मानसस्सङ्कल्पस्सम्भवति। तस्मादस्थियज्ञेऽस्थ्यधिकारपक्षे एवञ्जातीयकं लुप्यते॥

इत्यष्टादशमस्थियज्ञे जपाद्यभावाधिकरणम्॥१८॥

१९

अस्थियज्ञेऽस्थ्यधिकारिकत्वपक्षे "शुक्रग्रहं यजमानोऽन्वारभते आहोमात्" इत्यादि भवति [ न वेति ] संशयः। पूर्ववदसम्भवान्न भवति, अन्वारम्भणादिकर्तृत्वस्य चेतनधर्मत्वात्। कर्तृत्वं हि स्वातन्त्र्यम्। तच्च कारकान्तरप्रयोजकमनपेक्ष्य स्वयमेव प्रवृत्तिलक्षणम्। न चाचेतनानां स्वयम्प्रवृत्तिस्सम्भवति। तस्मादस्थियज्ञे शुक्रान्वारम्भादि न भवतीति प्राप्ते, सिद्धान्तयति—

**क्रत्वर्थन्तु क्रियेत गुणभूतत्वात्॥५०॥**

तुर्वैषम्ये। असम्भवाज्जपादि निवर्तताम्। यत्तु सम्भवत्प्रवृत्तिकं क्रत्वर्थं चैतन्यमनपेक्ष्यापि क्रतुशेषभूतं शुक्रान्वारम्भादि तद् भवत्येव। अन्वारम्भादिकर्तृत्वस्य चेतनधर्मत्वे प्रमाणाभावात्। न हि कारकान्तरमप्रयोजकमनपेक्ष्य स्वयम्प्रवृत्तिलक्षणं स्वातन्त्र्यमिति युज्यते, 'रथो गच्छति' 'काष्ठानि ज्वलन्ति' इत्यादौ तदभावात्। किन्तु यस्य व्यापारः कर्त्राख्यातेनोपादीयते, स कर्ता। नन्वाख्यातेन सकलकारकानुयायिव्यापारोपादानात् कर्मादिकारकाणामपि कर्तृत्वप्रसङ्ग इत्यत आह-गुणभूतत्वादिति। यस्य व्यापारः कर्त्राख्यातेन प्राधान्येनोपादीयते, स कर्ता। एवञ्चाख्यातेन सकलकारकानुयायिव्यापारोपादानेऽपि कारकान्तरव्यापारस्य राजसन्निधानेऽमात्यानामिव गुणभूतत्वात्-न्यग्भूतत्वान्नातिव्याप्तिः। तस्मात् "शुक्रं यजमानोऽन्वारभते" इत्येवञ्जातीयकमस्थियज्ञे प्रवर्तते॥

इत्यष्टादशमस्थियज्ञे शुक्रान्वारम्भाद्यनुष्ठानाधिकरणम्॥१८॥

---

१. जपसंस्कारं. नास्ति. क.

१९

ज्योतिष्टोमे श्रुतम्-"नीचैस्सदो मिनुयाद् वृष्टिकामस्य" इति। एवञ्जातीयका गुणकामा अस्थियज्ञस्यास्थ्यधिकारित्वपक्षेऽपि चोदकतः प्राप्ता [अनुष्ठेया इति प्राप्ते,] सिद्धान्तयति—

**काम्यानि तु न विद्यन्ते कामाज्ञानाद्यथेतरस्यानुच्यमानानि ॥५१॥**

काम्यानि-गुणकामाः अस्थियज्ञे न विद्यन्ते। कुतः? कामाज्ञानात्। वृष्ट्यादिकामना हि यजमानगता। सा हि यजमानैकप्रत्यक्षा। यजमानेनोक्तैवाध्वर्युणा ज्ञातुं शक्यते। न चैवमस्थिषु सम्भवति। यथा इतरस्य-जीवतोऽपि कामास्तेनानुक्ता नान्येन ज्ञेयाः, तद्वत्। यद्यपि गुणकामानां विकृतावप्रवृत्तेरुक्तत्वादयं विचार एवानुपपन्नः, तथापि "अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण" इति पुनरुक्थ्यादिग्रहणं 'श्येनचितं चिन्वीत सुवर्गकामः" इत्याद्यग्न्याश्रितगुणकामानां विकृतौ प्राप्त्यर्थमिति वक्ष्यते, तद्विषयोऽयं विचारः ॥

इत्येकोनविंशमस्थियज्ञे गुणकामाद्यभावाधिकरणम् ॥ १९ ॥

२०

दर्शपूर्णमासयोर्हौत्रे सूक्तवाकनिगदे सन्त्यायुरादिफलपदानि "आयुराशास्तेऽयं यजमानोऽसावायुराशास्ते सुप्रजास्त्वमाशास्ते" इत्यादीनि। तानि किमस्थियज्ञेऽस्थ्यधिकारिके सति दीक्षणीयादौ होत्रा प्रयोज्यानि? न वा? इति संशयः। तत्र सिद्धान्तेनोपक्रमते—

**इहार्थाश्चाभावात् सूक्तवाकवत् ॥ ५२ ॥**

पूर्वसूत्रान्न इत्यनुकर्षणार्थश्चकारः। 'तेन तुल्यं क्रिया चेद्वतिः' इति वत्यधिकारे 'तदर्हम्' इति वतिप्रत्यये सूक्तवाकवदिति रूपम्, सूक्तवाकार्हाः सूक्तवाकनिगदगता इति यावत्। तथाभूता इहार्थाः—ऐहलौकिकफलपराः ये आयुरादिशब्दास्तेऽस्थ्यधिकारिके यज्ञे न भवन्ति। कुतः? अभावात्—अस्थ्नामायुस्सुप्रजास्त्वाद्यसम्भवात् ॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

**स्युर्वार्थवादत्वात् ॥५३ ॥**

वा शब्दः प्रत्यवस्थाने। अस्थ्यधिकारिकेऽप्यस्थियज्ञे सूक्तवाकनिगदे आयुरादिपदानि स्युः—चोदकतो नित्यवत्प्राप्तेः। न चास्थ्नां कथमायुरादिसम्भवः? अर्थवादत्वात्—फलत्वेनाविवक्षितस्वार्थकत्वादित्यर्थः। आयुरादिशब्दा ह्यायुराद्य-

र्थान् आयुष्यादिरूपेणैव वदन्ति, न तु फलत्वेन। अन्यथा दर्शपूर्णमासयोरपि जीवतो यजमानस्य कदाचित् फलेच्छाविरहे सत्यायुरादिपदानां प्रयोगो न स्यात्। तथा च नित्यवदाम्नानं बाध्येत। ततश्च स्वरूपेणायुरादिकीर्तनमदृष्टार्थमित्यभ्युपेयमिति स्यादेवायुरादिकीर्तनमस्थिषु ॥

अथ सिद्धान्ती परिहरति—

**नेच्छाभिधानात्तदभावादितरस्मिन् ॥ ५४ ॥**

नैवम्; कुतः? इच्छाभिधानात्–"यजमानोऽसावायुराशास्ते" इत्येवमायुरादीनामाशास्यत्वं गम्यते। 'ममेदं भूयात्' इतीच्छा आशासनम्। न चैतदचेतनानामस्थ्नां विद्यते, किन्तु इतरस्मिन्—जीवत्येव विद्यते। न च प्रकृतौ सूक्तवाकनिगदस्य नित्यवदाम्नानानुरोधादाशास्त इत्यस्यविवक्षितस्वार्थकमिति वाच्यम्, क्रियां तत्सम्बन्धिनं वा प्रकाशयतो मन्त्रस्य करणत्वात् सूक्तवाकेनेति तृतीया च कृत्स्नस्य करणत्वावगमात्तदन्यथानुपपत्त्या "आयुराशास्ते" इत्यादीनां फलसाधनपरत्वकल्पनायास्सूक्तवाकाधिकरण एव प्रपञ्चितत्वात्। नन्वेवमपि जीवतोऽपि कदाचिदायुरादीच्छाविरहदशायामायुरादिपदानां लोपापत्त्या नित्यवदाम्नानबाधः प्रसज्यत एवेत्यत्राप्येतदेवोत्तरम्–तदभावादितरस्मिन्निति। अस्थ्यपेक्षया इतरस्मिन् जीवति तदभावात्–आयुरादिफलेच्छाविरहस्यासम्भवात्। तादृशस्य च पुरुषस्यैव यस्य ऐहिकामुष्मिकसकलफलविरक्तस्य कर्मानधिकारात्। यथा चैतत्तथा द्वितीयचतुर्थपादादौ [1]यावज्जीवाधिकरणे प्रपञ्चितम्। तस्मादस्थियज्ञेऽस्थ्यधिकारपक्षे आयुराशास्त इत्यादि न विद्यते ॥

इति विशमस्थियज्ञे आयुराशासनाभावाधिकरणम् ॥ २० ॥

२१

सन्ति दर्शपूर्णमासयोर्होतृकामाः–"यं कामयेत बसीयान् स्यादित्युच्चैस्तरां तस्य [2]याज्यया वषट् कुर्यात्" इत्यादयः। ते तावदस्थियज्ञेऽस्थ्यधिकारे सति प्रवर्तन्ते न वेति संशये, पूर्वपक्षयति—

**स्युर्वा होतृकामाः ॥ ५५ ॥**

वा शब्दः प्रत्यवस्थाने। अस्थिकर्तृके यज्ञे सूक्तवाकगतान्यायुराशास्त इत्यादीनि निवर्तन्तां नाम, अस्थ्नामिच्छाभावात्। होतृकामास्तु सम्भवात्प्रवर्तन्ताम् ॥

---

१. यावज्जीविकाधिकरणे. क, ग. २. याज्यायै. क.

अथ सिद्धान्तयति—

न तदाशीष्ट्वात् ॥ ५६ ॥

अस्थिकर्तृके यज्ञे होतृकामा अपि न प्रवर्तन्ते। कुतः? तदाशीष्ट्वात्—तस्य यज्ञफलस्यैव होत्रा आशास्यत्वात्—अयं वसीयान्-वसुमान् स्यादिति यं यजमानं कामयेतेति हि तदर्थः। होतृफलकामनापरत्वे यं कामयेत वसुमान् स्यामिति स्यात्। न च यमात्मानं वसुमान् स्यादिति कामयेत स होता उच्चैस्तरां वषट्कुर्यादित्यर्थः कुतो न स्यादिति वाच्यम्, यजेतेत्यात्मनेपदवत्तासामङ्गप्रधानप्रयोगविधिना साङ्गप्रधानयजमानगतफलपर्यवसायित्वावगमात् "यां वै काञ्च यज्ञे ऋत्विज आशिषमाशास्ते यजमानस्यैव" इति वचनाच्च। अत एव "यदि कामयेताध्वर्युरात्मानं यज्ञयशसेनार्पयेयम्" इति क्वचिदात्मग्रहणं विशिष्य कृतमर्थवत्। एवञ्च वसीयस्त्वादिकं यजमानफलमेव। इच्छाविषयीभूतमेव च फलम्। तथा च यजमानेच्छाविषयस्यैव फलतया यजमानकामनानुसारिहोतृकामनानुवाद एव "अयं कामयेत" इति। ततश्च यो यजमानो वसीयान् स्यादिति कामयेत तस्य होता याज्यापेक्षया उच्चैस्तरां वषट्कुर्यादित्यर्थः पर्यवस्यति। अस्थनाञ्चेच्छाभावान्निवृत्तिरेवञ्जातीयकानाम्॥

इत्येकविंशमस्थियज्ञे होतृकामाभावाधिकरणम्॥ २१ ॥

२२

अस्ति सर्वस्वारो नाम कश्चिदेकाहस्सोमक्रतुः—"सर्वस्वारेण मरणकामो यजेत यः कामयेत अनामयः स्वर्गं लोकमियाम्" इति। तमेतं शुनस्कर्णनस्स्तोम इत्येके शाखिन आहुः। अत्र च मरणकाम इति न फलपरम्, मरणस्यानिष्टत्वात्, अनेकोद्देशे वाक्यभेदाच्च। अतो मरणकाम इत्यस्याङ्गीकृतमरण इत्यर्थ इत्याहुः। तत्र क्रतौ [ क्रियमाणे ] तृतीयसवने "आर्भवपवमाने स्तूयमाने दक्षिणेनौदुम्बरीदेशेनाहतेन वाससा संवृतो दक्षिणाशिरास्संविशन् ब्राह्मणास्समापयत मे यज्ञम् इति सम्प्रेष्य[1] म्रियेत" ति। तत्र मृते यजमाने आर्भवपवमानादूर्ध्वभाविकर्मशेष-

---

१. सम्प्रेष्याग्निं विशति. इति. भा. पाठः.

स्समापनीयो न वेति संशये, पूर्वपक्षयति—

**सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात् ॥५७॥**

दिष्टगतौ–मरणप्राप्तौ आर्भवपवमाने यजमाने मृते सति, सर्वस्वारक्रतोस्समापनं न विद्यते। कुतः? कर्मणो जीवसंयोगात्–जीवत्कर्तृकत्वात्। न हि मृतो देवतोद्देश्यकद्रव्यत्यागात्मकावशिष्टयज्यभ्यासजातं मन्त्रप्रयोगादिकञ्च याजमानं कर्म कर्तुं शक्नोति। "समापयत मे यज्ञम्" इति सम्प्रैषस्तु अदृष्टार्थ एव भविष्यति। न च समापनसम्प्रैषगतविधिप्रत्ययबलादेव तदनुमत्या ऋत्विज एव तत्कर्म कुर्वन्तीति वाच्यम्। प्रैषस्य मन्त्रतया तस्य कर्ममध्ये प्रयोक्तृपुरुषेण तदभिमुखपुरुषान्तरं प्रत्येवार्थप्रत्यायकतया सर्वपुरुषसाधारणविधिप्रत्ययविरोधितया विधायकत्वाभावस्य 'विधिमन्त्रयोरैकार्थ्यम्' इति द्वैतीयीकाधिकरणे व्यवस्थापितत्वात्। किञ्च प्रैषस्थले प्रैषकर्तुः पुरुषस्यैव प्रवर्तकतया प्रैषस्य न विधायकता, प्रैषस्य पुरुषप्रयुक्ततया पौरुषेयत्वेन स्वातन्त्र्याभावात्। तस्मान्नास्ति सर्वस्वारस्य समापनम्॥

अथ सिद्धान्तयति—

**स्याद्वोभयोः प्रत्यक्षशिष्टत्वात् ॥५८॥**

स्यादेव सर्वस्वारस्य समापनम्। कुतः? उभयोः प्रत्यक्षशिष्टत्वात्–यागस्य समापनस्य च प्रत्यक्षविहितत्वात्। "सर्वस्वारेण यजेत" इत्याख्यातं हि पूर्वोत्तरसकलाङ्गोपेतप्रधानस्य प्रयोगं विधत्ते, न केवलप्रधानस्य फले विधिः 'अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन्' इत्यैकादशिकाधिकरणे तथा वक्ष्यमाणत्वात्। तथा च सर्वाङ्गकप्रधानप्रयोगविधौ समापनं प्रत्यक्षविहितमेव। न च मरणश्रुत्यनुरोधान्मरणप्राचीनाङ्गकलापोपेतस्यैव प्रधानस्यायं प्रयोगविधिरिति वाच्यम्, समापयतेति विशिष्य स्वशब्देन समापनस्य प्रत्यक्षविध्यनुसारेणात्राख्यातस्य पूर्वोत्तरसमस्ताङ्गोपेतप्रधानप्रयोगविधित्वस्यैवाश्रयितुमुचितत्वात्। न च सम्प्रैषस्य पुरुषप्रयुक्तमन्त्रत्वान्न विधायकत्वमिति वाच्यम्। न हि पुरुषप्रयुक्तत्वमात्रेण पौरुषेयत्वम्, ब्राह्मणभागस्यापि तथात्वापत्तेः, प्रयोगमध्ये पुरुषप्रयुक्तत्वस्य च मन्त्रत्वनिबन्धनत्वेनाकिञ्चित्करत्वात्। किन्तु स्वतन्त्रपुरुषप्रयुक्तत्वमेव पौरुषेयत्वम्।

एतच्च प्रैषेऽपि नास्त्येव। एवञ्च यत्र प्रैषार्थोऽन्यतः प्राप्तस्तत्र प्रैषस्य न विधायकता। स एव च प्रैषो विधिमन्त्राधिकरणविषयः, यत्र त्वन्यतो न प्राप्तस्तत्र विधायकत्वमिति विधिमन्त्राधिकरण एव निरूपितम्। तस्मात् सर्वस्वारस्य यजमानमरणादूर्ध्वं समापनं विद्यते ॥

इति द्वाविंशं सर्वस्वारसमपनाधिकरणम् ॥२२॥

२३

सर्वस्वारे क्रतौ मृते यजमाने कर्मशेष ऋत्विग्भिस्समापनीय इति स्थितम्। तत्र किं याजमानं कर्म कृत्स्नं प्रवर्तते ? उत किञ्चिन्निवर्तते ? इति संशये, चोदकतः कृत्स्ने यजमानकर्मणि प्राप्ते, सिद्धान्तयति—

**गते कर्मास्थियज्ञवत् ॥५९॥**

गते-मृते यजमाने तदूर्ध्वं याजमानं कर्म अस्थियज्ञवत्-अस्थियज्ञे अस्थ्यधिकारपक्षे उक्तन्यायेन सम्भवत्प्रवृत्तिकं याजमानं कर्म प्रत्येतव्यम्। तत्र हि 'यदि तु वचनात्तेषाम्' इत्यारभ्य 'न तदाशीष्ट्वात्' इत्यन्तैस्सूत्रैः कर्तव्यचिन्ता वृत्ता, तत्र यथासम्भवं प्रत्येतव्यम् ॥

इति त्रयोविंशं सर्वस्वारे सम्भवद्याजमानानुष्ठानाधिकरणम् ॥२३॥

२४

सर्वस्वारे यजमानमरणात्प्राक् "यजमानोऽसावायुराशास्ते" इति प्रयोज्यं न वेति संशये, पूर्वपक्षयति—

**[1]जीवतोऽवचनमायुराशिषस्तदर्थत्वात् ॥६०॥**

सर्वस्वारे आर्भवपवमानपर्यन्तं जीवति यजमाने दीक्षणीयाप्रायणीयादौ "आयुराशास्ते" इत्यायुराशासनस्य अवचनम्-प्रयोगो न भवति। कुतः ? तदर्थत्वात्-यजमानगतायुःप्राप्त्यर्थत्वात्। न हि मरणाभ्युपगमेन प्रवृत्तस्य यजमानस्यायुराशासितव्यम्, विरोधात् ॥

---

१. जीवत्यवचनम्.

अथ सिद्धान्तयति—

**वचनं वा भागित्वादार्भवात्प्राग्यथोक्तात् ॥६१॥**

वाशब्द एवार्थे। सर्वस्वारे मरणाभ्युपगमेन प्रवृत्तस्यापि यजमानस्यायुराशासनं स्यादेव। कुतः? यथोक्तात् प्रागार्भवात्पवमानाद् भागित्वात्–भागः भजनं प्राप्तिः प्रसक्तिः अस्यास्तीति भागी नित्ययोगे मत्वर्थीय इनिः 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः' इति वचनात्। यथोक्तः-आर्भवे क्रियमाणे क्रियेतेति विध्युक्तो य आर्भवकालः तस्मात् प्राक्-तत्पर्यन्तं यजमानायुराशानस्यावश्यकत्वादित्यर्थः। आर्भवकालेऽपि मरणं विहितम्, ततः प्रागेव कदाचिद्दैवान्मानुषाद्वा यजमानस्य मरणे सत्युक्तकाले मरणाभावात् क्रतुवैगुण्यमापद्येत। तन्मा भूदित्येतदर्थं जीवद्दशायामायुराशासितव्यम्॥

इति चतुर्विंशं सर्वस्वारे जीवति यजमाने आयुराशासनानुष्ठाना-

धिकरणम् ॥२४॥

२५

तदेवं वरणमृत्विजामानत्यर्थत्वात् 'सत्रे न स्यात् स्वकर्मत्वात्' 'परिक्रयश्च तादर्थ्यात्' इत्यधिकरणयोस्तावत् सत्रस्य स्वयंकर्तृकत्वात् ऋत्विग्वरणं दक्षिणादानञ्च निवर्तत इति स्थितम्। तत्प्रसक्तानुप्रसक्त्या उदवासनीयस्सत्रधर्मेत्यादिविचारः प्रस्तुतः। अथ प्रकृतम्-अस्ति ज्योतिष्टोमेऽग्नीषोमीयपशुकाले सुत्यायां वादृष्टार्थमृत्विजामृतुयाज्यावरणम्-"इन्द्रं होत्रात् सजूर्दिव आपृथिव्येति होतारं वृणीते" इत्यादिः। अस्ति च दानान्तरम्-"आत्रेयाय हिरण्यं ददाति" इत्यादि। तत् सत्रे भवति न वेति संशये, आनत्यर्थवरणदक्षिणादानयोस्सत्रेऽकर्तव्यत्वेऽप्यदृष्टार्थत्वादृतुयाज्यावरणमात्रेयदानञ्च [न] कर्तव्यमिति प्राप्ते, सिद्धान्तयति—

**क्रिया स्याद्धर्ममात्राणाम् ॥६२॥**

द्वितीयाद्यपादे 'धर्ममात्रे तु कर्म स्यात्' इत्यत्र धर्ममात्रशब्दो ()व्याख्यातः। अदृष्टार्थानामेवञ्जातीयकानां सत्रे[१] क्रिया स्यादेवेत्यर्थः। नन्वदृष्टार्थत्वादेव चोदका-

१. क्रिया. नास्ति. क.

नुग्रहाय कर्तव्यत्वसिद्धेः पूर्वपक्षस्यातिमन्दत्वात् किमर्थमधिकरणमिति चेन्नः; प्रत्युदाहरणप्रदर्शनपरत्वेन पूर्वपक्षमान्द्यस्यादोषत्वात् ॥

इति पञ्चविंशं सत्रे ऋतुयाज्याद्यनुष्ठानाधिकरणम् ॥२५॥

२६

दर्शपूर्णमासयोः श्रुतम्-"अग्निहोत्रहवण्या हवींषि निर्वपति" इति। तदिदमाग्न्याधेयिकपवमानेष्टिषु चोदकतो भवति? न वा? इति संशयः। ययाग्निहोत्रं हुतं साग्निहोत्रहवणी स्रुक्। पवमानेष्ट्यनन्तरमग्निसिद्धावग्निहोत्रप्रवृत्तिः, न तु ततः प्राक्। अतो न पवमानेष्टिवेलायामग्निहोत्रं हुतमस्ति, नतरामग्निहोत्रहवणी स्रुक्। तस्मादग्निहोत्रहवणीसाधनको निर्वापो न पवमानेष्टिषु प्रवृत्तिमर्हति। न च ल्युटप्रत्ययस्य कालविशेषमपुरस्कृत्य विधानाद् भूतस्याग्निहोत्रसम्बन्धस्याभावेऽपि भाविनमग्निहोत्रसम्बन्धमादाय पवमानेष्टिष्वग्निहोत्रहवणीसद्भावः किं न स्यादिति वाच्यम्, पवमानेष्टिषु येन पात्रेण निर्वापः कृतस्तस्याग्निहोत्रारम्भात्पूर्वमेव नाशसम्भवेन भाविनोऽग्निहोत्रसम्बन्धस्यानियततया नियतस्य भूतसम्बन्धस्यैव शास्त्रतात्पर्यविषयत्वात्। यद्यप्याधानाङ्गभूततूष्णीमग्निहोत्रमादाय भूतसम्बन्धोऽपि सम्भवत्येव, तथाप्याधाने तूष्णीमग्निहोत्रस्य पाक्षिकत्वेन तदभावपक्षे पवमानेष्टिष्वग्निहोत्रहवण्यसम्भव एव। एवञ्चाधाने तूष्णीमग्निहोत्राभावे पवमानेष्टिष्वग्निहोत्रहवणीकरणकनिर्वापो न प्रवृत्तिमर्हतीति प्राप्ते, सिद्धान्तयति—

## गुणलोपेऽपि मुख्यस्य ॥६३॥

पूर्वसूत्रात् क्रिया स्यादिति सम्बध्यते। निर्वापे गुणभूताग्निहोत्रहवण्यभावेऽपि मुख्यस्य निर्वापस्य क्रिया स्यात्। प्रकृतौ हि "अग्निहोत्रहवण्या निर्वपति" इत्युपदेशादग्निहोत्रहवणीकरणकनिर्वापः शास्त्रार्थः। विकृतौ त्वतिदेशादेव स शास्त्रार्थ इति वक्तव्यम्। अतिदेशश्चाग्निहोत्रहवण्यंशस्य पवमानेष्टिषु न भवति, असम्भवात्। निर्वापस्यैव केवलस्य सम्भवतीत्यग्निहोत्रहवणीविनिर्मुक्तकेवलनिर्वाप एवात्र शास्त्रार्थ इत्यग्निहोत्रहवण्यभावेऽपि वैगुण्याभावात् केनचित्पात्रेणात्र निर्वापो भवत्येव। याज्ञिकास्तु-भाव्यग्निहोत्रसम्बन्धं पवमानेष्टिकाल एवावधार्य बाधका-

भावे इयमग्निहोत्रहवणी इत्याग्निहोत्रिकहवणीं स्रुचं परिगृह्य तया पवमानेष्टिषु हवींषि निर्वपन्ति। अन्यथा आधानगतहोमादिषु जुह्वादिप्रवृत्तौ का गतिः ॥

इति षड्विंशं पवमानेष्टौ निर्वापानुष्ठानाधिकरणम् ॥२६॥

२७

वाजपेये श्रूयते–"बार्हस्पत्यो नैवारस्सप्तदशशरावः क्षीरे चरुर्भवति" इति। सप्तदश शरावाः परिमाणमस्य सप्तदशशरावः चरुः। प्रकृतौ तु श्रुतम्–"चतुरो मुष्टीन्निर्वपति" इति। मुष्टिशब्देन मुष्टिपरिमिता यागीयहविःप्रकृतिद्रव्यविशेषाः विवक्षिताः। तत्र चतुष्ट्वसङ्ख्या मुष्टिपरिमाणञ्चेत्युभयं नैवारचरौ चोदकतः प्राप्तम्। चतुर्मुष्टिपरिमितनीवारैश्च सप्तदशशरावपरिमितश्चरुस्सम्पादयितुं [न] शक्यते। तत्र किं मुष्टिपरिमाणेन सप्तदशत्वसङ्ख्या बाधितव्या ? किं वा सप्तदशत्वसङ्ख्यया मुष्टिबाधः ? उत सप्तदशत्वसङ्ख्यया चतुष्ट्वसङ्ख्या, शरावपरिमाणेन मुष्टितत्परिमाणमित्युभयमुभयेन बाधितव्यम् ? इति संशयः। तत्र प्रथमपक्षमुपक्षिपति—

## मुष्टिलोपात्तु चतुष्ट्वसङ्ख्यालोपस्तद्गुणत्वात् स्यात् ॥६४॥

तुः प्रत्यवस्थाने। मुष्टिपरिमाणलोपाश्रयणापेक्षया चतुष्ट्वसङ्ख्यालोप एवाश्रयितुमुचितः, न तु चतुष्ट्वसङ्ख्यां परिगृह्य मुष्टिबाधः। कुतः ? तद्गुणत्वात्–चतुष्ट्वसङ्ख्याया मुष्टिगुणत्वात् "चतुरो मुष्टीन्" इति सामानाधिकरण्यात्। 'अङ्गगुणविरोधे च तादर्थ्यात्' इति द्वादशिकन्यायेन गुणविरोधे सति गुणबाधस्यैवाश्रयितुमुचितत्वात्। एवञ्च पूर्वत्र पवमानेष्टिषु निर्वापगुणभूताग्निहोत्रहवण्यभावेऽपि निर्वापवदिहापि चतुष्ट्वसङ्ख्यागुणबाधेऽपि प्रधानभूतमुष्टिपरिमाणस्याबाधोऽस्तु ॥

अथ द्वितीयपक्षं परिगृह्य सिद्धान्तयति—

## न निर्वापशेषत्वात् ॥६५॥

मुष्टिगुणत्वात् सङ्ख्यालोप इति न युज्यते। कुतः ? निर्वापशेषत्वात्। अरुणाधिकरणन्यायेन चतुष्ट्वसङ्ख्या मुष्टिपरिमाणञ्च युगपन्निर्वपणक्रियायामन्वेति। ततो मुष्टिपरिमाणस्य द्रव्ये, चतुष्ट्वसङ्ख्याया मुष्टिपरिमाणे च योग्यतया पार्ष्टिकान्वयः। तत्र चोदकप्राप्तचतुष्ट्वसङ्ख्यापरिग्रहे सति सप्तदशशरावपरिमितचरुद्रव्य-

सम्पादनाशक्त्या अवश्यम्भाविनि सङ्ख्यापरिमाणयोरन्यतरबाधे मुख्यत्वात् [ सङ्ख्या ] नुग्रहः, जघन्यत्वान्मुष्टिलोपः ॥

अथ तृतीयपक्षी प्रत्यवतिष्ठते—

**सङ्ख्या तु चोदनां प्रति सामान्यात्तद्विकारस्संयोगाच्च परं मुष्टेः ॥६६॥**

तुः प्रत्यवस्थाने। चोदनां प्रति "सप्तदशशरावश्चरुर्भवति" इति विधौ सङ्ख्या-सप्तदशत्वात्मिका तद्विकारः-तस्याः प्रकृतिप्राप्तचतुष्ट्वसङ्ख्याया विकारः-विक्रियते बाध्यतेऽनयेति विकारः। करणे घञ् 'घञ् तृजबन्ताः पुंसि' इति पुंस्त्वम्। चतुष्ट्वसङ्ख्याया बाधिकेति यावत्। परम्-अन्यत् शरावपरिमाणं मुष्टेः-मुष्ट्यात्मकपरिमाणस्य विकारः-बाधकम्, न तूक्तरीत्या सङ्ख्यानुगृह्यते, मुष्टिपरिमाणमेवोभाभ्यां सप्तदशत्वसङ्ख्याशरावपरिमाणाभ्यां बाध्यत इति। कुतः? सामान्यात्-सप्तदशत्वसङ्ख्या हि सङ्ख्यात्वसामान्याच्चतुष्ट्वसङ्ख्यामेव बाधितुं शक्नोति, ( न तु मुष्टिपरिमाणम्। शरावपरिमाणमपि परिमाणत्वसामान्यात् मुष्टिपरिमाणमेव बाधितुं शक्नोति ) न तु चतुष्ट्वसङ्ख्याम्। किञ्च संयोगाच्च। सजातीयस्यैव च लोके बाधसंयोगदर्शनादित्यर्थः। लोके हि 'इदं दधि घृतं शाकमिमे शालयः देवदत्तो भोजयितव्यः, देवदत्तवद्यज्ञदत्तस्तैलेन' इत्युक्ते तैलेन तत्सजातीयस्य घृतस्यैव निवृत्तिर्गम्यते न तु दध्यादेरपि। तद्वदिहापि सङ्ख्यया सङ्ख्या बाध्यते, परिमाणेन परिमाणम्। तथा चोभाभ्यामुभयं बाध्यते ॥

अथ सिद्धान्ती निराचष्टे—

**न चोदनाभिसम्बन्धात् प्रकृतौ संस्कारयोगात् ॥६७॥**

नोभयमुभाभ्यां बाधितव्यम्। कुतः? चोदनाभिसम्बन्धात् प्रकृतौ संस्कारयोगात्-"बार्हस्पत्यो नैवारस्सप्तदशशरावः क्षीरे चरुर्भवति" इति द्रव्यदेवतादिविशिष्टयागचोदनात्। तत्र च श्रूयमाणं सङ्ख्या परिमाणञ्च यागेऽङ्गतया सम्बध्यते। प्रकृतौ तु निर्वापविधौ श्रूयमाणं चतुष्ट्वं मुष्टिपरिमाणञ्च यागीयहविःप्रकृतिद्रव्य-

() क पुस्तके ग्रन्थपातः.

संस्कारभूतनिर्वापेण संयुज्यते। अतो भिन्नविषयत्वात् सत्यपि सङ्ख्यात्वेन परिमाणत्वेन च साम्ये बाध्यबाधकभावो न सम्भवति। यदि तु सप्तदशत्वसङ्ख्या-मुष्टिपरिमाणयोः प्राकृतचतुष्ट्वसङ्ख्यामुष्टिपरिमाणस्थानापन्नत्वं श्रूयेत, तदा परमु-भाभ्यामुभयं[1] बाध्येत। न त्वेवमस्ति। समानविषयत्वेन हि तत्स्थानापत्तिरुन्नेया। न च निर्वापस्य यागीयहविःप्रकृतिद्रव्यसंस्कारार्थतया यागविषयकत्वादार्थिकीं तुल्यविषयतामादायावश्यमुभयबाध इति वाच्यम्। चतुर्भिर्मुष्टिभिस्सप्तदशशरावश्च-रुर्न सम्पादयितुं शक्यत इति ह्यर्थात् बाधः। तत्रैकबाधेनोपपत्तौ नोभयबाध आश्रयितुमुचितः। ततश्चावश्यम्भाविन्यन्यतरबाधे जघन्यत्वान्मुष्टिपरिमाणस्यैव बाध आश्रयितुमुचितः। तस्माच्चोदकप्राप्तचतुष्ट्वसङ्ख्या परिग्राह्या, मुष्टिपरिमाणन्तु बाध्यत इति स्थितम्॥

वस्तुतस्तु प्रकृतौ "चतुरो मुष्टीन्निर्वपति निरुप्तेष्वन्वावपति" इति श्रुतम्। यावता अश्वशफमात्रपुरोडाशो भवति तावदन्वावपतीत्यर्थः। तदिदं बार्हस्पत्यचराव-त्रापि चोदकतः प्राप्तम्। एवञ्च चतुर्मुष्टिनिर्वापस्यापि बाधो न भवति, अन्वावापेन सप्तदशसङ्ख्याकशरावपरिमाणकत्वाविरोधात्। अधिकरणप्रवृत्तिस्तु यस्यां शाखाया-मन्वावापो न विहितस्तद्विषया ज्ञेया, शाखान्तरोपसंहारस्यानित्यतायाा उक्तत्वात्॥

इति सप्तविंशं बार्हस्पत्ये चरौ मुष्टिलोपाधिकरणम्॥ २७॥

२८

काम्यपशुकाण्डे समामनन्ति—"द्यावापृथिव्यां धेनुमालभेत, वायव्यं वत्समैन्द्रमृषभम्" इति। धानं गुणमाश्रित्य धेनुशब्दो वर्तते। धेपाने। वत्सेन पीय-मानत्वाद् धेनुः। "गर्भाश्च मे वत्साश्च मे" इत्यनुवाके गोजातेर्दश पूर्ववयां-स्यनुक्रान्तानि। तत्र प्रथमं वय आश्रित्य गवि वत्सशब्दो वर्तते। ऋषभशब्दस्तु नवमं वय आश्रित्य गवि वर्तत इति स्थितिः। प्रकृतौ च श्रुतम्—"अग्नीषोमीयमज-मालभेत" इति। किमिह धेन्वादिशब्दाश्चोदकप्राप्तेऽजे धानादिगुणमाश्रित्य वर्तन्ते? उत गव्येव? इति संशयः। आकृत्यधिकरणन्यायेन धेन्वादिशब्दा धानादिगुणमात्रवाचकाः। गोद्रव्यन्त्वर्थाद् गम्यते। ततश्च प्रकृते चोदकतोऽजद्रव्ये

---

१. उभयमुभाभ्यां. क, ग.

उपस्थिते सत्यर्थापत्तिक्षयान्न गोद्रव्याक्षेपस्योन्मेषः । न च लोके गोत्वपुरस्कारेणैव धानादिगुणमाश्रित्य धेन्वादिशब्दानां प्रचुरप्रयोगदर्शनात् कथमिहाजे तेषां प्रवृत्तिरिति वाच्यम्, "अवी द्वे धेनू ददाति अजर्षभस्याजिनमवस्तृणाति" इत्यादिवल्लक्षणया तदुपपत्तेः । [1]एवञ्चाव्यजादिसम्बन्धबोधकपदस्य प्रत्यक्षसनिन्धौ धेन्वादिपदस्याव्यजादिगतधानादिगुणविशेषपरत्ववदिहापि चोदकादजपदसन्निधाबजगतगुणपरत्वं लक्षणयाश्रयितुमुचितम्, अन्यथा चोदकबाधापत्तेरिति प्राप्ते, सिद्धान्तयति–

**औत्पत्तिके तु द्रव्यतो विकारस्स्यादकार्यत्वात् ॥ ६८ ॥**

औत्पत्तिके-स्वभावतो गोपदं विनापि प्राचुर्येण गोगतधानादिगुणाभिधायके धेन्वादिशब्दे श्रूयमाणे द्रव्यतः–सार्वविभक्तिकस्तसिः । चोदकप्राप्तद्रव्यस्य विकारः–बाधस्स्यात् । कुतः ? अकार्यत्वात्–प्रत्यक्षश्रुतानां धेन्वादिशब्दानां गोमात्रगतधानादिगुणपराणामानुमानिकचोदकानुरोधेनाजे लक्षणाश्रयणस्य कर्तुमनुचितत्वात् । ततश्च धेन्वादिशब्दबलादेवातिदिष्टाजस्य बाधः, गोद्रव्यपर्यन्तत्वाद् गुणापदेशस्य । तुर्वैषम्ये । "अवी धेनू अजर्षभस्याजिनम्" इत्यादावव्यजादिशब्दानां प्रत्यक्षश्रुतत्वाल्लक्षणा न दुष्यतीति वैषम्यम् । तस्मादिह धानादिगुणकानां गवामेवालम्भः ॥

इत्यष्टाविंशं धेन्वादिशब्दानां गोवाचित्वाधिकरणम् ॥ २८ ॥

२९

"वायव्यं श्वेतम्" इत्यादौ श्वेतादिशब्दानां साधारणवचनानामपि धेन्वादिशब्दवन्नात्र गुणपरत्वम्, तथा सति द्रव्यदेवतासम्बन्धाभावे द्रव्यस्यैवालम्भापत्तेः । अतो द्रव्यपर्यन्तत्वावश्यम्भावात् श्वेतादिगुणकद्रव्यस्यैवोपदेशतोऽवगमादतिदिष्टाजद्रव्यनियमबाध इति प्राप्ते, सिद्धान्तयति—

**नैमित्तिके तु कार्यत्वात् प्रकृतेस्स्यात्तदापत्तेः ॥ ६९ ॥**

नैमित्तिके-गुणमात्रनिमित्तके श्वेतादिशब्दे श्रूयमाणे प्रकृतेस्सकाशात् प्राप्तस्याजद्रव्यस्यैव ग्रहणं स्यात् । कुतः ? कार्यत्वात्तदापत्तेः–अजद्रव्य एव श्वेतादिगुणस्य सम्पादयितुं शक्यतया तदापत्तेः–तस्यैवाजद्रव्यस्य श्वेतत्वादिगुणेन

१. एवञ्च. नास्ति. ग.

परिच्छेद्यत्वोपपत्तेः। तुर्वैषम्ये। पूर्वत्र धेन्वादिशब्दस्य गोत्वपुरस्कारेण प्रवृत्तस्य द्रव्यपर्यन्तत्वेऽपि श्वेतादिशब्दस्य द्रव्यविशेषपुरस्कारेण प्रवृत्त्यभावेन साधारणगुणवचनतया प्राकृताजद्रव्यग्रहणेऽप्युपदेशाविरोधात्तत्रैव पर्यवसानमिति न प्राकृतद्रव्यबाध इति। नैमित्तिक इत्यनेन पूर्ववदुत्पत्त्यैव जातिविशे[षाविनाभावो] नास्ति, किन्तु गुणमात्रमत्र निमित्तम्, तच्च चोदकप्राप्ताजग्रहणेऽप्युपपन्नमिति विस्पष्टमेव वैषम्यं दर्शयति ॥

इत्येकोनत्रिंशं वायव्यंश्वेतमित्यत्राजालम्भाधिकरणम् ॥ २९ ॥

३०

साद्यस्के श्रूयते "खलेवाली यूपो भवति" इति। यत्र स्थूणां काञ्चिन्निखाय तत्र बलीवर्दान्नियुज्य परितो भ्रामितैस्तैः पलालेभ्यो धान्यं प्रकाशयन्ति स खलः। सा च स्थूणा खलेवाली, खले बलीवर्दान् वारयतीति व्युत्पत्तेः। कपिलकादित्वाल्लत्वम्। किमिह चोदकप्राप्तखदिरादिवृक्षप्रकृतिकच्छेदनतक्षणादिसम्पादितयूपानुवादेन खलेवालीत्वविधिः—यो यूपस्स खलेवाली कर्तव्य इति। ततश्च प्राकृतवृक्षप्रकृतिकं छेदनतक्षणादिसम्पादितं यूपं खले निखाय बलीवर्दवारणेन संस्कृत्य पुनरुत्खायोत्तरवेदेः पुरस्तात् स्वस्थाने निखनेदिति फलति? उत लोकसिद्धयत्किञ्चिद्वृक्षप्रकृतिकखलेवाल्यनुवादेन यूपकार्यकारित्वविधिः—या खलेवाली सा यूपकार्यकारिणीति। एवञ्च लोकसिद्धखलेवाल्युपादानान्न प्राकृतवृक्षनियमच्छेदनतक्षणादिधर्म इति फलति? इति संशयः। सिद्धायाः खलेवाल्या यूपकार्ये विधौ चोदकप्राप्तवृक्षनियमच्छेदनतक्षणादिधर्मा बाध्येरन्, यूपशब्दस्य यूपकार्यकरत्वे गौणीवृत्तिश्च स्यात्। चोदकप्राप्तयूपानुवादेन खलेवालीत्वविधौ तु यूपशब्दस्य न गौणता, नापि चोदकबाधः। तस्माद्यूपानुवादेन खलेवालीत्वविधिरिति प्राप्ते, सिद्धान्तयति—

**विप्रतिषेधे तद्वचनात् प्राकृतगुणलोपस्स्यात्तेन च कर्म संयोगात् ॥ ७० ॥**

लोकसिद्धायाः खलेवाल्याः तद्वचनात्-यूपकार्यकारित्ववचनात्, विप्रतिषेधे चोदकस्यानुन्मेषे सति प्राकृतवृक्षनियमादिगुणलोपस्स्यात्। नन्वेवमपि यूपशब्दस्य

यूपकार्यकरत्वे गौणीवृत्तिर्दुर्वारेत्यत आह—तेनेत्यादि। यूपकार्ये लोकसिद्धखलेवालीत्वविधौ तेन—खलेवालीद्रव्येण पशुनियोजनात्मकदृष्टकर्मणा संयोगाद् यूपस्य खले वारणात्मकसंस्कारविधौ चादृष्टार्थत्वापातादिति चकारार्थः। सम्भवति दृष्टे लक्षणाश्रयणं न दुष्यतीति भावः। तस्माद्यत्किञ्चिद्वृक्षप्रकृतिका लोकसिद्धा खलेवाली यूपकार्ये ग्राह्या।

तथा चित्रेष्टौ "दधि मधु घृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम्" इति तण्डुलेष्वप्येतदधिकरणं योज्यम्। तत्र चोदकानुग्रहाय व्रीहियो यवा वा अवघातविधिना तण्डुलीकर्तव्या इति प्राप्ते, 'विप्रतिषेध' इत्यादिसूत्रम्। सिद्धानामेव तण्डुलानां तद्वचनात्–हविष्यवचनात्, विप्रतिषेधे चोदकानुन्मेषे सति प्राकृतव्रीहियवनियमादिगुणलोपस्स्यात्। नन्वेवं सति [ चर्वा ] दावपि तन्निवृत्तिस्स्यादित्यत आह—तेन चेति। तेन–श्रपणविधिना व्रीहियवोपादानादिकर्मणस्संयोगात् श्रपणविधेरेव तत्र प्रयोजकत्वादिति यावत्। तथा हि—प्रकृतौ तावद् "यदाग्नेयोऽष्टाकपालः" इति कपालेषु श्रुतस्य पुरोडाशस्य हविष्यवचनादेव श्रपणे सिद्धे "कपालेषु श्रपयति" इति वचनं प्रयोगमध्ये श्रपणेन स्वयं पुरोडाशरूपं हविर्निष्पाद्यम्, न त्वन्यदान्येन श्रपितपुरोडाशकार्यादिना सम्पाद्यमित्येतदर्थम्। तच्च श्रपणं पुरोडाशे निष्पन्ने कर्तुं न शक्यते, श्रपणात्प्राक् पुरोडाशभावस्यैवाभावात्, किन्तु पुरोडाशप्रकृतिद्रव्ये श्रपणं कर्तव्यमिति श्रपणविधिबलादेव प्रकृतिद्रव्योपादाने सिद्धे लाघवात् पिष्टानामेव प्रकृतितयोपादाने प्रसक्ते व्रीहियवशास्त्रं प्रवर्तते–श्रपणविधिबलेन प्रकृतिद्रव्यमुपाददीतेति यत् तत् सतुषावस्थव्रीहियवद्रव्यरूपमिति व्रीहियवशब्दयोस्सतुषावस्थधान्यविशेषवचनत्वात्। अतो नीवारादिद्रव्यान्तराणां पिष्टतण्डुलाद्यवस्थान्तराणाञ्च निवृत्तिः। एवञ्च प्रकृतिद्रव्योपादानस्य श्रपणविधिलभ्यत्वाद् व्रीहियवशास्त्रं श्रपणविधिलब्धे प्रकृतिद्रव्योपादाने सत्येव तन्नियमाय तावन्न व्याप्रियते। ततश्चात्र सतुषावस्थव्रीहियवनियमप्रयोजकस्य श्रपणस्य तण्डुलेष्वभावेन तत्प्रयोज्यस्य सतुषावस्थव्रीहियवनियमस्य निवृत्तिः। प्रकृते तण्डुलानामेव हविष्ट्वेन श्रपणाभावात्। चरुविधौ तु चरुशब्दस्य पक्वौदनविशेषवाचित्वात्तत्प्रकृतिद्रव्यनियम इति वैषम्यम्। अस्तु वा व्रीहियवशास्त्रमेव सतुषावस्थप्रकृतिद्रव्यप्रयोजकम्, तथापि प्रकृतौ हविःप्रकृतिभूततण्डुलानामेव द्वारतया चित्रेष्टौ च

तण्डुलानामेव हविष्ट्वेन हविःप्रकृतित्वाभावेन द्वारलोपाद् व्रीहियवनियमावृत्तिः। तस्माद्यस्य कस्यचिद् धान्यस्य लोकसिद्धस्य तण्डुला अत्र ग्राह्याः ॥

इति त्रिंशं खलेवाल्यधिकरणम् ॥ ३० ॥

३१

लोकसिद्धखलेवालीविधानान्न खादिरादिवृक्षनियम इति स्थितम्। तत्र यूपं छिनत्ति, अष्टाश्रीकरोति, तक्षति, उच्छ्रयति, निखनतीत्यादयो धर्मा भवन्ति न वेति संशये, लोकसिद्धखलेवाल्युपादानेऽपि छेदनतक्षणादीनां कर्तुं शक्यत्वात् चोदकानुग्रहाच्च न निवृत्तिरिति प्राप्ते, सिद्धान्तयति—

**परेषां प्रतिषेधस्स्यात् ॥ ७१ ॥**

प्रकृतिद्रव्यनियमापेक्षयान्येषां छेदनतक्षणादिधर्माणां निवृत्तिस्स्यात्। पूर्वमेव यस्य कस्यचिद्वृक्षस्य छिन्ना यथायोगं श्लक्ष्णीकृता खलेवाली यत्र बलीवर्दवारणायोच्छ्रिता निखाता च तत्रैव प्रदेशे साद्यस्क्रस्य विहितत्वेन तत्र छेदनादिधर्माणां प्रयोजनाभावात् ॥

अष्टाश्रीकरणादिविषये इतोऽप्येवमित्याह—

**विप्रतिषेधाच्च ॥ ७२ ॥**

अष्टाश्रीकरणादौ सत्यत्यन्तविकारापत्त्या खलेवालीत्वव्याघाताच्चेत्यर्थः ॥

इत्येकत्रिंशं खलेवाल्यां तक्षणादिधर्मबाधाधिकरणम् ॥ ३१ ॥

३२

यूपमवटे निखाय "पांसुभिः पर्यूहति" "मैत्रावरुणदण्डेन परिबृंहति" "अद्भिः परिषिञ्चति" "यूपं प्रोक्षति" "यूपमाज्येनानक्ति" इत्यादिधर्माः खलेवाल्यां भवन्ति न वेति संशयः। न भवन्तीति ब्रूमः। संस्कारविधिषु हि यूपमिति द्वितीयाश्रुत्या एतैस्संस्कारैर्यूपमुपकुर्यादित्यर्थः [ प्रतीयते ]। प्रकृते च न यूपोऽस्ति।

यूपत्वं पुरस्कृत्य लोकसिद्धाया एव खलेवाल्या यूपकार्ये पशुनियोजने विधानात्। ततश्च यूपार्थानां पर्यूहणादीनामिह निवृत्तिरिति प्राप्ते, सिद्धान्तयति—

अर्थाभावेऽसंस्कारार्थं स्यात् ॥ ७३ ॥

यो यूपः तं छेदनेनोपकुर्यात् तक्षणेनोपकुर्यादित्येवं न वाक्यार्थसम्भवः, यूपशब्दार्थस्य लोके प्रसिद्धत्वाभावात्। तथाच न यूपार्थत्वं संस्काराणाम्, येनायूपे खलेवाल्यां ते न भवेयुः। किन्तु-आधानेनाहवनीयाद्यग्नीन् कुर्यादितिवत् छेदनादिना यूपं कुर्यादित्यर्थः! ततश्च छेदनतक्षणादिप्रोक्षणाञ्जनादिरूपद्दष्ट [ दृष्ट ] रूपा यूपाख्यास्संस्काराः "यूपे पशुं नियुञ्जीत" इति वाक्येन पशुनियोजने विनियुज्यन्त इति स्थितिः। एवञ्चार्थाभावे-योऽयं यूपः तं छेदनादिनोपकुर्यादिति वाक्यार्थासम्भवे सति छेदनादिकमसंस्कारार्थं स्यात्-यूपसंस्कारार्थं न भवति, किन्तु यूपाख्यैस्संस्कारैः स्थूणाविशेषद्वारा पशुनियोजनमुपकुर्यादित्येवं पशुनियोजनार्थमेव। ततश्च खलेवाल्यां यूपशब्दोपात्तसंस्काराणां मध्ये छेदनादीनामर्थलुप्तानां निवृत्तावपि सम्भवत्प्रयोजनानां पर्यूहणादीनां न निवृत्तिः। यान् पशूनानीय निबध्य तेषु भ्राम्यमाणेषु खलेवाल्याश्चलने प्राप्ते तन्निवृत्तिः पर्यूहणपरिबृंहणादिना क्रियत इत्यादि प्रयोजनमूह्यम्॥

इति द्वात्रिंशं खलेवाल्यां पर्यूहणादीनामनुष्ठानाधिकरणम्॥३२॥

३३

महापितृयज्ञे श्रूयते—"पितृभ्यो बर्हिषद्भ्यो धानाः" इति 'धानाः भ्रष्टयवाः स्त्रियाम्' इति कोशः। तत्र धानास्ववघातो भवति न वेति संशयः। न भवतीति भ्रमः। प्रकृतौ हि व्रीहियवशास्त्रानुरोधादपूर्वीयत्वापन्नधान्यावस्थायामवघात इति स्थितिः। प्रकृते च यागविधौ धानाशब्दश्रवणाद्धानावस्थायामेवापूर्वीयत्वादनुपदमेव खलेवाल्यधिकरणोक्तरीत्या चित्रेष्टिगततण्डुलवत् सिद्धरूपाणामेव धानानामुपादानान्न धा[ना]वस्थायामवघातसम्भवः। धानावस्थायान्त्ववघाते क्रियमाणे प्राकृतः क्रमो बाध्येत। प्रकृतौ पाकात् प्राग् धान्यावस्थायामेवावघातप्रवृत्तेः धानात्वञ्च व्याहन्येत। धानावस्थायामवघाते सति सक्तुभावप्रसङ्गाद् 'भर्जितयवतण्डु-

१. भूर्जित. ग.

ळानामेव धानाशब्दवाच्यत्वात्। तस्मान्न प्रवर्तते धानास्ववघात इति प्राप्ते, सिद्धान्तयति—

अर्थेन च विपर्यासे तादर्थ्यात्तत्त्वमेव स्यात् ॥ ७४ ॥

चो भिन्नक्रमः। अर्थेन-धानावस्थायामवघाते क्रियमाणे धानात्वानुपपत्तिवशेनावघातस्य विपर्यासे सति-प्राकृतक्रमपरित्यागे सति पाकेन धानावस्थायाः प्रागेव प्रवृत्तौ सत्यामपि तत्त्वं-धानात्वम् अव्याहतमेव स्यात्। [ननु]धान्यावस्थायामपूर्वीयत्वाभावात् कथमवघातप्रवृत्तिरित्यत आह—तादर्थ्यादिति। धानानामपूर्वार्थत्वेन तत्प्रकृतिभूतद्रव्यस्यापि तद्द्वारा अपूर्वार्थत्वादित्यर्थः। नन्वेवमपि[1] प्रकृतावपूर्वीयत्वापन्नधान्यावस्थायामवघातः, इह त्वपूर्वीयधानावस्थायाः प्रागेवेति प्राकृतक्रमलोपाद्वैगुण्यमवघातस्येत्यत्राप्येतदेवोत्तरम्-तादर्थ्यादिति। क्रमस्य पदार्थगुणतया तद्बाधेऽपि पदार्थभूतावघातप्रवृत्तेः। 'गुणलोपेऽपि मुख्यस्य क्रिया स्यात्' इति न्यायेन () निर्बाधत्वादित्यर्थः।

तदिदं भाष्यकरीयमधिकरणमनुपपन्नम्, 'गुणलोपेऽपि मुख्यस्य' इति न्यायेन गतार्थत्वात्। किञ्च चित्रेष्टावुत्पत्तिवाक्ये तण्डुलानां श्रपणं न श्रुतमिति सिद्धरूपा एव तण्डुला ग्राह्याः। चरौ तु प्रकृतिद्रव्यनियमतदवघातादिधर्माः प्रवर्तन्ते। चरुशब्दस्य पक्वौदनविशेषवाचितया श्रपणविधिसत्त्वादिति खलेवाल्यधिकरणे वर्णितम्। एवञ्च धानाशब्दस्यापि भर्जितयवतण्डुलवाचितयोत्पत्तिवाक्ये श्रपणावगमाद्यवधान्यमेवोपादायावघातादिना धानाः कर्तव्याः। ततश्च यवधान्यस्यापूर्वीयत्वापन्नस्यैवावघातः, ततः पाक इति प्राकृतक्रमबाधकाभावात् कथं भाष्ये प्राकृतक्रमबाधो वर्णितः ? कथं वा सूत्रे 'अर्थेन विपर्यासे' इत्युपपद्यते ? इत्यादिदूषणमुद्भाव्य विषयान्तरे योजितमिदमधिकरणं वार्तिके। तद्यथा-तत्रैव महापितृयज्ञे श्रूयते— "पितृभ्योऽग्निष्वात्तेभ्यो मन्थम्" इति। तण्डुलपिष्टास्सक्तवः, ते द्रवद्रव्यसम्पृक्ताः मन्थः। तत्र भर्जनरूपपाकादूर्ध्वभाविनि पेषणे[2] प्राकृताः कृष्णाजिनादानादयः[3] पेषणधर्माः प्रवर्तन्ते न वेति संशयः। न प्रवर्तन्त इति ब्रूमः। प्रकृतौ ह्यसति पेषणे

---

१. प्रकृतौ नास्ति. क.

२. ऊर्ध्वभाविपेषणे. ग. ३. कृष्णाजिनादयः. ग.

पिष्टविकारात्मकपुरोडाशनिष्पादकपाकत्वं पेषणे। अतः पेषणधर्मा अपि पाकप्रयुक्ताः। इह तु पेषणात् पूर्वमेव पाकः, भर्जितयवतण्डुलपिष्टसक्तूनां द्रवमिश्रितानां मन्थशब्दार्थत्वात्। ततश्च भर्जनरूपपाकादूर्ध्वभाविनि पेषणे पाकलक्षणप्रयोजनाभावान्न कर्तव्याः प्रकृताः पेषणधर्माः, किन्तु भर्जनादूर्ध्वं सक्तुभावापादनाय लौकिकमेव पेषणमिति प्राप्ते, सिद्धान्तयति—

**अर्थेन च विपर्यासे तादर्थ्यात्तत्त्वमेव स्यात् ॥**

चो भिन्नक्रमः। अर्थेन-सक्तुभावरूपप्रयोजनवशेन पेषणपाकयोः क्रमस्य विपर्यये सत्यपि पाकादूर्ध्वं पेषणाश्रयणेऽपि पेषणस्य तत्त्वमेव-प्राकृतधर्मकत्वमेव स्यात्। कुतः? तादर्थ्यात्-हविरर्थत्वात्। प्रकृतौ हि पुरोडाशीयान् पिनष्टि, हवींषि श्रपयतीति द्वितीयया पेषणपाकयोः हविरर्थकत्वमवगतम्। तत्र च पूर्वं पेषणं पश्चात् पाक इति क्रमः, प्रकृतावार्थिकपाकादूर्ध्वं पुरोडाशस्य पेषणे पुरोडाशस्वरूपव्याघातात्। ततश्चेहाप्यर्थात् क्रमो निवेशनीयः। तत्र भर्जनरूपपाकात् प्राक् पेषणस्य निवेशे मन्थत्वव्याघातः, भर्जितयवविशिष्टसक्तूनां द्रवद्रव्यमिश्रितानां मन्थशब्दार्थत्वात्। प्रकृतौ दृष्टस्य चार्थिकत्वान्न तमिह चोदकोऽतिदिशति, येन तत्क्रमलोपाद्वैगुण्यमापद्येत। तस्मान्मन्थविधौ भर्जनादूर्ध्वभावि पेषणं प्राकृतधर्मकमेवेति सिद्धम्॥

इति त्रयस्त्रिंशं धानामन्थयोरवधातादिधर्मानुष्ठानाधिकरणम्॥ ३३ ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकुतूहलवृत्तौ

दशमाध्यायस्य द्वितीयः पादः॥

# अथ दशमाध्यायस्य तृतीयः पादः

निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

प्रथमद्वितीयपादयोर्बाधः प्राधान्येन विचारितः । इह तु तृतीयपादे विकृतौ प्रत्यक्षश्रुतेन प्राकृतस्य बाधविचारः प्राधान्येन प्रस्तूयते । अग्नीषोमीये श्रूयते— "एकादश प्रयाजान् यजति" इति । किमिहैकादशत्वसङ्ख्याविशिष्टप्रयाजविधिः ? उत प्रकृतितश्चोदकप्राप्तप्रयाजानुवादेन तत्रैकादशत्वसङ्ख्यारूपगुणमात्रविधिः ? इति संशये, पूर्वपक्षयति—

**विकृतौ शब्दवत्त्वात्प्रधानस्य गुणानामधिकोत्पत्तिस्सन्निधानात् ॥१॥**

विकृतौ शब्दवत्त्वात्-प्रत्यक्षश्रुतत्वात्, गुणानाम्-प्रयाजानामधिकोत्पत्तिः- एकादशत्वसङ्ख्याविशिष्टतयोत्पत्तिः, न तु प्रयाजानुवादेन केवलगुणविधिः । विशिष्टविधिरिति यावत् । एवञ्च विशेष्यभूतप्रयाजानामपि विधिरावश्यकः । प्रयाजाश्च प्रकृतौ क्लृप्तोपकाराः प्रज्ञाताः । तथा च पशुयागकरणकभावनासमुत्थितोपकाराकाङ्क्षायाः प्रत्यक्षोपदिष्टैरेकादशत्वसङ्ख्याविशिष्टप्रयाजैरेव शान्तत्वाद् गृहमेधीयाज्यभागन्यायेन () चोदकस्यानुन्मेषादन्ये प्राकृतधर्मा न प्रवर्तन्ते । न चोपकारमुखेन चोदकतः कृत्स्नेतिकर्तव्यतामङ्गीकृत्य प्राप्तप्रयाजानुवादेन गुणविधिरेव किन्नस्यादिति वाच्यम् । यथा प्रकृतौ दर्शपूर्णमासयोराग्नेयादियागैर्भाव्यं साधितम्, तथा विकृतियागेन भाव्यं कुर्यादित्युक्ते उपकारविशेषणत्वेन प्राकृताङ्गजातस्य सामान्यत एवोपस्थित्या प्रातिस्विकरूपेणोपस्थित्यभावेन प्रयाजत्वरूपेणा- [नूद्य] गुणविध्यसम्भवात् । नन्वेवं सति विशिष्टविधिगौरवमित्यत आह–सन्निधानादिति । एकपदश्रुतिलाभादित्यर्थः । विशिष्टविधौ हि "एकादशप्रयाजान्

यजति" इत्यनेन एकादशत्वविशिष्टप्रयाजात्मकयागैः क्रतुमुपकुर्यादिति लभ्यते। तथा च धात्वर्थविधानादेकपदश्रुतिलाभः। प्रयाजाननूद्यैकादशत्वगुणविधौ तु पदान्तरार्थविधानाद्वाक्यप्रमाणमेवानुगृह्यते, न तु श्रुतिः। वाक्याच्च श्रुतिर्ज्यायसी। तस्माद्विशिष्टविधिरेवाश्रयणीयः॥

इतोऽप्येवमित्याह—

**प्रकृतिवत्तस्य चानुपरोधः॥ २॥**

तदेवं विशिष्टविधौ सति प्रकृतिवत्तस्य-प्रकृतिवत् कर्तव्यमिति चोदकशब्दस्य अनुपरोधः-कल्पना न भवति। वैकृतैरेव सन्निहितैः प्रयाजैरुपकाराकाङ्क्षाशान्तेः। चोदकप्रवृत्तिमाश्रित्य प्राप्तप्रयाजानुवादेन गुणविधौ तु विकृतिभावनैषा इतिकर्तव्यताविषयेऽतिव्यवहितां प्रकृतिमपेक्षेतेति गौरवम्। तस्मादपि न गुणविधिः॥

ननु धात्वर्थविधानेऽपि प्रकरणान्तरत्वात् कर्मान्तराण्येव, प्रयाजा एव ते भवेयुः। तथा च चोदकलोपाभावात् प्राकृतीतिकर्तव्यता स्यादेवेत्यत आह—

**चोदनाप्रभुत्वाच्च॥ ३॥**

एकादशत्वविशिष्टप्रयाजविधेश्चोदकलोपे सामर्थ्याच्चेत्यर्थः। उपकाराकाङ्क्षिण्या विकृतिभावनायास्सन्निधौ श्रूयमाणः प्रयाजशब्दोऽयं प्रकृतावुपकारजनकत्वेन क्लृप्तान् प्रयाजानुपस्थापयतीति प्राकृता एव प्रयाजा गुणविशिष्टा विधीयन्ते, न तु कर्मान्तराणि। तैरेव च निराकाङ्क्षत्वान्न चोदकस्योन्मेषः, अन्यथा गृहमेधीयाज्यभागयोरपि कर्मान्तरत्वापत्तौ चोदकपरिलोपकत्वं न स्यात्। तस्मादिह गुणविशिष्टप्रयाजविधिरिति॥

अथ सिद्धान्तयति—

**प्रधानन्त्वङ्गसंयुक्तं तथाभूतमपूर्वं स्यात्तस्य विध्युपलक्षणात् सर्वो हि पूर्ववान्विधिरविशेषात्प्रवर्तितः॥ ४॥**

तुः पूर्वपक्षव्यावृत्तौ। प्रकृतौ तावत् प्रधानम्-आग्नेयादियागजातं प्राच्योदीच्याङ्गैरग्न्यन्वाधानादिभिस्संयुक्तम्। एवञ्च अपूर्वम्-अवैकृतमपि, तथाभूतं

स्यात्। कुतः? तस्य-प्राकृताङ्गस्य कतिपयस्य क्वचित् सौर्यादिविकृतिषु विध्युपलक्षणात्-अनुक्रमणोपलम्भात्। सौर्येष्टौ तावत् "प्रयाजे प्रयाजे कृष्णलं जुहोति" इति प्रयाजानुवादः। चातुर्मास्येषु वैश्वदेवपर्वणि "प्रहृत्य परिधीन् वाजिनेन चरति" इति परिधिप्रहरणानुवादः। तथा वरुणप्रघासपर्वणि "सम्मृष्ट उत्तरोऽग्निर्भवत्यसम्मृष्टो दक्षिणः" इत्यग्निसम्मार्गानुवादः। महापितृयज्ञे "पत्नीस्संयाजयन्ति" इति पत्नीसंयाजाननूद्य तन्निषेध इत्यादि। एवञ्च सर्वो वैकृतो विधिः पूर्ववान्-प्राकृतसर्वाङ्गयुक्त इति विज्ञायते। कुतः? प्रवर्त्तिनः-धर्मप्रवर्तकस्य चोदकस्याविशेषात्-सर्वाङ्गसाधारणत्वात्। हि प्रसिद्धौ। सप्तमस्य चतुर्थे 'विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तेत' 'तथाहि लिङ्गदर्शनम्' इत्यत्रैवं निर्णीतमित्यर्थः। यद्यपि विकृतिषु प्राकृताङ्गानामुपकारमुखेन सामान्यत एव प्राप्तिरिति न प्रयाजानामिह प्रातिस्विकरूपेण प्राप्तिः, येन प्रयाजत्वेन तदनुवादस्स्यात्, तथापि प्रातिस्विकरूपेणानुवादके प्रयाजशब्दे श्रुते प्रत्यभिज्ञानबलेन प्रयाजत्वेन रूपेण प्राकृतानामेव प्रयाजानामनुवादसम्भवात्तेषु गुणविधिरिति युज्यते। सम्भवति गुणविधौ विशिष्टविधिर्नाश्रयितुमुचितः॥

इतोऽप्येवमित्याह—

**न चाङ्गविधिरनङ्गे स्यात्॥ ५॥**

पूर्वपक्षोक्तरीत्या अग्नीषोमीयपशुयागेऽनङ्गे सति-प्राकृतेतिकर्तव्यतारहिते सति अङ्गविधिः-"आघारमाघार्य पशुं समनक्ति" इति प्राकृताङ्गविशेषभूताया अनुक्रमणं न स्यात्। अतोऽपि चोदकप्राप्तिमङ्गीकृत्य प्राप्तप्रयाजानुवादेन गुणविधिरित्येव युक्तम्॥

इतोऽप्येवमित्याह—

**कर्मणश्चैकशब्द्यात् सन्निधाने विधेराख्यासंयोगो गुणेन तद्विकारस्स्यात् शब्दस्य विधिगामित्वाद् गुणस्य चोपदेश्यत्वात्॥ ६॥**

विकृतिचोदना हि प्राकृतोपकाराकाङ्क्षिणी प्राकृताङ्गजातं सामान्यतो लब्धप्रयोगवचनेन प्रातिस्विकरूपेणाङ्गप्रधानेषूपस्थितेषु पर्यवसानं लभते। वक्ष्यति

चैकादशे 'अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् तस्मात्स्यादेकदेशत्वम्' इति। एवञ्चाग्नीषोमीयपशावपि गुणानाम्-अङ्गानां प्रधानकर्मणश्चैकशब्द्यात्-एकेन विधिप्रत्ययेन विहितत्वात् प्रातिस्विकरूपेण प्रयाजानां सन्निधाने सति एकादशत्व-गुणविधेः आख्यासंयोगः-प्रयाजशब्देनानुवादसमर्पकेण सम्बन्धो भवति—(ये प्रयाजास्ते एकादश भवेयुरिति। तेन च गुणेन-विधीयमानेन तद्विकारस्स्यात्-प्राकृत-पञ्चत्वसङ्ख्याया बाधो भवति) न तु कृत्स्नप्राकृतेतिकर्तव्यतायाः गृहमेधीयाज्य-भागवत्, प्रयाजानामत्र पुनर्विधानाभावात्। तर्हि किमर्थमत्र प्रयाजशब्द इत्यत आह—शब्दस्येति। एकादशत्वसङ्ख्याकाः प्रयाजा भवेयुरिति प्रयाजशब्दो विशिष्ट-विधिगामी प्राप्ताप्राप्तविवेकेन प्रयाजानुवादेन गुणमात्रोपदेशे पर्यवस्यति, "दध्ना जुहोति" इतिवत्। प्रयाजानुवादस्तु गुणस्य प्रयाजाश्रितत्वलाभाय, अन्यथा आज्यभागादावपि स्यात्। तस्मादपि प्रयाजानुवादेन गुणविधिः॥

इतोऽप्येवमित्याह—

अकार्यत्वाच्च नाम्नः॥ ७॥

गुणविधित्वाभावे यागाः कर्तव्याः, ते चैकादश भवन्ति प्रयाजसंज्ञकाश्चेति प्रयाजसंज्ञाया एकादशत्वसङ्ख्याया यागानाञ्च विधानं प्रसज्येत। तच्च न शक्यते कर्तुम्, तथा सति वाक्यभेदप्रसङ्गात्। विशिष्टविधिस्तु सम्भवति प्रयाजानुवादेन गुणविधौ नाश्रयितुमुचितः॥

ननु गुणविशिष्टविधौ धात्वर्थविधिलाभाच्छ्रुत्यनुग्रहः, प्रयाजानुवादेन गुण-विधौ तु वाक्यार्थविधिस्स्यादित्यत आह—

तुल्या च प्रभुता गुणे ॥८॥

पूर्वपक्षेऽपि गुणविशिष्टविधौ गुणविषये वाक्यार्थविधिता तुल्या, गुणवैशि-ष्ट्यस्य पदान्तरसमभिव्याहारलभ्यत्वात्, गृहमेधीयेऽप्याज्यभागविधौ गुणस्य कस्यचिदश्रुतत्वाद् धात्वर्थस्य केवलस्य पुनर्विधानाच्च प्राकृतेतिकर्तव्यतेति वैषम्यम्॥

() कपुस्तके ग्रन्थपातः.

अत्राशङ्क्य निराकरोति—

**सर्वमेवं प्रधानमिति चेत्तथाभूतेन [1]संयोगाद्यथार्थं विधयः स्युः ॥९॥**

विकृतिचोदनासु यद्यङ्गप्रधानान्येकेनाख्यातेन विधीयन्ते, एवं सति सर्वम्-प्रयाजादिकमपि प्रधानं स्यात्, एकेनैवाख्यातेन फले विहितत्वात् इति चेदुच्यते- यत्तावत् फले करणत्वेनावगतं तत् प्रधानम्। यत्तदुपकारकत्वेनावगतं तदङ्गम्। चोदना चांशत्रयवती। तत्र च भावार्थाधिकरणन्यायेन ()धात्वर्थः करणत्वेन सम्बध्यते, इतरत्तु इतिकर्तव्यतया। सर्वस्यापि करणत्वेनैव सम्बन्धे इतिकर्तव्यता-काङ्क्षाया अशान्तत्वात् सकाङ्क्षमेव वाक्यं स्यात्। ततश्च तथाभूतेनोपकारमुखेन प्राकृतपदार्थप्राप्तिमुपजीव्याङ्गप्रधानभावं पुरस्कृत्य प्रवृत्तेन विधिप्रत्ययेन संयोगाद् विधयः-विकृतिप्रयोगविधिवाक्यानि यथार्थास्स्युः-अङ्गप्रधानभावानतिक्रमेण स्युः ॥

इतोऽपि न सर्वं प्रधानमित्याह—

**विधित्वं चाविशिष्टं प्राकृतानां वैकृतैः कर्मणा योगात्तस्मात् सर्वं प्रधानार्थम् ॥१०॥**

प्राकृतानां--पदार्थानां वैकृतैः--पदार्थैः अविशिष्टं-तुल्यं यथा भवति तथा कर्मणा-आर्थवादिकप्रशंसारूपेण योगो दृश्यते। तद्यथा-प्रकृतौ तावत् "चक्षुषी वा एते यज्ञस्य यदाज्यभागौ" इति चक्षुस्त्वेनाज्यभागयोः प्रशंसा विकृतावपि। महा-पितृयज्ञादौ तथैव प्रशंसास्ति-"आज्यभागौ यजति यज्ञस्यैव चक्षुषी नान्तरेति" इति। अत एवञ्जातीयकानां विधित्वमभ्युपेयम्। विधत्ते उपकरोतीति विधिः तस्य भावः विधित्वम्-अङ्गत्वम्। तस्माद्धेतोरुपकाराकाङ्क्षया परिगृहीतमन्यदपि प्रयाजा-दिकं सर्वं प्रधानार्थमेव, न तु प्रधानमिति विज्ञायते ॥

इतोऽपि न सर्वं प्रधानमित्याह—

**समत्वाच्च तदुत्पत्तेस्संस्कारैरधिकारस्स्यात् ॥११॥**

अधिकारः--विकृतिप्रयोगविधिः, संस्कारैः--दृष्टादृष्टविधयोपकारकैरङ्गैस्स-हितस्य प्रधानस्य विधायकस्स्यात्, न तु सर्वं प्रधानमिति यावत्। कुतः? तदुत्पत्ते-

१. योगात्.

स्सत्वात्--प्रकृतौ च प्रयाजादीनां क्रमविषये तुल्यत्वदर्शनादित्यर्थः। प्रकृतौ हि दर्शपूर्णमासयोः प्रयाजादयोऽङ्गमिति स्थितं चतुर्थस्य चतुर्थे 'दर्शपूर्णमासयोरिज्या-प्राधान्यमविशेषात्' इत्यत्र। तत्र च प्रधानेभ्यः पूर्वं प्रयाजाः क्रियन्ते। अनूयाजास्तु प्रधानेभ्य ऊर्ध्वं क्रियन्त इति स्थितिः। अयमेव क्रमो विकृतावप्यग्नीषोमीयपशौ प्रयाजानूयाजानां दृश्यते-'आज्येन पुरस्तात् प्रयाजा वर्तन्ते पशुना मध्यतः पृषदाज्येन पश्चादनूयाजा वर्तन्ते' इति। तदिदं प्रयाजानूयाजानां क्रमदर्शनं प्रधानार्थत्वे सत्येवोपपद्यते, न तु प्रधानत्वे, तादृशक्रमस्य प्रकृतावङ्गभूतप्रयाजादिधर्मत्व-दर्शनात्। अतोऽपि विकृतिप्रयोगविधिनैकेन परिगृहीतानामपि प्रयाजादीनां प्रधानार्थत्वमेव, न तु प्रधानत्वमित्यभ्युच्चयवादमात्रमेतत्॥

इति प्रथममग्नीषोमीयपशौ प्रयाजेषु गुणमात्रविधानाधिकरणम्॥ १॥

२

महाग्नौ वायव्यपशौ श्रुतम्-"हिरण्यगर्भस्समवर्तताग्र इत्याघारमाघारयति" इति। प्रकृतौ तावद् द्वावाघारौ। तत्र पूर्वाघारस्तूष्णीं प्रजापतिदेवताकः, उत्तरा-घारस्तु "इत इन्द्र ऊर्ध्वोऽध्वर" इति मन्त्रक इन्द्रदेवताकः। तत्र किमयं मन्त्रविधिः पूर्वाघारे? उतोत्तराघारे? इति संशये, पूर्वपक्षयति—

**हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात्॥१२॥**

हिरण्यगर्भशब्दसंयुक्ते वाक्ये पूर्वाघारस्य मन्त्रविधिः, न तूत्तराघारस्य। कुतः? मन्त्रलिङ्गात्-मन्त्रसामर्थ्यात्। हिरण्यगर्भशब्दो हि प्रजापतिमाह-"प्रजापति-र्वै हिरण्यगर्भः" इति वाक्यशेषात्। तथा "समवर्तताग्रे जातः" इति प्रपञ्चसृष्टेः प्रागाविर्भावकथनम् "भूतस्य पतिः" इति स्वसृष्टजगदुत्पत्तित्वम्, "एक आसीत्" इति सृष्टेः प्रागेकत्वञ्च प्रजातावेवोपपद्यन्ते, न त्विन्द्रे। तस्मात् पूर्वाघार एवायं मन्त्रविधिः॥

इतोऽप्येवमित्याह—

**प्रकृत्यनुपरोधाच्च॥१३॥**

पूर्वाघारे हिरण्यगर्भ इति मन्त्रविधावेवोत्तराघारे प्रकृतिप्राप्तस्य "इन्द्र ऊर्ध्वोऽध्वरः" इति मन्त्रस्याबाधो भवति। उत्तराघारे तद्विधौ तु प्रकृतिप्राप्तस्यास्य मन्त्रस्य बाधस्स्यात्। अतोऽपि पूर्वाघार एवायं मन्त्रविधिः, न तूत्तराघारे॥

अथ सिद्धान्तयति—

उत्तरस्य वा मन्त्रार्थत्वात् ॥१४॥

वा शब्द एवार्थे। उत्तरस्यैवाघारस्यायं मन्त्रविधिः, न तु पूर्वस्य। कुतः? मन्त्रार्थत्वात्। प्रकृतौ हि उत्तर एवाघारो मन्त्रवान्। अत इहापि वायव्यपशावुत्तराघारो मन्त्रमपेक्षते, न तु पूर्वाघारः, तस्य प्रकृतौ मन्त्रवत्त्वाभावात्। न चैतन्मन्त्रविधिबलादेवात्र पूर्वाघारस्य मन्त्राकाङ्क्षोत्थाप्यतामिति वाच्यम्, प्रकृतौ हि पूर्वाघारे मन्त्रजन्यनियमादृष्टं न क्लृप्तम्, तस्य तत्र तूष्णीकत्वात्। उत्तराघारे तु "इन्द्र ऊर्ध्वोऽध्वरः" इति मन्त्रस्य विहितत्वात्तन्नियमादृष्टं क्लृप्तम्। एवञ्च यद्यत्र पूर्वाघारे मन्त्रविधिस्स्यात्, तदा प्रकृतावक्लृप्तं मन्त्रजन्यनियमादृष्टं कल्पनीयं स्यादिति गौरवम्। उत्तराघारविधौ तु न तत्कल्पनीयमिति लाघवमिति तत्रैव मन्त्रविधिरिति युक्तम् ॥

इतोऽप्येवमित्याह—

विध्यतिदेशात्तच्छ्रुतौ विकारस्स्याद् गुणानामुपदेश्यत्वात् ॥१५॥

विधीयत इति विधिः-अङ्गजातम्, तस्य विकृतावतिदेशात् प्राप्ताघारानुवादेन तच्छ्रुतौ-मन्त्रविधौ विकारस्स्यात्-उत्तराघारे "इन्द्र ऊर्ध्व" इति प्राकृतमन्त्रस्य बाधस्स्यात्, न तु पूर्वाघारेऽमन्त्रस्य। कुतः? गुणानामुपदेश्यत्वात्-लोके गुणानां सजातीयगुणान्तरनिवर्तकतयैव निर्देशदर्शनात्। लोके हि-इदं दधि घृतं शाकमिमे-शालयः देवदत्तो भोजयितव्यः, देवदत्तवद्यज्ञदत्तस्तैलेनेत्युक्ते तैलसजातीयस्नेहनद्रव्य-निवर्तकमेवावगम्यते, न तु शाकादिनिवर्तकमपि, तद्वत्। ननु प्रजापतिवचनस्यास्य मन्त्रस्य कथमैन्द्राघारे प्रवृत्तिसम्भव इत्यत्राप्येतदेवोत्तरम्-गुणानामुपदेश्यत्वादिति। हिरण्यगर्भ इति मन्त्रे इन्द्रगतगुणानामेव निर्देशसम्भवादित्यर्थः। "यो ह खलु वाव प्रजापतिः स उ वै वेन्द्रः" इत्यादिवाक्यशेषतः प्रजापतिरूपत्वेनावगते इन्द्रे हिरण्यगर्भशब्दः सृष्टिपूर्वकाले एकस्यावस्थितिः स्वसृष्टभूतपतित्वञ्च प्रजापत्यभेदादुपचर्यत इति भावः। प्रपञ्चितञ्चैतद् भाष्ये। एवञ्चार्थवादानां स्वार्थ तात्पर्याभावाद्देवताविग्रहादिकम् ईश्वरात् प्रपञ्चसृष्ट्यादिकञ्च नास्तीत्येव भाष्यसम्मतमिति केषाञ्चित् प्रच्छन्नबौद्धानां प्रलपितं स्वप्नेऽपि न स्मर्तव्यम् ॥

ननु [ उत्तरस्मिन् ] आघारे मन्त्रविधौ चोदकप्राप्तस्य प्राकृतमन्त्रस्य बाधस्स्यात्, तद्वरं पूर्वस्मिन्नेवाघारे मन्त्रविधिरित्यत आह—

पूर्वस्मिंश्चामन्त्रत्वदर्शनात् ॥१६॥

प्रकृतौ पूर्वाघारं प्रकृत्य श्रुतं वाजसनेयके- "न स्वाहाकरोति मन्त्रञ्च नाह" इति। तदिह वायव्यपशावपि पूर्वाघारे चोदकतः प्राप्तम्। ततश्च तत्र हिरण्यगर्भ इति मन्त्रविधावमन्त्रकत्वं बाध्येत। एवञ्च पूर्वाघारे मन्त्रविधावपि चोदकबाधस्तुल्य इति भावः। केचित्तु वायव्यपशौ पूर्वाघारं प्रकृत्य 'न स्वाहाकरोति न च मन्त्रमाह" इति समाम्नातमित्याहुः। इदानीं परिदृश्यमानासु तु शाखासु वायव्यपशावेवं समाम्नानं न दृश्यते। वायव्यपशावाहृत्य पूर्वाघारस्यामन्त्रत्ववचने सति पूर्वपक्षानुत्थानाच्च॥

इति द्वितीयं वायव्यपशौ हिरण्यगर्भमन्त्रस्योत्तराधाराङ्गत्वाधिकरणम् ॥२॥

३

चातुर्मास्येषु वैश्वदेवपर्वणि "तप्ते पयसि दध्यानयति यत् संवर्तते सा वैश्वदेव्यामिक्षा यदन्यत्तद्वाजिनम्" इति प्रकृत्य श्रुतम्-"उत्करे वाजिनमासादयति" इति। खाताद्वेदिप्रदेशादुत्तरतः प्रक्षिप्तानां कति [पयतृण] पांसूनां राशिरुत्करः। किमत्र उत्करविशिष्टं प्राकृतमासादनं विधीयते? उत प्राकृतासादनानुवादेनोत्करलक्षणगुणविधिः? इति संशयः। तथा चातुर्मास्यसोमेषु वैश्वदेवसोमे श्रुतम्- "परिधौ पशुं नियुञ्जन्ति" इति। अत्रापि किं परिधिविशिष्टप्राकृतं नियोजनं विधीयते? उत प्राकृतपशुनियोजनानुवादेन परिधिः? इति संशयः। तत्र पूर्वपक्षयति—

संस्कारे तु क्रियान्तरं तस्य विधायकत्वात् ॥१७॥

तुर्वैषम्ये। पूर्वतराधिकरणरीत्या प्राकृतकार्यके प्रयाजादिकर्मणि एकादशत्वादिगुणविधानेऽपि आसादननियोजनात्मकसंस्कारे श्रूयमाणे उत्करविशिष्टमासादनं परिधिविशिष्टं नियोजनञ्च कर्मान्तरं विधीयते, न तु प्राकृतासादनानुवादेनो-

त्करविधिः, नापि प्राकृतनियोजनानुवादेन परिधिविधिः । कुतः ? तस्य विधायकत्वात्-तस्य प्राकृतस्य हविरासादनस्य पशुनियोजनस्य च दृष्टकार्यनिष्पादकत्वात् । प्रकृतौ हि "वेद्यां हविरासादयति" इत्यासादनं होमाय सन्निधापनार्थम् । पशुनियोजनञ्च पश्वनपक्रमणार्थम् । उत्करस्तु तुङ्गः तीक्ष्णाग्रश्च । तस्य पांसुराशिरूपत्वात् पांसूनाञ्च राशिरूपेण प्रक्षिप्तानां तीक्ष्णाग्रत्वतुङ्गत्वयोर्दर्शनात् । तत्र [१]च होमपर्यन्तं न चिरकालीनप्राकृतकार्यापन्नासादने वाजिनस्य क्रियमाणेऽवस्कन्दनं स्यात् । परिधेश्च तनुभूतस्यानिखातस्य शयानस्य पश्वनपक्रमणक्षमं नियोजनसाधनत्वं न भवति । अतोऽदृष्टार्थमुत्करे परिधौ च क्षणमात्रमासादनं नियोजनञ्च कथञ्चित् कृत्वा पुनः प्राकृतं वेद्यां यूपे चासादनं नियोजनञ्च कार्यमिति न ताभ्यां प्राकृतयोस्तयोर्बाधः । एवञ्चोत्करविशिष्टासादनान्तरस्य परिधिविशिष्टनियोजनान्तरस्य च धात्वर्थस्य विधिलाभात् समानपदश्रुत्यनुग्रहः । पदान्तरोपात्तगुणविधौ तु वाक्यानुग्रहस्स्यात् । 'तस्य विधायकत्वात्' इत्येतद् विधिप्रत्ययस्य श्रुत्या धात्वर्थविधायकत्वलाभादित्येवम्परञ्च ॥

इतोऽप्येवमित्याह—

## प्रकृत्यनुपरोधाच्च ॥१८॥

कर्मान्तरविधावेव प्रकृतिप्राप्तस्यासादनस्य नियोजनस्य चाबाधात्, प्राकृतासादननियोजनानुवादेनोत्करपरिधिलक्षणगुणविधौ "वेद्यां हवींष्यासादयति" "यूपे पशुं नियुञ्जीत" इति प्राकृतवेदियूपयोर्बाधप्रसङ्गात् । अतोऽपि न गुणविधिः, किन्तु विशिष्टकर्मान्तरविधिरेव ॥

अथ सिद्धान्तयति—

## विधेस्तु तत्र भावात् सन्देहे यस्य शब्दस्तदर्थः स्यात् ॥१९॥

तुः पक्षव्यावृत्तौ । गुणविधित्वकर्मान्तरविधित्वसंशये आसादननियोजनविधिः, तस्य तत्र-विकृतौ भावात्-चोदकतः प्राप्तत्वात् पुनर्विधिवैयर्थ्यात्, यस्य विषये शब्दः विधिवाक्यं नानर्थकं तदर्थं सम्पद्यते । प्राप्तासादननियोजनानुवादेनोत्करपरिधिलक्षणगुणविधानार्थं सम्पद्यत इति यावत् । वाक्यार्थविधानन्तु पूर्वपक्षेऽपि तुल्यम्, तत्र गुणवैशिष्ट्यस्य समभिव्याहारलभ्यत्वात् ॥

---

१. च. नास्ति. ग.

अथ यदुक्तं तुङ्गे तीक्ष्णाग्रे उत्करे परिधौ चानिखाते तनुभूते शयाने होमकालपर्यन्तचिरकालासादनं पश्वनपक्रमणक्षमञ्च नियोजनं परिधौ कर्तुं न शक्यत इत्यप्राकृते एवासादननियोजने उत्करपरिधिविशिष्टे विधेये इति तत्राह—

**संस्कारसामर्थ्याद् गुणसंयोगाच्च ॥२०॥**

उत्करस्य पृथ्वग्रत्वगुणकल्पनया परिधेः पश्वनपक्रमणक्षमनियोजनार्हस्थौल्य-गुणकल्पनया च प्राकृतासादननियोजनसामर्थ्यसम्भवान्नोक्तदोषः। तथा च प्राकृतासादननियोजनानुवादेनोत्करस्य परिधेश्च विधानाद्वाजिनासादने वेदिर्बाध्यते, नियोजने च यूपः ॥

यत्तु सौत्रामण्यामुक्तम्—'ब्राह्मणस्य मूर्ध्नि सुराभाण्डं सादयति" इति तदेतत् सादनमदृष्टार्थत्वादप्राकृतकार्येवेत्याह[1]—

**विप्रतिषेधात् क्रियाप्रकरणे स्यात् ॥२१॥**

सौत्रामणिप्रकरणे ब्राह्मणस्य मूर्ध्नि सुराभाण्डस्य सादनक्रियादृष्टार्थत्वाद-प्राकृतकार्येव स्यात्। कुतः? विप्रतिषेधात्-विरोधात्[2]। न हि होमपर्यन्तचिर-कालीनं सादनं [3]ब्राह्मणस्य मूर्ध्नि सुराभाण्डस्य शक्यते कर्तुम् ॥

इति तृतीयं चतुर्मास्यसोमेष्वासादननियोजनयोर्गुणविधानाधिकरणम् ॥३॥

४

सन्ति ज्योतिष्टोमे षड् दीक्षाहुतिमन्त्राः—"आकूत्यै प्रयुजेऽग्नये स्वाहा" इत्यादयः। सन्ति च महाग्नौ षड् दीक्षाहुतिमन्त्राः "आकूतिमग्निं प्रयुजं स्वाहा" इत्यादयः। किमेतैराग्निकदीक्षाहुतिमन्त्रैः प्राकृतदीक्षाहुतिमन्त्राणां निवृत्तिः? उत समुच्चयः? इति संशये पूर्वपक्षयति—

**षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात् ॥२२॥**

तासां प्रकृतिप्राप्तदीक्षाहुतीनां प्राकृतमन्त्रबाधः स्यात्। कुतः? "षड्भिर्दी-क्षयति" इति श्रुतिसंयोगात्। प्रत्यक्षवचनादित्यर्थः। दीक्षयतीत्यनेन हि दीक्षाहुतयो

---

१. कार्यमेव. क, ग. २. विरोधात्. नास्ति. क.

३. ब्राह्मणमूर्ध्नि. क.

लक्ष्यन्ते । अग्निप्रकरणपठितैरेतैः षड्भिर्मन्त्रैर्दीक्षाहुतीर्जुहोतीत्यर्थः । स्वाहान्तमन्त्राणामेषां साक्षाद्दीक्षार्थत्वासम्भवेन दीक्षयतेर्दीक्षाहुतिलक्षकत्वौचित्यात् । तथा च प्रत्यक्षविनियुक्तमन्त्रैरेतैः प्राकृतमन्त्राणामेककार्यत्वाद् बाध उचितः । न च सति सम्भवे समुच्चयः किं न स्यादिति वाच्यम्, मन्त्रभूतगुणानुसारेण प्रधानभूतदीक्षाहुतीनां षण्णां पुनष्षड्वारमावृत्तिप्रसङ्गात् । वक्ष्यति हि द्वादशे 'समुच्चये ह्यावृत्तिस्स्यात् प्रधानस्य' इति । विकल्पस्तु विषमशिष्टत्वान्न शङ्क्यः । वैकृतानां मन्त्राणां प्रत्यक्षशिष्टत्वात्, प्राकृतानाञ्चानुमानिकत्वात् । तस्मादिह वैकृतैर्मन्त्रैः प्राकृतानां बाध इति युक्तम् ॥

अथ सिद्धान्तयति—

**अभ्यासात्तु प्रधानस्य ॥ २३ ॥**

प्रधानस्येति सामान्याभिप्रायमेकवचनम् । यत्र प्रधानावृत्तिर्न श्रुता, तत्रैव 'समुच्चये ह्यावृत्तिः स्यात्' इति दोषः । इह तु "द्वादश जुहोति" इति प्रधानभूतदीक्षाहुतीनां प्राकृतीनां द्विरावृत्या द्वादशत्ववचनात् । तत्र प्राकृतानां षण्णां वैकृतानाञ्च षण्णां मन्त्राणां समुच्चयो निर्बाधः ॥

तत्र पूर्वपक्षी प्रत्यवतिष्ठते—

**आवृत्या मन्त्रकर्म स्यात् ॥ २४ ॥**

द्विरावृत्या वैकृतानामेव मन्त्राणां प्रयोगस्स्यादित्यर्थः । आहत्य वैकृतमन्त्रविधिबलेन प्राकृतमन्त्रबाधावश्यम्भावाद्दीक्षाहुतिद्वादशत्वमपि वैकृतमन्त्राभ्यासेनैव सम्पादनीयमिति नाप्राकृतमन्त्रसमुच्चयस्सम्भवतीति भावः ।[1]

अथ सिद्धान्तो निराचष्टे—

**अपि वा प्रतिमन्त्रत्वात् प्राकृतानामहानं स्यादन्यायश्च कृतेऽभ्यासः ॥ २५ ॥**

अपि वेति पूर्वपक्षव्यावृत्तौ । द्वादशत्वाहुतिषु प्राकृतानां मन्त्राणाम् अहानं स्यात्[2]—बाधो न स्यात्, किन्तु वैकृतैस्समुच्चयस्स्यादिति यावत् । कुतः ? प्रतिमन्त्र-

१. स्यादिति भावः. क. २. स्यात्. नास्ति. क.

त्वात्-प्रतिमन्त्रमेकैकाहुतेः कर्तव्यत्वात्। वैकृतमन्त्राणामेकस्मिन्नाहुतिषट्के सम्बन्धलाभेन चारितार्थ्ये सति इतरस्याहुतिषट्कस्य मन्त्राकाङ्क्षायां तत्र चोदकप्राप्तानां मन्त्राणां समावेशसम्भवादिति यावत्। ननु "षड्भिर्दीक्षयति" इत्याहत्य वैकृतमन्त्रदीक्षाहुतिषु[1] प्रत्यक्षविधानबलेन प्राकृतमन्त्रबाधावश्यम्भावाद्दीक्षाहुतिद्वादशत्वमपि वैकृतमन्त्राभ्यासेनैव सम्पाद्यमित्यत आह—अन्याय्यश्च कृतेऽभ्यास इति। वैकृतैष्षड्भिर्मन्त्रैः दीक्षाहुतिषट्कलक्षणकार्ये कृते सतीतरस्मिन् दीक्षाहुतिषट्के तेषामभ्यासः-आवृत्तिर्न युज्यत इत्यर्थः। यदि हि दीक्षाहुत्यनुवादेन वैकृतमन्त्रा विहितास्स्युः, तदा "अप्स्ववभृथेन चरन्ति" इत्यत्र प्राकृतसर्वहोमेष्वाहवनीबाधवत् स्यादेवात्र प्राकृतमन्त्रबाधः। नैवमस्ति, दीक्षार्थत्वमेव हि वैकृतमन्त्राणां वचनेनावगतम्। तच्च स्वाहान्तमन्त्राणां साक्षाद्दीक्षार्थत्वानुपपत्त्या दीक्षाङ्गभूताहुतिद्वारा कल्प्यमित्यार्थिकमेतेषां दीक्षाहुत्यर्थत्वम्। तच्च षट्सु कतिपयदीक्षाहुतिषु तेषां वैकृतमन्त्राणामन्वयमात्रेणोपपन्नमिति तदभ्यासे प्राकृतमन्त्रबाधे च प्रमाणाभावात् समुच्चय एव प्रकृतवैकृत[2] मन्त्राणामिति युज्यते ॥

इतोऽप्येवमित्याह—

**पौर्वापर्यञ्चाभ्यासे नोपपद्यते नैमित्तिकत्वात् ॥ २६ ॥**

"षड्भिः पूर्वाञ्जुहोति षडुत्तराञ्जुहोति" इति श्रुतौ पूर्वपठितत्वात् प्राकृतमन्त्राः पूर्वशब्देन विवक्षिताः, उत्तरशब्देन तु पश्चात्पठिता [3]वैकृता मन्त्राः। षड्भिः प्राकतमन्त्रैर्जुहोति, षड्भिर्वैकृतमन्त्रैर्जुहोतीत्यर्थः। विभक्तिव्यत्ययश्छान्दसः। वैकृतानां मन्त्राणामभ्यासेनैव [4]द्वादशत्वपूरणे सत्यभ्यस्यमानानां तेषामभिन्नत्वेन पूर्वोत्तरभावव्यवहारो न स्यात्। कुतः? नैमित्तिकत्वात्-पूर्वोत्तरभावस्य भेदनिबन्धनत्वात्। न हि वैकृता एव मन्त्रा अभ्यस्यमानाः स्वापेक्षया पूर्वे उत्तरे च भवन्ति। अतो न वैकृतमन्त्राभ्यासेन द्वादशत्वपूरणम् ॥

---

१. दीक्षिताहुतिषु. ग.
२. वैकृतमन्त्राः. ग.
३. वैकृत. नास्ति. क.
४. द्वादशत्वे पूर्णे. क.

इतोऽप्येवमित्याह—

**तत्पृथक्त्वञ्च दर्शयति ॥ २७ ॥**

दीक्षाहुतीनां साग्निके क्रतौ द्वैविध्यं दर्शयति—"उभयीर्जुहोत्याग्निकीश्चाध्वरकीश्च" इति। आग्निकमन्त्रकत्वात् प्राकृतमन्त्रकत्वाच्चोभयत्वं दीक्षिताहुतीनाम्, न तु दीक्षाहुतित्वरूपेण आग्निकदीक्षाहुतित्वरूपेण वा भेदोऽस्ति। तस्मादपि प्राकृतवैकृतमन्त्राणां समुच्चयः, न त्वभ्यासः॥

इतोऽप्येवमित्याह—

**न चाविशेषाद्व्यपदेशस्स्यात् ॥ २८ ॥**

"अध्वरस्य दीक्षाहुतीः पूर्वञ्जुहोत्यथाग्नेः" इति क्रमविधिपरे वाक्येऽध्वरस्य दीक्षाहुतीरग्नेर्दीक्षाहुतीरिति व्यपदेशः—भेदेन निर्देशोऽपि प्राकृतवैकृतमन्त्राणां समुच्चयं दर्शयति। कुतः? अविशेषात्—वैकृतमन्त्राभ्यासेन द्वादशत्वपूरणे तु द्वादशानामपि दीक्षाहुतीनामग्निकत्वाविशेषेण तथाविधभेदनिर्देशानुपपत्तेः। अतः प्राकृतवैकृतमन्त्राणां समुच्चय एव। न चाग्नेर्ज्योतिष्टोमविकृतित्वाभावात् कथं तद्दीक्षाहुतीनां वैकृतत्वमिति वाच्यम्, दीक्षाहुतीनां साग्निचित्ये सोमनैमित्तिकाङ्गतया तदुपपत्तेः॥

इति चतुर्थं दीक्षाहुतिमन्त्राणां समुच्चयाधिकरणम् ॥ ४ ॥

५

अग्न्याधेयप्रकरणे श्रूयते—"अग्नीनाधायैकस्मिन् संवत्सरे यो नर्ध्नुयात् स पुनरादधीत, प्रजाकामः पुनरादधीत, पशुकामः पुनरादधीत, श्रीकामः पुनरादधीत" इति। तदिदं पुनराधानमग्न्याधेयस्य गुणविकारः, दाक्षायणयज्ञवत्, अग्न्याधेयप्रकरणात् पुनश्शब्दाच्च, न तु कर्मान्तरमिति स्थितिः। तत्र श्रूयते—"पुनर्निष्कृतो रथो दक्षिणा, पुनरुत्स्यूतं वासः, पुनरुत्सृष्टोऽनड्वान्" इति। यश्शीर्णो रथः पुनः परिष्कृतः स पुनर्निष्कृतः। यः पटो जीर्णः पुनस्तन्तुभिस्स्यूतः तत् पुनरुत्स्यूतं वासः। यः अतिमात्रवहनेन रोगेण घासविरहेण वा[1] शीर्णः

---

१. च. क.

पुनश्शकटवहनक्षमः कृतः स पुनरुत्सृष्टो ऽनड्वान्। सन्ति चाग्न्याधेये दक्षिणाः--"सार्वसूत्रमुपबर्हणमग्नीधे ददाति, अश्वं ब्रह्मणे, धेनुं होत्रे, अनड्वाहमध्वर्यवे" इत्यादयः। ताः किं पुनराधेयदक्षिणाभिस्समुच्चीयन्ते? उत बाध्यन्ते? इति संशये, पूर्वपक्षयति—

**अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ २९ ॥**

नैमित्तिक इति काम्यस्याप्युपलक्षणम्। अग्न्याधेयस्य नैमित्तिके काम्ये च गुणविकारे पुनराधेये पुनर्निष्कृतरथादिदक्षिणादानमधिकं स्यात्। अग्न्याधेयदक्षिणादानेन समुच्चितं स्यादिति यावत्। कुतः? वाक्यसंयोगात्—"उभयीर्दक्षिणा ददात्याग्न्याधेयिकीः पुनराधेयिकीश्च" इति वचनादित्यर्थः॥

ननु "उभयीर्ददाति" इति वर्तमानापदेशात् कथं विधायकमित्याशङ्क्याह—

**शिष्टत्वाच्चेतरासां यथास्थानम् ॥ ३० ॥**

विधित्वे तावदप्राप्तार्थकत्वमेव बीजम्, न तु लिङादिकमेव। अन्यथा "उपरि हि देवेभ्यो धारयति" "यदाग्नेयोऽष्टाकपालः" इत्यादीनां विधायकत्वानुपपत्तेः। ततश्चोभयविधानामपि दक्षिणानां शिष्टत्वात्—विहितत्वात्, पौनराधेयिकीभिर्दक्षिणाभिरितरासामाग्न्याधेयिकीनां यथास्थानम्-पाठक्रमेण दानं स्यात्॥

अथ सिद्धान्तयति—

**विकारस्त्वप्रकरणे हि काम्यानि ॥ ३१ ॥**

तुरवधारणे। पौनराधेयिकदक्षिणाभिराग्न्याधेयिकदक्षिणानां विकारः-बाध एव स्यात्, न तु समुच्चयः। कुतः? अप्रकरणे हि काम्यानि-काम्यग्रहणं नैमित्तिकस्याप्युपलक्षणम्। प्रकरणशब्देनाविकृताग्न्याधेयप्रकरणपरिगृहीतदक्षिणाद्रव्याणि विवक्षितानि, तेषामभावोऽप्रकरणम्। तस्मिन्नप्रकरणे। अर्थाभावेऽव्ययीभावः। 'तृतीयासप्तम्योर्बहुलम्' इति सप्तम्या अलुक्। प्रकरणानामभाव इति षष्ठीतत्पुरुषो वा। अद्रुतायामसंहितम्, रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति महा-

भाष्ये वार्तिके च प्रयोगात् । हि यतः, अप्रकरणे अविकृताग्न्याधेयप्रकरणस्थदक्षिणाद्रव्यनिवृत्तौ सत्यामेव काम्यनैमित्तिकगुणविकारपुनराधेयदक्षिणाद्रव्याणि निविशन्ते, न त्वग्न्याधेयदक्षिणाद्रव्येषु सत्सु, [ अ ] पुरुषार्थत्वसमासक्तेः । 'काम्यं नित्यस्य बाधकम्' इति न्यायादित्यर्थः । "उभयीर्ददाति" इति तु वर्तमानापदेशत्वान्न विधिः । न चाप्राप्तार्थत्वाद्विधिस्स्यादिति वाच्यम्, "उभयीर्दक्षिणा ददात्याग्न्याधेयिकीः पौनराधेयिकीश्च" इत्यत्राग्न्याधेयिकीनामित्यस्य प्राप्तार्थस्यैव पौनराधेयिकदक्षिणाविधिस्तुत्यर्थमुपादानात् । अग्न्याधेयं कृत्वैव हि तदग्नीनुद्वास्य पुनराधेयं क्रियते । तथा च पूर्वमग्न्याधेयदक्षिणानां दत्तत्वात्, सम्प्रति पुनराधेयदक्षिणादाने सति उभयीर्दक्षिणा दत्ता भवन्तीति स्तुतिरुन्नेया । अतो न समुच्चयः ।

इतोऽप्येवमित्याह--

**शङ्कते च निवृत्तेरुभयत्वं हि श्रूयते ॥ ३२ ॥**

"यद्वैकृतीर्दक्षिणा ददात्युभयेऽपि तेन दक्षिणाः प्रत्ता भवन्ति" इति वाक्यशेषः वैकृतदक्षिणादानात्प्राकृतदक्षिणादानमपि कृतं भवतीत्युत्प्रेक्षते । यद्यत्र प्राकृतदक्षिणा अपि दीयेरन्, तर्ह्युक्तविधोत्प्रेक्षा नोपपद्येत । अविद्यमानार्थस्यैव ह्युत्प्रेक्षा । ननु प्रकृतदक्षिणादानत्वेन कथमिहोत्प्रेक्षा ? तद्वाचकपदाभावादित्यत आह --उभयत्वं हि श्रूयत इति । विशिष्य प्राकृतदक्षिणापदाभावेऽपि उभयीशब्देन तदुपादानात्तदुत्प्रेक्षा भवतीति भावः । तस्मात्पुनराधेयदक्षिणाभिरग्न्यधेयदक्षिणानां बाध एव ॥

इति पञ्चमं पुनराधेये दक्षिणासमुच्चयाभावाधिकरणम् ॥ ५ ॥

६

आग्रयणे श्रूयते "प्रथमजो वत्सो दक्षिणा वासो दक्षिणा" इति । तत्र प्राकृती अन्वाहार्यदक्षिणा समुच्चीयते ? उत बाध्यते ? इति संशये, अविरोधात् समुच्चये प्राप्ते, सिद्धान्तयति—

**वासोवत्सञ्च सामान्यात् ॥ ३३ ॥**

वासोवत्समिति समाहारद्वन्द्वः । प्रकृतान्वाहार्यस्य निवर्तकमिति शेषः । सामान्यात्-कार्यैकत्वादित्यर्थः । प्रकृतौ ह्यन्वाहार्य आनत्यर्थः । वासोवत्समप्यत्रा-

नत्यर्थमेव, दक्षिणाशब्दात्। दक्षयति आनमयतीति व्युत्पत्तेः। वासोवत्सञ्चात्रानतौ प्रत्यक्षशिष्टमिति। तेन चोदकप्राप्तोऽन्वाहार्यो बाध्यते। सिद्धोऽप्ययमर्थ उत्तरविवक्षया पुनरुच्यते ॥

इति षष्ठं वासोवत्साधिकरणम् ॥ ६ ॥

७

अत्रैव वासोवत्सविषये संशयः—"अन्वाहार्यमन्तर्वेद्यामासाद्याभिमृशति" इत्यादिधर्मा भवन्ति न वेति। तत्रान्वाहार्यत्वाभावान्न भवन्तीति प्राप्ते, सिद्धान्तयति—

**अर्थापत्तेस्तद्धर्म स्यान्निमित्ताख्याभिसंयोगात् ॥ ३४ ॥**

तस्यान्वाहार्यस्य धर्माः यस्य तत् तद्धर्म, 'धर्मादनिच् केवलात्' इत्यनिच्। वासोवत्समित्यनुषज्यते। कुतस्तद्धर्मकता ? अर्थापत्तेः—अन्वाहार्यकार्यापन्नत्वात्। तच्च कुतः ? निमित्ताख्याभिसंयोगात् - निमित्तेन परिक्रयरूपप्रवृत्तिनिमित्तेन प्रवृत्ता आख्या दक्षिणाशब्दरूपा तया संयोगात्-दीक्षयति अन्यदीयकर्मणि आनमयतीति व्युत्पन्नदक्षिणाशब्दो हि प्रकृतान्वाहार्ये श्रुतः। स तावदत्राप्यविशिष्टः। अतः [1]अन्वाहार्यकार्यापन्नत्वाद्वासोवत्सेऽपि तद्धर्मा भवन्ति। प्रकृतावन्वाहार्यशब्दस्य परिक्रयद्वारापूर्वसाधनलक्षकत्वात्। अयमपि स्थानापत्त्या धर्मलाभो नवमसिद्ध एवोत्तरविवक्षया पुनरुच्यते ॥

इति सप्तमं वासोवत्सस्यान्वाहार्यधर्मकत्वाधिकरणम् ॥ ७ ॥

८

वासोवत्समन्वाहार्यधर्मकमिति स्थितम्। प्रकृतौ तावच्छ्रुतम्—"दक्षिणाग्नावन्वाहार्यं महान्तमपरिमितमोदनं पचति" इति। अवघातादिप्रयुक्तधान्यबीजादिहिंसा अज्ञातमपि वैगुण्यं यज्ञस्यापहरतीति अन्वाहार्यो नाम ओदनः। तं पाकेन कुर्यादित्यर्थः। "यद्वै यज्ञस्य क्रूरं यद्विलिष्टमन्वाहार्येणान्वाहरति इति तदन्वाहार्यस्या-

१. अन्वाहार्यकार्यकार्यापन्नत्वात्. अ.

न्वाहार्यत्वम्'' इति तैत्तिरीये। अयं पाको वत्सस्य देयस्य भवति न वेति संशयः। चोदकानुग्रहाच्छक्यत्वाच्च कर्तव्य एव वत्सस्य पाक इति प्राप्ते, सिद्धान्तयति—

**दाने पाकोऽर्थलक्षणः ॥ ३५ ॥**

"अन्वाहार्यमृत्विग्भ्यो ददाति" इति प्रकृतावन्वाहार्याख्यस्यौदनस्य दाने चोदिते सति पाकोऽर्थलक्षणः—आर्थिकः। तस्यायन्नियमविधिः—"दक्षिणाग्नौ श्रपयति" इत्यादिः। इह च वत्सस्य पाको न सम्भवति, विरोधात्। वत्सस्य हि दक्षिणात्वं श्रुतम्। अतो दानसमये वत्सस्वरूपेण भवितव्यम्। पाके तु कृते वत्सरूपमेव व्याहन्येत, विशसनेनोद्धृतमांसस्य पाके वत्सस्वरूपस्योपमर्दावश्यम्भावात्। न ह्यखण्डस्य वत्सस्यास्थ्यादिविषये पाकस्सम्भवति, न वा लोके दृश्यते। वत्सशब्दस्य वत्सप्रकृतिकमांसलक्षणायान्तु स एव दोषः। तस्मान्न वत्सस्य पाकः॥

इत्यष्टममाग्रयणे देयस्य वत्सस्य पाकाभावाधिकरणम् ॥ ८ ॥

९

वासोवत्समन्वाहार्यधर्मकम्। तत्र व्याघाताद्वत्सस्य पाको नेति स्थितम्। वाससि विरोधाभावात् पाके प्राप्ते, सिद्धान्तयति—

**पाकस्य चान्नकारितत्वात् ॥ ३६ ॥**

वासस्यपि पाकस्य निवृत्तिः। कुतः? अन्नकारितत्वात्-ओदनप्रयुक्तत्वात्। प्रकृतौ हि पाकः प्रदेयौदनस्वरूपनिष्पत्त्यर्थः। वाससि तु प्रयोजनाभावान्न पाकः। न च वासस्यपि पाकेन शुक्लरूपोत्पत्तिलक्षणविकारस्सम्भवतीति वाच्यम्। न हि विकारमात्रं पाकप्रयोजनम्, किन्त्वदनीयद्रव्यस्वरूपसिद्धिः। न च वाससि सा सम्भवति। तस्माद्वासस्यपि न पाकः॥

इति नवममाग्रयणे वाससि पाकाभावाधिकरणम् ॥ ९ ॥

१०

वासोवत्समन्वाहार्यधर्मकमिति स्थितम्। तत्र "अन्वाहार्यमभिधारयति" इत्यभिधारणमपि चोदकतः प्राप्नोति, बाधकाभावादिति प्राप्ते, सिद्धान्तयति—

**तथाभिधारणस्य वासोवत्से ॥ ३७ ॥**

पाकवदभिघारणस्यापि निवृत्तिः, प्रयोजनाभावात्। अभिघारणस्याशनीयद्रव्यस्वादिमार्थत्वात् ॥

इति दशममाग्रयणे वासस्यभिघाराभावाधिकरणम् ॥ १० ॥

११

ज्योतिष्टोमे श्रूयते—"गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा" इति। द्वादशाधिकं शतमित्यर्थः। 'तदस्मिन्नधिकमिति दशान्ताड्डः' इति डप्रत्ययः। किमिह गवादीनामेकैकस्य द्वादशशतम्? उत कस्यचिदेकस्य? अथवा माषाणाम्? यद्वा गवादिदशद्रव्येषु व्यासज्य द्वादशशतम्? किं वा एकजातीयस्य पशुजातीयस्य धान्यजातीयस्य वा कस्यचित्? आहोस्वित् पशुजातीयस्य कस्यचित्? उताहो गवादिचतुर्णामेव? उत वा गवामेव? इति संशयः। तत्र प्रथमपक्षयति—

**द्रव्यविधिसन्निधौ सङ्ख्या तेषां गुणत्वात् स्यात् ॥ ३८ ॥**

गवादिद्रव्यविधिसन्निधौ श्रूयमाणा द्वादशशतमिति सङ्ख्या तेषां-गवादीनां प्रत्येकं स्यात्। कुतः? गुणत्वात्-'तस्य' इति षष्ठ्यन्तेन गवादिद्रव्यं प्रधानत्वेनोद्दिश्य तद्गुणतया सङ्ख्याया विधानादित्यर्थः। तदित्येकत्वमुद्देश्यगतत्वान्न विवक्षितम्, गुणस्य च प्रतिद्रव्यमन्वयो न्याय्य इति भावः॥

अथ द्वितीयपक्षमुपक्षिपति—

**समत्वात्तु गुणानामेकस्य श्रुतिसंयोगात् ॥ ३९ ॥**

तुः प्रथमपक्षव्यावृत्तौ। नात्र तस्येति गवादिद्रव्याणि प्रधानत्वेनोद्दिश्य द्वादशशतमिति सङ्ख्या तद्गुणत्वेन विधीयते, येन सङ्ख्या प्रतिद्रव्यं निविशेत। किन्तु गवादिष्वेकस्य द्वादशशतं न तु प्रत्येकम्। कुतः? श्रुतिसंयोगात्-तस्येत्येकवचनादित्यर्थः। ननु गवादीनामेव तस्येति निर्देशोऽस्तु, एकत्वमुद्देशगतत्वादविवक्षितमित्यत आह—गुणानां समत्वादिति। विधेयां दक्षिणां प्रति गवादिद्रव्याणि द्वादशशतसङ्ख्या च गुणभूतानि। तेषाञ्च तावत् 'गुणानाञ्च परार्थत्वादसम्बन्धस्समत्वात् स्यात्' इति न्यायेन परस्परमन्वयो न सम्भवति। यदि हि तस्येति गवादिद्रव्याणि प्रधानत्वेनोद्दिश्य द्वादशशतमिति विधीयेत तर्हि दक्षिणाशब्दो नान्वयं लभेत। दक्षिणात्वस्यापि विधाने वाक्यभेदात्। ततश्च गवादिद्रव्याणि तद्गतद्वादशशतसङ्ख्या चेत्येवमनेकगुणविशिष्टा दक्षिणात्र विधीयते। तस्येति च विधेयां सङ्ख्यां विशिनष्टि। अत एकत्वं विवक्षितम्। तत्र चैकस्मिन्द्रव्ये निविष्टामेव सङ्ख्यामादाय तद्विशिष्टा-दक्षिणा दत्ता भवति। तस्माद् गवादिष्वेकस्यैव द्रव्यस्य द्वादश-

शतसङ्ख्या। तत्रापि कस्येत्यत्राप्येतदेवोत्तरम्-गुणानां समत्वादिति। दक्षिणां प्रति गुणत्वेन श्रुतानां गवादीनाम्मध्ये विनिगमनाविरहात् कस्यचिद् द्वादशशतमित्यर्थः॥

अथ तृतीयपक्षमुपक्षिपति—

**यस्य वा सन्निधाने स्याद्वाक्यतो ह्यभिसम्बन्धः॥ ४०॥**

यस्य माषपदस्य सन्निधौ "तस्य द्वादशशतम्" इति श्रुतम्, तेनैव माषपदेन तस्येत्येतदन्वेति, सन्निधिरेव तद्विनिगमक इति भावः। ननु दक्षिणाविधिप्रकरणे गवादिद्रव्याणामपि बुद्धिविपरिवृत्त्या प्रकृतिविशेषात्तेषु कस्यचिद् द्वादशशतमिति सम्बध्यतामित्यत आह—वाक्यतो ह्यभिसम्बन्ध इति। हि यतः, वाक्यतः—वाक्यमर्यादया अन्वयो भवति। वाक्यप्रमाणानुग्रहो भवतीति यावत्। पदान्तरसमभिव्याहारो वाक्यप्रमाणम्, समभिव्याहारश्चाव्यवहितोच्चारणम्। तच्च माषपदस्यैवास्ति, न तु गवादिपदानाम्। अतस्तदिति माषपदेनैवान्वयमर्हति। गवादिपदैरन्वये तु प्रकरणमेवानुगृह्येत। तत्र वाक्यप्रमाणं बाध्येत। प्रकरणाच्च वाक्यं बलीयः। ततश्च द्वादशशतसङ्ख्याकमाषद्रव्यम् गवादिद्रव्याणि तु श्रुततत्तदेकत्वबहुत्वसङ्ख्यानि दक्षिणेति फलति॥

अथ चतुर्थपक्षमुपक्षिपति—

**असंयुक्ता तु तुल्यवदितराभिर्विधीयन्ते तस्मात् सर्वाधिकारस्स्यात्॥ ४१॥**

तुः पक्षान्तरेऽस्त्विति द्योतयति। द्वादशशतसङ्ख्या केवलैर्माषैरसंयुक्ता न भवति। यतः, तुल्यवदितराभिर्विधीयन्ते। तुल्येति क्रियाविशेषणम्। स्वार्थे वतिः। यथा माषाश्चकारश्रुत्या विधीयन्ते, तथेतराभिः चकारश्रुतिभिः गवादिद्रव्याण्यपि विधीयन्ते। प्रतिद्रव्यं चकारनिर्देशबलेन गवादिमाषान्तद्रव्याणि परस्परसाहित्येनावगतानीति यावत्। एवञ्च तस्येत्यनेन केवलमाषाणां परामर्शो न सम्भवति, तेषामितरसाहित्येनैवोपस्थितत्वात्। ततश्च गवादिभिर्माषान्तैस्सर्वैरेव द्रव्यैर्मिलितैर्द्वादशशतसङ्ख्या सम्पाद्या। तस्येत्येकवचनन्तु गवादिसमुदायाभिप्रायम्। तस्य क्रतोरिति वार्थः, प्रकरणात्। अतस्सर्वाधिकारस्स्यात्—सर्वाणि गवादिद्रव्याण्यधिकृत्य सङ्ख्याविधिस्स्यात्॥

अथ पञ्चमं पक्षमुपक्षिपति—

**असंयोगाद्विधिश्रुतावेकजाताधिकारस्स्यात् श्रुत्यकोपात् क्रतोः ॥ ४२ ॥**

गौश्चाश्वश्चेत्यादिवाक्येषु गवादयः पशुजातीयाः व्रीह्यादयश्च धान्यजातीया निर्दिष्टाः। तत्र पशुजातीयस्य धान्यजातीयस्य वान्यतरस्यैकजातीयस्याधिकारः-तच्छब्देन परामर्शस्स्यात्, न तु सर्वेषाम्। कुतः? विधिश्रुतौ क्रतोरसंयोगात्। क्रतोरित्युपलक्षणं गवादिसमूहस्य। विधिश्रुतौ-गौश्चेत्यादिवाक्यजाते प्रतिपाद्यतया असंयोगात्-अश्रवणादिति यावत्। तच्छब्दस्य क्रतुपरत्वे वैयर्थ्याच्च, प्रकरणादेव तल्लाभात्। नन्वेवमपि गौश्चेत्यादौ पशूनां धान्यानाञ्चात्र बहूनामनुक्रमणात् कथं तदित्येकवचनमित्यत आह- श्रुत्यकोपादिति। पशुत्वजातिं धान्यत्वजातिञ्चालम्ब्य तदित्येकवचनस्याविरोधादित्यर्थः ॥

नन्वेवमपि पशुत्वस्य धान्यत्वस्य च गौश्चेत्यादावशाब्दत्वमविशिष्टमित्याशङ्क्यौचित्यात्तदुपस्थितिरित्याह--

**शब्दार्थश्चापि लोकवत् ॥ ४३ ॥**

एवञ्जातीयकश्शब्दार्थो लोकवत् प्रत्येतव्यः। लोके हि आन्ध्रकर्णाटक-महाराष्ट्रक-गुर्जर-द्राविड-गौडादिजातीया ब्राह्मणा यत्र वस्तुतस्सन्ति, तत्रैते दश भोज्या इत्युक्ते औचित्यादेकजातीयानामेव सङ्ख्या प्रतीयते, न तु भिन्नजातीयानां तद्वदिहापि ॥

अथ षष्ठं पक्षमुपक्षिपति—

**सा पशूनामुत्पत्तितो विभागात् ॥ ४४ ॥**

सा-द्वादशशतसङ्ख्या अनुक्रान्तगवादिपशूनाम्मध्ये एकस्य प्रत्येतव्या। पशुजातीयस्यैकस्येति यावत्, न तु धान्यजातीयस्य। कुतः? उत्पत्तितो विभागात्-व्रीह्यादिधान्यानामुत्पत्तितः स्वरूपतः विभागात् सङ्ख्यान्वयाभावात्। आढकादिद्वारैव तेषां सङ्ख्यान्वयात्। लोके हि पञ्चभिरश्वैः परिक्रीत इत्यादिव्यवहारः पशुषु दृश्यते, न तु पञ्चभिर्व्रीहिभिः परिक्रीत इत्यादिव्यवहारो धान्येषु दृश्यते।

किन्तु पञ्चभिराढकैः परिक्रीत इत्येवमाढकादिपरिमाणद्वारैव धान्येषु व्यवहारो दृश्यते। किञ्च दक्षिणाशब्दात् द्वादशशतसङ्ख्या भृतिद्रव्यगता प्रतीता। भृतिद्रव्यत्वञ्च धान्यबीजानां न स्वरूपतः, अत्यल्पत्वात्। न हि द्वादशशतसङ्ख्यैर्व्रीह्यादिधान्यबीजैः कश्चित् परिक्रीतो लोके दृश्यते। तस्माद् गवादिपशुजातीयस्यैकस्य द्वादशशतम् ॥

ननु तत्रापि कस्यैकस्येत्यत आह—

## अनियमो विशेषात् ॥ ४५ ॥

विनिगमनाविरहात् कस्यचिदेकस्य पशुजातीयस्य द्वादशशतमित्यर्थः। सप्तमपक्षपरमप्येतत्सूत्रम्। गवादिचतुर्णां मध्ये कस्य पशुजातीयस्येत्यनियमः, न त्वजावीनामपि। कुतः? विशेषात्–वैलक्षण्यात्। एकवचनान्ततच्छब्देन ह्येकवचनान्तोपात्ता गवादयश्चत्वार एव परामर्शमर्हन्ति, न तु तद्विलक्षणा बहुवचनान्तोपात्ता अजावयोऽपि ॥

अथाष्टमं पक्षमवलम्ब्य सिद्धान्तयति—

## भागित्वाद्वा गवां स्यात् ॥ ४६ ॥

वाशब्दोऽवधारणे। तस्येति गोरेव निर्देशात्, गवामेव द्वादशशतम्। कुतः? भागित्वात्–'भगश्श्रीकाममाहात्म्यवीर्य्ययत्नार्ककीर्तिषु' इति कोशः। माहात्म्यमिह भगशब्देन विवक्षितम्। भग एव भागः, स्वार्थिकोऽण्। सः अस्यास्तीति भागी, महोपकारकारित्वादिति यावत्। दधिपयःप्रभृतिभिर्दानपूजादिभिश्चेह परत्र च गावोऽतिमात्रमुपकुर्वन्ति। अतो द्वादशशतसङ्ख्याकतद्दानेनर्त्विजामुपकारभूयस्त्वं भवतीति गवामेव द्वादशशतम्। अश्वतरगर्दभौ तु नैवम्, तयोरपशुशब्दत्वात्। यद्यप्यश्वा बहुधनमूलाः प्रसिद्धाः, अश्वतरगर्दभावपि क्वचिद्देशेऽतिबलौ बहुमूल्यौ स्तः, तथापि "न केसरिणो ददाति" "नोभयतोदतः प्रतिगृह्णाति" इति निषेधान्न तेषां दानार्हता। तस्माद् गवामेव द्वादशशतम्। न चात्र विधिबलादेवोक्तनिषेधस्य क्रतुबहिर्विषयत्वमस्त्विति वाच्यम्। अस्य सङ्ख्याविधेरनिषिद्धगोव्यक्तिविषयत्वोपपत्त्या तद्बलेनाश्वादिनिषेधसङ्कोचायोगात् ॥

इतोऽप्येवमित्याह—

**प्रत्ययात् ॥ ४७ ॥**

गौश्चेत्यादिसन्दर्भे गोः प्रथमं प्रत्ययो भवति। तस्य च प्रथमप्रतीयमानस्य गोद्रव्यस्यातिक्रमे प्रमाणाभावात्तस्यैव तच्छब्देन परामर्शात् द्वादशशतसङ्ख्या ॥

इतोऽप्येवमित्याह—

**लिङ्गदर्शनाच्च ॥ ४८ ॥**

त्रिरात्रेऽहीने विकृतिसोमक्रतौ सहस्रदक्षिणेति विधिवाक्यशेषः "यावदस्य सहस्रस्य गौः" इति गोरनुवादो दृश्यते। अतोऽपि लिङ्गाद् गवामेव द्वादशशतम् ॥

इत्येकादशं ज्योतिष्टोमे गवामेव द्वादशशतदक्षिणाविधानाधिकरणम् ॥ ११ ॥

१२

ज्योतिष्टोमे द्वादशशतं गावो दक्षिणेति स्थितम्। तत्रैव श्रुतम्—"ऋत्विग्भ्यो दक्षिणां ददाति" इति। तत्र द्वादशशतं गावः ऋत्विग्भ्यस्समुदितेभ्योऽविभज्यैव यजमानेन दातव्याः? ततो यथायथमृत्विजो विभजेयुः; उत स्वयमेव यजमानेन यथायथं विभज्य दातव्याः? इति संशयः। चतुर्थ्या तावदृत्विजां सम्प्रदानकारकत्वमवगतम्। ततश्च विधेयां दानक्रियां प्रति गुणभूतत्वेनावगतानामृत्विजां बहुत्वं विवक्षितम्। बहुत्वमपि साहित्यनियतमिति बहुत्वेन गम्यमानं साहित्यमपि विवक्षितम्। एवञ्चाविभज्यैव द्वादशशतं गावः समुदितेभ्यः ऋत्विग्भ्यो दातव्याः, न तु प्रत्येकं विभज्येति प्राप्ते, सिद्धान्तयति—

**तत्र दानं विभागेन प्रदानानां पृथक्त्वात् ॥ ४९ ॥**

तत्र गोषु दानं विभागेन स्यात्। कुतः? प्रदानानां पृथक्त्वात्–कर्मणि ल्युट्, प्रदेयानां गवां पृथक्त्वात्–भिन्नत्वादित्यर्थः। सम्प्रदानानामृत्विजां पृथक्त्वात्। असमुदितत्वेनैव पृथक् प्रतीयमानत्वादित्यप्यर्थः। ऋत्विग्बहुत्वस्याविवक्षितत्वादिति यावत्। दानं ह्येतदानमनार्थमिति पूर्वपादे स्थितम्। आनमयितव्यानामृत्विजामानमनं प्रति प्राधान्येनोद्देश्यत्वसम्भवात्तदुद्देशेन दानमत्र विधीयते। ततश्चो-

द्देश्यभूतर्त्विग्बहुत्वस्य तत्साहित्यस्य चाविवक्षितत्वात् प्रतिप्रधानं गुणावृत्तेर्न्याय्यत्वाच्च विभज्यैव गाव एकैकस्मै ऋत्विजे दातव्याः। न चर्त्विजां सम्प्रदानकारकत्वात् दानक्रियां प्रति गुणत्वादुद्देश्यत्वासम्भव इति वाच्यम्, 'कर्मणा यमभिप्रैति स सम्प्रदानम्' इति प्रधानभूतकर्मकारकापेक्षयापि सम्प्रदानस्य प्रधानत्वावगमात्। किञ्च दीयमानं द्रव्यं प्रधानभूतानामृत्विजामात्मोपभोगक्षमं चेदेवानतिक्षमम्। ततश्चात्मीयं द्रव्यमृत्विजामुपभोगक्षमं कुर्यादिति दानविधेः पर्यवसितोऽर्थः। समुदितेभ्यश्चर्त्विग्भ्यो दाने क्रियमाणे दानशास्त्रार्थस्सम्पूर्णोऽनुष्ठितो न स्यात्। अविभागे कस्यापि ऋत्विजस्तदुपभोगासम्भवात्। अतो विभज्यैव गाव एकैकस्मै दातव्याः॥

इतोऽप्येवमित्याह—

## परिक्रयाच्च लोकवत्॥ ५०॥

लोके तावत् कर्मकरान् स्वकर्मणि नियुञ्जानस्तेभ्यस्समुदितेभ्यो यदि भृतिद्रव्याणि निर्दिशति-युष्मभ्यमेतावन्ति भृतिद्रव्याणि दास्यामीति, तदा मम कियत् मम कियदिति परस्परकलहान्न कोऽपि कर्मणि परिक्रीतो भवतीति न प्रवर्तते कर्मसु। यदि तुभ्यमेतत् तुभ्यमेतदिति प्रत्येकं विभज्य निर्दिशति, तदा निर्विचिकित्सं कर्मकराः परिक्रीता भवन्ति, तद्वदिहापि विभज्य गोभिः परिक्रय ऋत्विजां प्रत्येकमवगन्तव्यः। लोकवदिहापि विभज्य गोभिः प्रत्येकमृत्विजां परिक्रयावश्यम्भावाच्चेति सूत्रार्थः॥

ननूक्तरीत्या ऋत्विजां प्रधानत्वेनोद्देश्यत्वात्तद्गतसाहित्यस्याविवक्षितत्वात् प्रतिप्रधानञ्च गुणावृत्तेर्न्याय्यत्वादेकैकस्मै ऋत्विजे द्वादशशतं गावो दातव्या इत्यत आह--

## विभागञ्चापि दर्शयति॥ ५१॥

दक्षिणादानप्रकरणे कश्चिन्मन्त्रः पठ्यते—"तुथो वो विश्ववेदा विभजतु" इति। हे ऋत्विजः तुथो नाम कश्चिद् देवविशेषः विश्वं वेदः धनं यस्य सः, विश्वस्य वेदिता वा विश्ववेदाः वो युष्माकं दक्षिणां विभजतु इत्यर्थः। अयं मन्त्रो गवां विभागं दर्शयति--प्रकाशयति। अतोऽपि हेतोर्विभज्यैकैकस्मै दानम्। एकैकस्मै द्वादश-

शतदाने विभागवैयर्थ्यात्। किञ्च "चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्" इत्येकस्य चतुर्गृहीतस्य प्रयाजार्थत्वावगमबलात्तस्यावयवश एव प्रयाजेषु यथा विनियोगः, एवमिहापि दक्षिणेत्येकवचनसंयुक्तोत्पत्तिबलादेव द्वादशसङ्ख्याकानां गवां विभज्यैवर्त्विक्षु विनियोग इति युक्तम्। एतत्परिहारान्तरद्योतनार्थश्चकारः। तस्माद्विभज्यैव गवामेकैकस्मै ऋत्विजे दानम्॥

इति द्वादशं ज्योतिष्टोमे दक्षिणाया विभज्यदानाधिकरणम्॥१२॥

१३

ज्योतिष्टोमे द्वादशशतं गावो विभज्यर्त्विग्भ्यो देया इति स्थितम्। तत्र किं समशो विभागः? उत प्रयासानुरूपः? किं वा अर्द्धिनः तृतीयिनः पादिन इति समाख्यानुरूपः? इति संशये, प्रथमपक्षयति—

**समं स्यादश्रुतित्वात्॥५२॥**

सममिति क्रियाविशेषणम्। समं विभज्य गावो दातव्याः। कुतः? अश्रुतित्वात्—न विद्यते श्रुतिः श्रवणं यस्य सः अश्रुतिः कारणविशेषः, तस्य भावः अश्रुतित्वम्। विभागवैषम्ये कारणविशेषस्याश्रवणादिति यावत्॥

अथ द्वितीयपक्षमुपक्षिपति—

**अपि वा कर्मकृतं वैषम्यम्॥५३॥**

अपि वेति पक्षान्तरे। यद्यपि ज्योतिष्टोमे विभागवैषम्यं न श्रुतम्, तथापि प्रयासतारतम्यकृतं विभागतारतम्यं प्रत्येतव्यम्। प्रयासतारतम्यानुसारेण 'भृतिद्रव्यतारतम्यस्य लोकत एव सिद्धत्वात्॥

अथ सिद्धान्तयति-

**अतुल्यास्स्युः परिक्रये विषमाख्या विधिश्रुतौ परिक्रयान्न कर्मण्युपपद्यते दर्शनाद्विशेषस्य तथाभ्युदये॥ ५४॥**

सत्रभूतद्वादशाहे श्रूयते—"अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारम्, ततो होतारम्; ततस्तमध्वर्युं प्रतिप्रस्थाता, दीक्षयित्वार्द्धिनो दीक्षयति

१. भृतिद्रव्यस्य. ग.

ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः; ततस्तं प्रतिप्रस्थातारं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति—आग्नीध्रं ब्रह्मणः, प्रतिहर्तारमुद्गातुः, अच्छावाकं होतुः; ततस्तं नेष्टारमुन्नेता दीक्षयित्वा पादिनो दीक्षयति-पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः; ततस्तमुन्नेतारमन्यो दीक्षयति ब्रह्मचारी वा चार्यप्रेरितः" इति। अत्र ब्राह्मणाच्छंस्यादित्रयाणामर्द्धिसमाख्या, आग्नीध्रादित्रयाणां तृतीयिसमाख्या, पोत्रादित्रयाणां पादिसमाख्या गम्यते। अर्द्धमेषामस्तीत्यर्द्धिनः। तृतीयमेषामस्तीति तृतीयिनः, पादश्चतुर्थांश एषामस्तीति पादिनः। ब्रह्मण उद्गातुर्होतुरिति षष्ठीश्रुत्या ब्रह्मादित्रयाणां प्रधानत्वम्, ब्राह्मणाच्छंस्यादीनाञ्च तत्तत्पुरुषत्वमवगम्यते। प्रतिप्रस्थातृनेष्ट्रुन्नेतॄणामपि क्रमेणार्द्धितृतीयिपादिष्वध्वर्युकर्तव्यदीक्षणकर्तृत्वविधानादौचित्यादध्वर्युपुरुषत्वं प्रतिप्रस्थात्रादित्रयाणामर्द्धर्यादिसमाख्या च गम्यते। तदयमिह सूत्रार्थः-विधिश्रुतौ—"अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति" इत्यादिवाक्यजातेऽर्द्धिनस्तृतीयिनः पादिन इति विषमाख्याः-न्यूनाधिकांशपुरस्कारेण प्रवृत्ताः आख्याः श्रुता यथा, तथैव ज्योतिष्टोमे परिक्रये दक्षिणादाने दातव्या गावः अतुल्याः-विषमविभक्तास्स्युः। कुतः? परिक्रयात्-ल्यब्लोपे पञ्चमी। प्रवृत्तेरिति शेषः। परिक्रयः दक्षिणाद्रव्यं तत्पुरस्कृत्यार्धर्यादिसमाख्याप्रवृत्तेरिति यावत्। दक्षिणाभूतानां गवामर्द्धं भजन्त इत्यर्द्धिनः। एवं तृतीयिनः पादिनश्च। नन्वर्ध्यादिसमाख्याया द्वादशाहगतत्वात् कथं ज्योतिष्टोमे ततो विभागवैषम्यलाभ इत्यत आह—न कर्मण्युपपद्यत इति। सत्रभूतद्वादशाहे दक्षिणाभावेन तत्र तत्प्रकृतिनिमित्तकार्द्धर्यादिसमाख्याया उपपादयितुमशक्यत्वेन तत्प्रकृतिभूतज्योतिष्टोम एव दक्षिणाद्रव्यविषमविभागविशेषं पुरस्कृत्योपपाद्यत्वात् [1]प्रकृतौ तथा लाभः। नन्वर्द्धर्यादिसमाख्याबलाद् "ऋद्धिकामास्सत्रमासीरन्" इति फलस्यैवार्द्धर्याद्यंशकल्पना कुतो न स्यादित्यत आह—दर्शनाद्विशेषस्य तथाभ्युदय इति। अभ्युदये ऋद्धिरूपसत्रफलविषये विशेषस्य षष्ठे दर्शनात्-निश्चयात्। तत्र हि ऋद्धिरूपं सत्रफलमेकैकस्य कार्त्स्न्येनैव भवति, न त्ववयवशः परिषद्गामीति स्थितम्। ततश्चेहापि सत्रे श्रुतास्वध्वर्य्वादिसमाख्यासु तथोक्तरीत्यैव दक्षिणाभूतानां गवामर्द्धर्याद्यंशप्रवृत्तिनिमित्तकत्वमभ्युपेयमिति।

---

१. प्रकृतौ. नास्ति. क.

अत्रेदमवधेयम्—यद्यप्यध्वर्य्वादिसमाख्याभिर्महर्त्विजां प्रदेयद्रव्येयत्ता न स्फुटमवगतम्, तथाप्यध्वर्य्वादिशब्दानां सापेक्षशब्दत्वात् प्रधानर्त्विग्भ्यो यावद्दीयते तदपेक्षयार्द्धित्वादि गम्यते। यावति प्रधानर्त्विग्भ्यो दत्ते अर्द्धं तृतीयं पादमित्येवं विभागस्सिध्यति, तावानंशः प्रधानर्त्विजामित्यर्थसिद्धः। ततश्च द्वादशगावोऽध्वर्यवे, षट् प्रतिप्रस्थात्रे, चतस्रो नेष्ट्रे, तिस्र उन्नेत्र इत्येवमध्वर्युगणस्य पञ्चविंशतिर्गावः। एवं ब्रह्मगणस्य होतृगणस्योद्गातृगणस्य च ज्ञेयम्। इत्येवं शतं गावो विभज्य देयाः। द्वादशावशिष्यन्ते। तासाञ्चोक्तप्रकारकविभागस्यासम्भवात् कतिपयेभ्य एवर्त्विग्भ्यः प्रयासानुसारेण दानम्। याज्ञिकास्त्वेवंविधे विषये समुदितेभ्यो दत्तानां मूलत एव विभागमाहुः। युक्तञ्चैतत्; अन्यथाऽश्वादावेकस्मिन् का गतिः? अन्वाहार्यादेरप्राणिद्रव्यस्य तु समशो विभागस्याश्रुतत्वात्, प्रयासानुरूपो विभाग इत्याद्यूह्यम्॥

इति त्रयोदशं ज्योतिष्टोमे दक्षिणायास्समख्यानुसारेण विभज्यदानाधिकरणम्॥१३॥

१४

अस्ति भूर्नामैकाहो विकृतिः सोमः—"अथैष भूर्वैश्वदेवः" इति। विश्वदेवदेवताक इत्यर्थः। तत्र श्रूयते—"तस्य धेनुर्दक्षिणा" इति। किमियं धेनुः गौश्चाश्वश्चेत्यनुक्रान्तानां दशानामपि प्राकृतद्रव्याणां निवर्तिका? उत गवामेव? इति संशये, गवामेवेति पूर्वपक्षयति—

**तस्य धेनुरिति गवां प्रकृतौ विभक्तचोदितत्वात् सामान्यात्तद्विकारस्स्याद्यथेष्टिर्गुणशब्देन ॥५९॥**

"तस्य धेनुः" इति विहिता धेनुः गवामेव निवर्तिका स्यात्, न त्वश्वादीनामपि। कुतः? विभक्तचोदितत्वात्—प्रकृतौ "गौश्चाश्वश्च" इत्यादिना दशगवाश्वादिद्रव्याण्यनुक्रम्य "तस्य द्वादशशतं दक्षिणा' इति गवादीनां प्रत्येकमेव दक्षिणात्वेन विहितत्वात्। गवादिशब्दा हि जातिवचनाः, जातिं पुरस्कृत्य द्रव्येषु [1]प्रवृत्तेः। दक्षिणाशब्दस्तु गुणवचनः, भृतित्वलक्षणं पुरस्कृत्यैव तत्प्रवृत्तेः, दक्षयति अन्यदीय-

१. प्रवृत्तिः. ग.

कर्मसु प्रोत्साहयति प्रवर्तयतीति व्युत्पत्तेः। जातिगुणयोश्च जातिर्विशेष्यत्वेन भासते, गुणस्तु विशेषणत्वेन। यथा नीलमुत्पलं शुक्ला गौरित्यादिषु। विशेष्यमेव च प्रधानम्। ततश्च गवाद्युद्देशेन दक्षिणात्वं विधेयम्—गवादयो दक्षिणात्वेन कर्तव्या इति। न चैवं सति गवादीनां [1]प्रत्येकं शब्दोपात्तानामुद्देश्यत्वे सकृच्छ्रुतस्य दक्षिणाशब्दस्य तेष्वावृत्त्यैवान्वयस्योपपाद्यतया विध्यावृत्तेर्वाक्यभेदप्रसङ्ग इति वाच्यम्, चशब्दैस्साहित्येन प्रतीयमानानां गवामुद्देश्यतया तेषु युगपदेव दक्षिणाशब्दस्यान्वयसम्भवेनावृत्त्यभावात्। न चैवमुद्देश्यसाहित्यस्याप्यविवक्षितत्वादिदमयुक्तमिति वाच्यम्, साहित्यस्याविवक्षितत्वेऽपि दक्षिणात्वान्वयदशायां साहित्योपस्थितत्वमात्रेण युगपदेव दक्षिणात्वान्वयसम्भवेनावृत्त्यभावात्, पश्चात्तु परं साहित्यमविवक्षितम्। यथा "ऋद्धिकामास्सत्रमासीरन्" इत्यत्र बहूनां कामानामुद्देश्यानामेकशब्दोपादानमहिम्ना युगपदेव विधेयसत्रसम्बन्धः, पश्चात्तु ऋद्धिकामगतबहुत्वमविवक्षितमिति प्रत्येकमेव तेषां कार्त्स्न्येन फलम्, न त्ववयवशः परिषद्वामि, एवमिहापि। ननु प्रत्येकं दक्षिणात्वेऽपि धेनुः गवादिसर्वदक्षिणास्थाने निविशमाना गवादिसर्वनिर्वर्त्तिका स्यादित्यत आह—सामान्यात्तद्विकारस्स्यादिति। तस्य गोद्रव्यस्यैव धेन्वा विकारः-बाधस्स्यात्, सामान्याद्-धेनुत्वस्य गोत्वनियतत्वेन ततो गवामेवोपस्थितेस्तन्निवृत्त्यौचित्यादित्यर्थः। यथा "सौर्यं चरुं निर्वपेत्" इत्यत्रेतिकर्तव्यताकाङ्क्षायामिष्टित्वनियतेन निर्वापेणेष्टिरुपस्थितेति तद्विध्यन्त एव भवति, न तु सौमिकादिविध्यन्तः, एवमिहापि धेनुत्वेन गोत्वनियतेन गवामेवोपस्थितेस्तन्निवर्तिकैव धेनुः, अश्वादिद्रव्याणि तु न निवर्तन्ते॥

अथ सिद्धान्तयति—

**सर्वस्य वा क्रतुसंयोगादेकत्वाद्दक्षिणार्थस्य गौणानाञ्चार्थैकत्वादर्थे विकृतौ श्रुतिभूता स्यात्तत्समवाये हि कर्मभिः ॥ ५६ ॥**

वा शब्दोऽवधारणे। भूर्नामकविकृतिसोमक्रतौ प्रत्यक्षश्रुता धेनुः सर्वस्यैव गवाश्वादिप्राकृतद्रव्यस्य निवर्तिका स्यात्। हि यतः, तत्समवाये तया धेन्वा सम-

१. प्रत्येकं नास्ति. ग.

बाये सति आनता ऋत्विजः कर्मसु प्रवृत्तिमर्हन्ति, प्राकृतदक्षिणाकार्यस्यानमनस्य प्रत्यक्षश्रुतधेन्वैव सिद्धत्वात्। गवाश्वादिप्राकृतदक्षिणाद्रव्यं सर्वन्निवर्तत इति यावत्। नन्वेवं सति अंशौ 'द्वादश प्रथमगर्भाः पष्ठौहीर्ददाति" इत्याद्यपि निवर्तेतेत्यत आह—क्रतुसंयोगादिति। "तस्य धेनुर्दक्षिणा" इति धेनुदक्षिणायाः क्रतुसंयोगावगमेन प्रकृतिप्राप्तगवाश्वादिरूपक्रतुदक्षिणाया एव निवृत्तिः, न त्वङ्गदक्षिणाया अपीत्यर्थः। ननु प्रकृतौ गवाश्वादीनामुक्तरीत्या प्रत्येकमेव दक्षिणात्वात्तेषु धेनुत्वलिङ्गेन गवामेव धेनुर्निवर्तिका, नाश्वादीनामपीत्यत्राप्येतदेवोत्तरम्—क्रतुसंयोगादिति। प्रकृतिभूतज्योतिष्टोमक्रतोः[1] गवाश्वाद्यात्मकैकदक्षिणाया योगादित्यर्थः। तत्र हि गौश्चाश्वश्चेत्यादिना गवाद्युद्देशेन दक्षिणात्वन्न विधीयते, तथा सति दक्षिणाशब्दस्य गवादिबहुद्रव्येषु वृत्त्या बहुवचनापत्तेः, विशेषणशब्दानां विशेष्यशब्दसमानवचनत्वनियमात्, यथा-उत्पलानि नीलानीति। किन्तु दक्षिणेत्येकत्वविशिष्टा दक्षिणा विधीयते, विधेयगतत्वादेकत्वं विवक्षितम्। गवाश्वादयश्च गवां द्वादशशतञ्च तत्र गुणत्वेन विधीयन्ते—द्वादशशतगवात्मिका अश्वाद्यात्मिका चैका दक्षिणेति। विशिष्टविधानाच्च न वाक्यभेदः। ननु प्राधान्येन दक्षिणाविधावपि दक्षिणाशब्दस्य गवादिद्रव्येष्वेवात्र वृत्तेर्बहुवचनं दुर्वारमित्यत आह--एकत्वाद्दक्षिणार्थस्येति। दक्षिणाकार्यस्यानमनस्यैकत्वात्तदभिप्रायमेकवचनमित्यर्थः। दक्षिणाशब्देन हि भृतिरुच्यते। आनतिकरं द्रव्यं भृतिः। तत्र चाकृत्यधिकरणन्यायादानतिरेव मुख्योऽर्थः। तस्याश्चैकत्वादेकवचनम्। नन्वानतिरपि कार्यं गवादीनां प्रत्येकं भिद्यतां द्रव्यभेदादित्यत आह--गुणानाञ्चार्थैकत्वादिति। विधेयदक्षिणां प्रति गुणत्वेनावगतानां गवादीनां चकारश्रुतिभिः परस्परसाहित्येनैवैकस्मिन् आनतिलक्षणे कार्येऽन्वयादित्यर्थः। गवादीनां विधेयदक्षिणां प्रति गुणतया तद्विशेषणं चकारावगतसाहित्यं विवक्षितमिति भावः। तथा च गवाश्वादिषु दक्षिणात्वमग्नीषोमयोर्देवतात्ववद्व्यासज्यवृत्तीति दक्षिणेत्येकवचनम्। तथा च गवाश्वादिभिर्मिलितैरेका आनतिर्भवतीति प्रकृतौ ज्योतिष्टोमे स्थितिः। एवं तद्विकृतावप्यत्र धेन्वा प्रकृतस्यानतिलक्षणस्य [2]कार्यस्य समुदितगवादिसाध्यस्य सिद्धेर्दशापि गवादिद्रव्याणि निवर्तन्ते॥

---

१. क्रतौ. ग.　　२. लक्षणकार्यस्य. ग.

अथ यदुक्तं यथेष्टिर्गुणशब्देनेति, तत्राह--

**चोदनानामनाश्रयाल्लिङ्गेन नियमस्स्यात् ॥ ५७ ॥**

सौर्यादिविकृतिचोदनानाम् अनाश्रयात्-- प्रत्यक्षोपदिष्टधर्मविशेषानाश्रयणात् तत्र कुतो धर्मा ग्राह्याः-इष्टेर्वा सोमादिभ्यो वेति संशये, लिङ्गेन नियमः-इष्टिनियतेन निर्वापेण इष्टेरेव धर्मा ग्राह्याः, न तु सोमादित इति व्यवस्था युज्यते, इष्टेरन्यत्र सोमादौ निर्वापाभावात्। इह तु धेनुदक्षिणाया उक्तरीत्या गवादिसर्वद्रव्यकार्यापन्नत्वस्य निश्चितत्वाद्धेन्वा गवादिसर्वद्रव्यनिवृत्तेस्सिद्धत्वाद् गवादिषु कस्य धेन्वा निवृत्तिरिति संशयाभवाल्लिङ्गस्यैवानुन्मेष इति वैषम्यम् ॥

इति चतुर्दशं धेन्वा गवामेव बाधकत्वाधिकरणम् ॥१४॥

१५

सोमापहारे निमित्ते नैमित्तिकः कश्चिदग्निष्टोमसंस्थो रथन्तरसामा सोमयागविशेषो विहितः। तत्र श्रुतम्-"एकां गां दक्षिणां दद्यात्" इति। तथा सोमाभिदाहनिमित्तकक्रतौ "पञ्च गा दद्यात्" इति श्रुतम्। किमत्रैका गौः पञ्च च गावः प्राकृतानि गवाश्वादिद्रव्याणि सर्वाणि निवर्तयन्ति? उत गवामेव निवर्त्तिकाः? इति संशये, पूर्वपक्षयति—

**एकां पञ्चेति धेनुवत् ॥५८॥**

पूर्वाधिकरणरीत्या धेनोरिवैकस्या गोः पञ्चानाञ्च गवां प्राकृते दक्षिणाकार्ये विधानात्, प्रकृतौ च गवादिषु दक्षिणात्वस्य व्यासज्यवृत्तित्वात् प्रत्येकं दक्षिणात्वाभावात् समुदितानामेव दक्षिणात्वात् सर्वाण्येव प्राकृतानि गवाश्वादिद्रव्याणि निवर्तन्त इति स्थितः पूर्वपक्षः, सिद्धान्तो वक्ष्यते ॥

इति पञ्चदशे नैमित्तिकसोमगतदक्षिणया प्राकृतगोगतसङ्ख्या बाधाधिकरणे पूर्वपक्षः ॥१५॥

१६

अन्तराधिकरणान्तरं प्रस्तूयते-ज्योतिष्टोमे सन्ति सोमक्रयद्रव्याणि--"एकहायन्या गवा क्रीणाति" "हिरण्येन क्रीणाति" "अजया क्रीणाति" "धेन्वा क्रीणाति"

"वृषभेण क्रीणाति" "अनडुहा क्रीणाति" "मिथुनाभ्यां क्रीणाति" "वाससा क्रीणाति" इति। ज्योतिष्टोमविकृतिभूते साद्यस्के क्रतौ श्रुतम्—"त्रिवत्सस्साण्डस्सोमक्रयणः स्पर्द्धमानानाम्" इति। क्रीयतेऽनेनेति क्रयणः। करणे ल्युट्। त्रिवर्षो वत्सः त्रिवत्सः। अण्डाभ्यां सहितस्साण्डः, अनुत्कालितवृषणः। गवि स्त्रीव्यक्तौ मैथुनविषये परस्परमीर्ष्यया युध्यमानानां मध्ये कश्चित् त्रिवत्स इति योजना। किमत्र सोमक्रये प्राकृतस्य वृषभस्यैव निवृत्तिः? उतैकहायन्यादिसर्वद्रव्याणाम्? इति संशयः। पुङ्गवत्वसामान्याद्वृषभस्यैव निवृत्तिरिति प्राप्ते, सिद्धान्तयति—

## त्रिवत्सश्च ॥५९॥

त्रिवत्सोऽपि सर्वस्यैकहायन्यजाहिरण्यादिद्रव्यस्य निवर्तकः, न ऋषभस्यैव, एकहायन्यजादिद्रव्याणां समुदितानामेव सोमक्रयसाधनत्वस्य द्वादशस्य चतुर्थे 'समुच्चयोऽप्रयोगे द्रव्यसमवायात्' इत्यधिकरणे वक्ष्यमाणत्वात्। ततश्च दक्षिणात्ववत् क्रयसाधनत्वस्यापि व्यासज्य वृत्तित्वादेकहायन्यादि सर्वं निवर्तते॥

इतोऽप्येवमित्याह—

## तथा च लिङ्गदर्शनम् ॥६०॥

बहवस्साद्यस्काः। तत्र प्रथमस्साद्यस्क इतरेषां प्रकृतिरिति स्थितमष्टमाद्यपादे 'निकायिनान्तु पूर्वस्योत्तरेषु प्रवृत्तिः स्यात्' इत्यत्र। तत्रापरस्मिन् साद्यस्के श्रूयते—"स्त्री गौस्सोमक्रयणी व्यावृत्ता ह्येषां स्पर्धा" इति। हि यतः, स्त्रीगव्यां दत्तायां तद्विषये वृषभाणां स्पर्द्धा व्यावृत्ता भवति। स्पर्धास्पदस्त्रीगव्या अभावादित्यर्थः। यदि प्रथमसाद्यस्के त्रिवत्सः वृषभस्यैव केवलस्य निवर्तकस्स्यात्, तदा तुल्यन्यायतया तद्विकृतिभूते द्वितीयसाद्यस्के स्त्रीगव्यपि सामान्यादेकहायनीधेन्वोर्निवर्तिका स्यात्, नेतरेषामनडुहादीनाम्। ततश्च तेषां स्पर्द्धाप्रसक्तेरस्पर्द्धावादो नोपपद्येत। सर्वेषां क्रयद्रव्याणां निवृत्तौ तु स्त्रीगव्येकैव केवला भवतीत्यस्पर्धावाद उपपद्यते। अतः प्रकृतावपि प्रथमसाद्यस्के त्रिवत्सोऽप्येकहायन्यादिसर्वद्रव्यनिवर्तक इति विज्ञायते। अत्र सोमक्रयानुवादेन त्रिवत्स इति पुंस्त्वैकत्वत्रिवत्सत्वविशिष्टं द्रव्यं विधीयते। साण्ड इति त्वनुवादमात्रमिति न वाक्यभेदः॥

इति षोडशं त्रिवत्साधिकरणम् ॥१६॥

पञ्चदशाधिकरणशेषः

अथ 'एकां पञ्चेति धेनुवत्' इति यः पूर्वपक्षः स्थितः, तत्र सिद्धान्तयति–

**एके तु श्रुतिभूतत्वात् सङ्ख्यया गवां लिङ्गविशेषेण ॥६१॥**

तुरवधारणे। एकशब्दः प्राथम्ये। 'एके मुख्यान्यकेवलाः' इत्यमरः। "गौश्चाश्वश्च" इति वाक्ये प्रथमनिर्दिष्टा गावः एकां पञ्चेति गवां सङ्ख्यया बाधितप्राकृतसङ्ख्याकास्स्युः। गवां द्वादशशतसङ्ख्यैव बाध्यते, न तु गवादिसर्वद्रव्याणीति यावत्। कुतः? श्रुतिभूतत्वात्--एकां पञ्चेति प्रत्यक्षश्रुतत्वात्। न चात्र सङ्ख्याविशिष्टगोद्रव्यविधेस्तदितरद्रव्यनिवृत्तिरस्त्विति वाच्यम्, विशिष्टविधौ गौरवात्! एवञ्च दक्षिणादानानुवादेन सङ्ख्यामात्रमिह विधीयते। ततश्च प्राकृतद्वादशशतसङ्ख्याया एव बाधः न तु गवाश्वादिसर्वद्रव्यस्य। नन्वेवमपि एकां गामित्येकत्वसङ्ख्यया गवां द्वादशशतसङ्ख्यानिवृत्तिरस्तु, अश्वादीनां प्रकृतावेकत्वेनैव चोदिततया विकृताविह पुनरेकत्वविधिवैय्यर्थापत्या एकत्वसङ्ख्याया गोद्रव्य एव समावेशविज्ञानात्, पञ्चत्वसङ्ख्यायास्तु अश्वादिसाधारण्यं सम्भवति, तत्र तद्विधिवैय्यर्थ्याभावात्। गोदानानुवादेन सङ्ख्याविधौ तु विशिष्टोद्देशकृतवाक्यभेदः। अतः कथं तस्या गोमात्रसङ्ख्यानिवर्तकत्वमित्यत आह—लिङ्गविशेषेणेति। प्रकृतौ तावत् प्रातिपदिकभूतेन द्वादशशतशब्देन सङ्ख्या प्रतिपादिता, इहाप्येकशब्देन च प्रातिपदिकेन सङ्ख्याभिधीयते। अश्वादीनान्तु सङ्ख्या विभक्त्यैव प्रकृतावभिहिता। एवञ्च प्रातिपदिकाभिहितसङ्ख्यात्वसामान्यात् द्वादशशतसङ्ख्याया एव स्थाने निविशते। द्वादशशतसङ्ख्या च प्रकृतौ गोपरिच्छेदेनैवोपकारिकेति तत्स्थानापन्ने एकत्वपञ्चत्वसङ्ख्ये गोद्रव्यमेव परिच्छेत्तुमर्हत इति गोशब्दोऽनुवाद इति न विशिष्टोद्देशदोषः। अतो गवाश्वादीनि सर्वाण्यपि द्रव्याण्यत्र भवन्त्येव ॥

इति पञ्चदशाधिकरणसिद्धान्तः ॥

१७

राजसूये दशपेये सोमे श्रूयते-"प्राकाशावध्वर्यवे ददाति" इति। प्रकाशन्ते रूपाण्यत्रेति प्राकाशौ सौवर्णावादर्शौ। अधिकरणे घञ्। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घ इति भट्टभास्करः। किमेतौ प्राकाशौ गवाश्वादिप्राकृतसर्वद्रव्याणां[1] निवर्तकौ? उताध्वर्युभागस्यैव निवर्तकौ? इति संशयः। दक्षिणादानकार्ये

१. सर्वदक्षिणानां, ग.

प्राकृते प्राकाशयोः प्रत्यक्षविधानात्, प्रकृतौ च गवाश्वादिद्रव्येषु दक्षिणात्वस्य व्यासज्यवृत्तित्वात् 'तस्य धेनुः' इति पूर्वतराधिकरणन्यायेन धेनुवत् कृत्स्नदक्षिणाद्रव्यनिवृत्तिः। न चाध्वर्यवे ददातीत्यनूद्य प्राकाशविधानादध्वर्युभागस्यैव निवृत्तिरिति वाच्यम्, विशिष्टोद्देशे वाक्यभेदापातात्। एतेन प्राकाशयोरध्वर्युसम्बन्धस्य च विधिरित्यपि निरस्तम्। न चाध्वर्युशब्दस्यानन्वयादानर्थक्यम्, 'अध्वरं युनक्ति' इति व्युत्पत्त्या पृषोदरादित्वकल्पनया चाध्वर्युशब्दस्यर्त्विङ्मात्रपरतयानुवादत्वसम्भवात् इति पूर्वपक्षमुद्भाव्य निराकरोति—

**प्राकाशौ च तथेति चेत् अपि त्ववयवार्थत्वाद्विभक्तप्रकृतित्वाद् गुणेदन्ताविकारस्स्यात् ॥ ६२ ॥**

अपि त्विति पूर्वपक्षव्यावृत्तौ। न 'कृत्स्नदक्षिणाद्रव्याणां[1] प्राकाशाभ्यां निवृत्तिः, किन्तु गुणस्य-अध्वर्योः, इदन्ताविकारः--भागविशेषः तस्य विकारः—बाधः स्यात्। कुतः ? अवयवार्थत्वात्–ऋत्विग्विशेषानत्यर्थत्वात्[2]। अध्वर्यव इति चतुर्थ्या हि अध्वर्युरूपसम्प्रदानकारकमुद्दिश्य प्राकाशाविति प्राकाशरूपं[3] कर्मकारकं विधीयते। कारकस्य चोद्देश्यस्याध्वर्युणा विशेषणेऽपि[4] न वाक्यभेदः, पदस्यैकप्रसरत्वात्। केवलस्य कारकस्य सापेक्षतयोद्देश्यत्वस्य [।] पर्यवसानाच्च। "यस्योभयं हविरार्त्तिमार्च्छति" इत्यत्र हविषा आर्तिवत् प्रदेयसम्प्रदानसम्बन्धश्च दानक्रियाधीन इति ददातिरनुवादमात्रम्। अतश्चाध्वर्युसम्प्रदानकदाने प्राकाशविधानादध्वर्युभागस्यैव निवृत्तिः। ननु प्रकृतौ दक्षिणात्वस्य गवादिद्रव्येषु व्यासज्यवृत्तित्वात् समुदितरूपेणैव देयत्वादयमध्वर्युभाग इत्यनवधारणात् कथमध्वर्युभागस्यात्र निवृत्तिरिति तत्राह—विभक्तप्रकृतित्वादिति। अनुपदोक्तरीत्या अर्द्धिनः तृतीयिनः पादिन इति समाख्यानुरूपेणाध्वर्युभागनिर्धारणसम्भवादित्यर्थः। अत्र भाष्ये "हिरण्मयप्रकाशावध्वर्यवे ददाति" इत्यश्वमेधे श्रुतमित्युक्तम्, तच्छाखान्तराभिप्रायम्। न च हिरण्मयत्वस्यापि विधौ वाक्यभेदश्शङ्क्यः, प्राकाशशब्दस्यैव हिरण्मयदर्पणवाचितया हिरण्मयशब्दस्यानु-

---

१. कृत्स्नद्रव्याणां. क.    २. आनमनार्थत्वात्. क.
३. रूपकर्म ख.    ४. अध्वर्यु विशेषणेऽपि. क.

वादत्वात्। "अश्वाभिधानीमादत्ते" "वषट्कर्तुः प्रथमभक्षः" इत्यादिवत् समासपदोपात्तत्वेन पदस्य पृथक् प्रसरत्वाभावेन वाक्यभेदाप्रसक्तेश्च।

इति सप्तदशं प्राकाशाधिकरणम् ॥१७॥

१८

अस्त्युपहव्यो नाम कश्चिद्विकृतिसोमः। तत्र श्रूयते—"अश्वः श्वेतो दक्षिणा स ब्रह्मणे देयः" इति। "अश्वः श्यावो दक्षिणा स ब्रह्मणे देयः" इति पाठान्तरम्। श्यावः कपिशवर्णः। किमयमश्वः कृत्स्नप्राकृतदक्षिणानिवर्तकः? उत ब्रह्मभागनिवर्तकः? इति संशये, सिद्धान्तेनोपक्रमते--

**धेनुवच्चाश्वदक्षिणा स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य ॥ ६३ ॥**

अश्वदक्षिणाप्येषा "तस्य धेनुर्दक्षिणा" इति विहितधेनुवत् कृत्स्नदक्षिणानिवर्तिका। प्रकृतौ गवाश्वादिषु दक्षिणात्वस्य व्यासज्यवृत्तितया प्रत्यक्षश्रुतवैकृतदक्षिणया कृत्स्नदक्षिणाद्रव्यनिवृत्तेः 'तस्य धेनुरिति गवां प्रकृतौ' इत्यधिकरणेऽनुपदमेवोक्तत्वात्। इयांस्तु विशेषः--भूर्नामनि क्रतौ कृत्स्नं प्राकृतदक्षिणाद्रव्यं निवर्तते-सर्वेषामृत्विजां धेनुर्दक्षिणेति। इह तु स ब्रह्मणे देय इति वचनादश्वो ब्रह्मण एव दीयते। अन्येभ्यस्तु ऋत्विग्भ्यः तस्यापनयो भवति। यथा हिरण्यस्य कृष्णलाख्यस्य "सर्वं ब्रह्मणे परिहरति" इति वचनाद् अन्येभ्यः ऋत्विग्भ्योऽपनयस्तद्वत्। यथा चैतत्तथा पूर्वस्मिन् पादे 'सर्वत्वञ्च तेषामधिकारात् स्यात्' इत्यधिकरणे व्यक्तम्।

अथ पूर्वपक्षी प्रत्यवतिष्ठते--

**एके तु कर्तृसंयोगात् स्रग्वत्तस्य लिङ्गविशेषेण ॥६४॥**

एके-केचिद् देयद्रव्यविशेषा ब्रह्मभागात्मकाः अश्वदक्षिणया निवर्तन्ते, न तु कृत्स्नदक्षिणानिवृत्तिः। कुतः? कर्तृसंयोगाल्लिङ्गविशेषेण-कर्तृशब्देन ऋत्विग्विशेषो ब्रह्मा विवक्षितः। ब्रह्मसंयोगात्मकलिङ्गविशेषादित्यर्थः। ब्रह्मण इति ब्रह्मणे दीयमानोऽश्वस्तस्यैवानतिं कुर्वन् सामर्थ्यात्तद्भागमेव निवर्तयतीति यावत्। न चात्राश्वस्य दक्षिणात्वश्रवणात् प्रकृतौ च गवाश्वादिसमुदितद्रव्यात्मिकाया

दक्षिणाया एकत्वात्तन्निवृत्तिरेव युक्तेति वाच्यम्। ब्रह्मशब्दानुसारेणात्रत्यदक्षिणाशब्दस्य ब्रह्मभागमात्रपरतया नेयत्वादिति भावः। स्रग्वत्-स्रगित्युपलक्षणम्। यथा दशपेये "प्राकाशावध्वर्यवे ददाति, स्रजमुद्गात्रे" इत्यादिश्रुतमृत्विग्विशेषसंयुक्तं पूर्वाधिकरणरीत्या तत्तद्भागस्यैव निवर्तकं तद्वत्। इतरेषान्त्वृत्विजां यथाभागं प्रकृतदक्षिणा भवत्येव, चोदकतस्तत्प्राप्तेर्दुर्निवारत्वात्।

अथ सिद्धान्ती प्रत्याचष्टे--

अपि वा तदधिकाराद्धिरण्यवद्विकारस्स्यात् ॥ ६९ ॥

अपि वेति पूर्वपक्षपर्युदासे। ब्रह्मभागस्यैव निवृत्तिरित्येतन्न सम्भवति। कुतः? तदधिकारात्-तेन दक्षिणाशब्देनाधिकारात्-अश्वस्य विधानात्। एवञ्च दक्षिणात्वेन प्रत्यक्षश्रुतोऽश्वः कृत्स्नप्राकृतदक्षिणानिवर्तको भवति, प्रकृतौ दक्षिणात्वस्य गवाश्वादिसमुदितद्रव्यवृत्तित्वात्। न च ब्रह्मशब्दानुसारेण दक्षिणाशब्दोऽत्र ब्रह्मभागपरतया नेय इति वाच्यम्। यदि हि "अश्वः श्वेतो दक्षिणा" इति "स ब्रह्मणे देयः" इति चैकमेव वाक्यं स्यात्, तदा ब्रह्मशब्दबलेन सर्वभागसाधारणदक्षिणाशब्दस्य तद्भागपरत्वं स्यात्। अन्यथा परस्परविरुद्धार्थकत्वेनैकवाक्यतयानिर्वाहात्। द्वे ह्येते वाक्ये--"अश्वः श्वेतो दक्षिणा" इति प्रथमं वाक्यं क्रतुसंयुक्तम्, दक्षिणायाः [1]प्रकरणात् क्रतौ निवेशात्। "स ब्रह्मणे देयः" इति त्वपरं वाक्यं कर्तृसंयुक्तम्, स इत्यनेन तथावगमात्। एकवाक्यत्वे तु "प्राकाशावध्वर्यवे ददाति" इतिवदश्वः श्वेतो ब्रह्मणे दक्षिणेत्येव पठ्येत। एवञ्च भिन्नवाक्यत्वान्नैकस्याप्यन्यतरानुसारेण नयनम्। "प्राकाशावध्वर्यवे ददाति" इत्यादौ त्वेकवाक्यत्वादध्वर्युभागमात्रनिवृत्तिरिति वैषम्यम्। एवञ्च कृत्स्नक्रतुदक्षिणाया अश्वदक्षिणया निवृत्तौ सत्यां हिरण्यवत्-कृष्णलाख्यहिरण्यकेष्टौ "सर्वं ब्रह्मणे परिहरति" इति वचनाद्यथा पुरुषान्तरसम्बन्धबाधः, तथात्रापि "स ब्रह्मणे" इति वाक्यात् तद्विकारस्स्यात् पुरुषान्तरसम्बन्धबाधस्स्यात्। न च "गौश्चाश्वश्च" इति प्राकृताश्वानुवादेन श्वेतत्वादिगुणविध्युपपत्तेः न कृत्स्ननिवृत्तिरिति वाच्यम्। एवं सति "अश्वः श्यावो रुक्मललाटो दक्षिणा" इत्यत्रानेकगुणविधौ वाक्यभेदप्रसङ्गात्। एवञ्चाश्वमात्रस्य प्राकृतदाने विधौ गुणोपादानस्य वैय्यर्थापत्त्या प्राकृतदानस्यैवापूर्वं प्रत्यङ्गीकारेण तत्तद्

१. प्रकरणात्. नास्ति. क.

गुणकामाविष्टस्य विधिः। एवञ्च प्रकृतिसम्बन्धिविजातीयदान एवाश्वविधानाद्धेनुवत् सर्वदक्षिणानिवृत्तिः, वचनाच्च पुरुषान्तरापनयः। पुरुषान्तराणान्तु प्रार्थनादिलौकिकोपायेनानतिस्सम्पाद्या ॥

इत्यष्टादशमुपहव्याधिकरणम् ॥ १८ ॥

१९

उक्तमधिकरणमन्यत्राप्यतिदिशति—

**तथा च सोमचमसः ॥ ६६ ॥**

"औदुम्बरस्सोमचमसो दक्षिणा स प्रियाय सगोत्राय ब्रह्मणे देयः" इति ऋतपेये श्रुतस्सोमचमसोऽपि पूर्वाधिकरणन्यायेन कृत्स्नदक्षिणानिवर्तकः पुरुषान्तरेभ्यश्चापनीयते ॥

इतोऽप्येवमित्याह—

**सर्वविकारो वा क्रत्वर्थे प्रतिषेधात् पशूनाम् ॥ ६७ ॥**

वा शब्दश्चार्थे, व्युत्क्रमश्च प्रतिषेधादित्यनन्तरमन्वेति। ऋतपेये क्रत्वर्थे दक्षिणात्वेन सोमचमसे प्रत्यक्षश्रुते सर्वविकारः—कृत्स्नप्राकृतदक्षिणाबाधस्स्यात्। कुतः? पशूनां प्रतिषेधात्—"ऋतं वै सोमः अनृतं पशवः, यत्पशून् दद्यात् सोऽनृतं कुर्यादौदुम्बरस्सोमचमसो दक्षिणा" इति पशुदानं प्रतिषिध्य सोमचमसो विधीयते, निन्दया प्रतिषेधावगमात्। एवञ्चास्मादपि प्रतिषेधाल्लिङ्गात् कृत्स्नप्राकृतदक्षिणानिवृत्तिर्गम्यते। ब्रह्मभागमात्रस्य निवृत्तौ हीतरेभ्य ऋत्विग्भ्यो गवाश्वादयः पशवो दीयेरन्निति [1]तत्प्रतिषेधानुवादानुपपत्तिस्स्पष्टैव। भाष्ये तु पूर्वसूत्रं प्राकाशवद् भागविशेषस्यैव निवृत्तिरिति पूर्वपक्षपरतया योजयित्वा इदं सूत्रं कृत्स्ननिवृत्तिरिति सिद्धान्तपरतया योजितम् ॥

नन्वस्तु ब्रह्मभागस्यैव सोमचमसेन निवृत्तिः, "यत् पशून् ब्रह्मणे दद्यात् सोऽनृतं कुर्यात्" इत्येवं पशुदानप्रतिषेधानुवादस्य ब्रह्मभागमात्रनिवृत्तावपि सम्भवादित्याशङ्क्य निराकरोति—

**ब्रह्मदानेऽविशिष्टमिति चेदुत्सर्गस्य क्रत्वर्थत्वात् प्रतिषिद्धस्य कर्म स्यान्न च गौणः प्रयोजनमर्थस्स दक्षिणानां स्यात् ॥ ६८ ॥**

---

१. तत्प्रतिषेधानुपपत्तिः. क.

"सः यत्पशून्दद्यात्" इत्यनुवादः सर्वर्त्विक्साधारण्येन पशूनां स्यात्, न तु ब्रह्मभागात्मकपशूनामेव। यदि हि यत् पशून् ब्रह्मणे दद्यात् सोऽनृतं कुर्यात्, अतो ब्रह्मणे सोमचमसो दक्षिणेत्यर्थस्स्यात्, तथा सति दक्षिणाशब्दस्य प्रयोजनमर्थो गौण आश्रितस्स्यात्। प्रकर्षेण योज्यते नियोज्यते आनम्यते अनयेति प्रयोजनम्-ब्रह्मभागो दक्षिणाशब्दस्य गौणोऽर्थः, न तु मुख्यः; ब्रह्मभागस्य दक्षिणैकदेशत्वात्। न च सम्भवति मुख्ये गौणाऽर्थ आश्रयितुं युज्यते, तथा हि दक्षिणाशब्देन सर्वर्त्विगानमनार्थद्रव्यवाचिना प्राकृतदक्षिणामनूद्य तत्कार्ये चमसविधिः। कुतः? उत्सर्गस्य क्रत्वर्थत्वात्-प्रकृतौ गवादिसर्वद्रव्यात्मकदक्षिणायाः सर्वर्त्विगानमनद्वारा क्रत्वर्थत्वावगमेनेहापि उत्सर्गस्य—उत्सृज्यमानस्य दीयमानस्य चमसस्य सर्वर्त्विगानमनद्वारैव क्रत्वर्थत्वात्। ब्रह्ममात्रानमनार्थत्वे च दक्षिणाशब्दस्सोमचमसे दक्षिणैकदेशे गौणस्स्यात्। प्रकृतौ सर्वर्त्विगानमनार्थेषु गवाश्वादिसमुदितद्रव्येषु व्यासज्य वृत्तित्वस्यानुपदमेव व्यवस्थापितत्वात्। ततश्च यत् पशून् दद्यादृत्विग्भ्यः सोऽनृतं कुर्यात्, अतस्सोमचमसस्सर्वर्त्विग्भ्यो दक्षिणेत्येवार्थ आश्रयणीयः। एवञ्च चमसे विहिते इतरकृत्स्नदक्षिणानिवृत्तौ सर्वेभ्य ऋत्विग्भ्यश्चमसस्य दाने प्राप्ते 'ब्रह्मणे देयः' इति पुरुषान्तरापनयविधिः। ब्रह्मभागमात्रनिवृत्तौ तु इतरेभ्य ऋत्विग्भ्यो गवादिपशवो दीयेरन्निति यत् पशूनिति प्रतिषिद्धस्य कर्मणोऽनुष्ठानं स्यात्। तस्मात् सोमचमसेन कृत्स्नप्राकृतदक्षिणानिवृत्तिरिति स्थितम्॥

ननु पूर्वपक्षेऽप्येतत्प्रयोजनन्तुल्यम्। प्रकृतौ हि सर्वभागसाधारणेन गवादिसमुदितद्रव्यवाचकत्वेन दक्षिणाशब्दः, स तावदिह श्रूयमाणः कृत्स्नामेव दक्षिणामुपस्थापयति, न तु तदेकदेशभूतब्रह्मभागमात्रम्। ततश्च सत्यपि ब्रह्मसंयोगे सोमचमसः कृत्स्नामेव दक्षिणां निवर्तयेत्, दक्षिणाभूतस्यैव [सम्प्र] योगात्। एतेन ब्रह्मभागे दक्षिणावयवे दक्षिणाशब्दस्य लक्षणेत्यपास्तम्। एवञ्च कस्यापि पदस्य लक्षणां विना प्राकृतकृत्स्नदक्षिणानिवृत्तिः चमसस्य पुरुषान्तरेभ्योऽपनयश्च लभ्यत इति पूर्वपक्षस्य सिद्धान्तान्न फलभेद इत्याशङ्क्य पूर्वपक्षे प्रयोजनं दर्शयति—

**यदि तु ब्रह्मणस्तदूनं तद्विकारस्स्यात् ॥६९॥**

तुः सिद्धान्ताद्वैषम्ये। यद्यौदुम्बरस्सोमचमसो ब्रह्मणे दक्षिणात्वेन देय इत्येकवाक्यत्वं दक्षिणाशब्दश्च मुख्यवृत्त्यैव सन् सर्वभागसाधारण्येन प्राकृतकृत्स्न-

दक्षिणाद्रव्योपस्थापकः, तदा तदूनं-ब्रह्मभागवर्जम्, तद्विकारः-तेषामितरभागानां विकारः-विभज्य क्रिया यथायथं विभज्यदानं स्यात्। तथा हि-औदुम्बरस्सोम-चमसः क्रतोर्दक्षिणा नान्यत्, स च ब्रह्मणे देयो नान्येभ्य इत्येवं चमसस्य कृत्स्न-दक्षिणात्वेन ब्रह्मसम्बन्धित्वेन च विधानाद्वाक्यभेदः। अतो ब्रह्मभागमात्रपरस्सन् दक्षिणाशब्दोऽनुवाद इति वक्तव्यम्-योऽयं ब्रह्मणे दक्षिणाभागो देयस्स औदुम्ब-रसोमचमसात्मक इत्यनुवादत्वाच्च दक्षिणाशब्दस्य न लक्षणा दुष्यति। अत्र च ब्रह्मणे सोमचमस इत्येव विधिः, इतरस्सर्वोऽप्यनुवाद इति न विशिष्टोद्देशदोषः। न चैवमपि ब्रह्मणे सोमचमसो देयः, स चौदुम्बर इति विधेयभेदाद्वाक्यभेदो दुर्वारः, तथा च दक्षिणाशब्दस्य मुख्यार्थत्वाय ब्रह्मसम्प्रदानकौदुम्बरचमसात्मकदक्षिणा देयेत्येवं विशिष्टविधिरेव युक्त इति कृत्स्ननिवृत्तिरेव फलतीति वाच्यम्। विशिष्ट-विधावपि हि ब्रह्मशब्दस्य समभिव्याहारबलेन ब्रह्मभागात्मकदक्षिणाया एव विधानम्, न तु कृत्स्नक्रतुदक्षिणायाः, कस्य दक्षिणेति दक्षिणाशब्दस्य प्रतिसम्बन्ध्य-पेक्षायाः श्रुतब्रह्मशब्देनैव शान्त्युपपत्तौ प्रकरणवशेन क्रतोरिति पदकल्पनाया अनुचि-तत्वात्। ब्रह्मभागस्य च क्रत्वपेक्षया दक्षिणावयवत्वेऽपि ब्रह्मापेक्षया भृतिद्रव्यत्वात्तत्र मुख्य एव दक्षिणाशब्द इति न लक्षणा। अतो ब्रह्मभागस्यैव निवृत्तिः पूर्वपक्षे फलति॥

अथ सिद्धान्ते प्रयोजनमाह—

## सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥७०॥

वा शब्दोऽवधारणे। "औदुम्बरस्सोमचमसो दक्षिणा" इत्येकं वाक्यम्। तत्र कस्य दक्षिणेति प्रतिसम्बन्ध्याकाङ्क्षायां "स ब्रह्मणे देयः" इत्युत्तरवाक्य एव ब्रह्मशब्दस्य श्रुतत्वादस्मिन् वाक्ये प्रतिसम्बन्धिवाचकशब्दा[1]भावात् क्रतोरित्येव गम्यते। एवञ्च सोमचमस इत्येवञ्जातीयानां दक्षिणानां क्रत्वर्थत्वात् प्राकृतदक्षिणा-द्रव्यं सर्वं निवर्तते। पुरुषापनयादिति तु ल्यब्लोपे पञ्चमी। "स ब्रह्मणे देयः" इत्युत्तरवाक्यन्तु पुरुषान्तरापनयमभिप्रेत्य प्रवृत्तमिति। तथा च सिद्धान्ते प्राकृत-

---

१. पद. क.

दक्षिणा कृत्स्ना निवर्तते । सोमचमसस्तु ब्रह्मणे देयः । आनतिस्तु सर्वेषां प्रार्थनाभिर्लौकिकोपायैस्सम्पाद्येति फलति ॥

इत्येकोनविंशं सोमचमसाधिकरणम् ॥१९॥

२०

वाजपेये श्रूयते–"सप्तदश रथान् ददाति, सप्तदशानांसि, सप्तदशाश्वान्, सप्तदश हस्तिनस्सप्तदश निष्कान्, सप्तदश दासीस्सप्तदशाजास्सप्तदशावीस्सप्तदश वासांसि, सप्तदश गवां शतानि" इति । "यजुर्युक्तमध्वर्यवे ददाति" इति च । "इन्द्रस्य वज्रोऽसि" इत्यादिमन्त्रैस्सञ्जीकृतो रथो यजुर्युक्तः । स किं तदितरद्रव्येष्वध्वर्युभागान्निवर्तयति ? न वा ? इति संशये, पूर्वपक्षयति—

**यजुर्युक्ते त्वध्वर्योर्दक्षिणाविकारस्स्यात् ॥७१॥**

तुः पूर्ववैषम्ये । "औदुम्बरस्सोमचमसो दक्षिणा" इत्यादौ दक्षिणाशब्दात् [1]कृत्स्नदक्षिणान्तरनिवृत्तिः, "स ब्रह्मणे देयः" इति वाक्यान्तराच्च पुरुषान्तरापनय इति । इह तु यजुर्युक्तरथदानविधौ तथाविधवाक्यान्तराभावाद् दक्षिणाशब्दाभावादनोऽश्वहस्त्यादिदानाम्नानाच्च न दक्षिणान्तरनिवृत्तिः । नापि पुरुषान्तरापनयः, किन्त्वनुपदोक्तप्राकाशाधिकरणन्यायेनाध्वर्योः तदितरदक्षिणाभागस्य निवृत्तिस्स्यात् । अध्वर्यवे यजुर्युक्तमेव रथं दद्यान्नान्यदिति नियमात् सप्तदशरथान् ददातीति यजुर्युक्तस्यापि दानमृत्विग्भ्यः प्राप्तमेव, तत्राध्वर्यव एवेति नियम्यते ॥

अथ सिद्धान्तयति—

**अपि वा श्रुतिभूतत्वात् सर्वासां तस्य भागो नियम्येत ॥७२॥**

अपि वेति पूर्वपक्षव्यावृत्तौ । सर्वासां–रथानोऽश्वहस्त्यादिव्यक्तीनां मध्ये तस्य–अध्वर्योः भागः नियम्येत, न तु यजुर्युक्तस्तन्निवर्तक इति यावत् । कुतः ? श्रुतिभूतत्वात्–'सप्तदशरथान्ददाति अनांसि ददाति' इत्यादिनाविशेषश्रुतत्वात् । अविशेषश्रुतानाञ्च तेषां यथाभागं चोदकतस्सर्वर्त्विक्षु प्राप्तेः यजुर्युक्तमेवाध्वर्यव इति नियमाश्रयणे च सर्वद्रव्येष्वध्वर्युप्रापकचोदकबाधापत्तेः । "प्राकाशावध्वर्यवे

---

१. कृत्स्नदक्षिणानिवृत्तिः. क.

ददाति" इत्यत्र तु प्राकाशावपूर्वावध्वर्योरानतिकरत्वेन विधीयमानौ प्राकृतमध्वर्युभागं बाधत इति युक्तम्। "सप्तदशरथान् ददाति" इति रथानां दानस्य प्रत्यक्षविहितत्वात् यजुर्युक्तमध्वर्यव एवेति लाभान्नाध्वर्योर्देयान्तरनिवृत्तिरिति वैषम्यमिति बोध्यम् ॥

इति विंशं यजुर्युक्ताधिकरणम् ॥२०॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायामध्वरमीमांसाकौतूहलवृत्तौ
दशमस्याध्यायस्य तृतीयः पादः ॥

# अथ दशमाध्यायस्य चतुर्थः पादः

निर्मथ्य निगमसिन्धून्विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

१

तदेवं प्रथमद्वितीयतृतीयपादेषु बाधो विचारितः । अथास्मिश्चतुर्थपादेऽभ्युच्चयो विचार्यते । सन्ति नक्षत्रेष्टिषूपहोमाः–"सोऽत्र जुहोति, अग्नये स्वाहा, कृत्तिकाभ्यस्स्वाहा, अम्बायै स्वाहा, दुलायै स्वाहा, नितत्न्यै स्वाहाभ्रयन्त्यै स्वाहा, मेघयन्त्यै स्वाहा, वर्षयन्त्यै स्वाहा चिपुणीकायै स्वाहा" इत्यादयः । अत्र मन्त्राः केवलमाम्नाता न त्वितिकरणेन विनियुक्ता इति केचित् । तन्न; तैत्तिरीयशाखायामितिकरणेनैव विनियुक्तत्वात् । किमेतैर्वैकृतैरुपहोमैः "नारिष्ठान् होमान् जुहोति" इति प्राकृता उपहोमा बाध्यन्ते ? समुच्चीयन्ते वा ? इति संशयः । यथा "परिधौ पशुं नियुञ्जन्ति" इति पशुः, तथा नारिष्ठहोमकार्ये उपहोमानामेषां विधानात् तत्कार्यापन्नत्वम् । एवञ्च वैकृतैरुपहोमैः प्राकृतनारिष्ठहोमकार्ये निर्वर्तिते सति नारिष्ठहोमा निवर्तन्ते, तत्कार्यस्यान्यत एव सिद्धत्वात्, प्राकृताकार्यमुखेनैव प्राकृतपदार्थानां विकृतावतिदेशाभ्युपगमादिति प्राप्ते, सिद्धान्तयति—

**प्रकृतिलिङ्गासंयोगात् कर्म संस्कारं विकृतावधिकं स्यात् ॥ १ ॥**

विकृतौ उपहोमात्मकं कर्म प्राकृतनारिष्ठादिहोमेभ्योऽधिकं स्यात् । तैस्समुच्चीयत इति यावत् । कुतः ? प्रकृतिलिङ्गासंयोगात्—प्राकृतकार्योपस्थापकप्रमाणाभावादित्यर्थः । कार्यापत्तौ हि पञ्च प्रमाणानि । प्राकृतकार्यस्य स्वशब्दत उपादानमेकम् । "परिधौ पशुं नियुञ्जीत" इत्यत्र हि नियोजनं प्राकृतकार्यं शब्दत उपात्तमिति तत्कार्यापत्तिः परिधेर्युज्यते । न चात्र नारिष्ठहोमकार्यवाचकश्शब्दोऽस्ति, येन वैकृतोपहोमानां तत्कार्यापत्तिस्स्यात् । तथा "षडहे संस्थिते मध्वाशयेत्" इत्यत्र षडहाभावद्योतकसंस्थितशब्दात् षडहाभावे विधीयमान-

मध्वशनं तत्कार्यापन्नमित्येवमभावे विधिरपि कार्यापत्तौ प्रमाणम्। तदपि नेह सम्भवति, इह नारिष्ठाभावद्योतकशब्दाभावात्। तथा "न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम्" इत्यत्र प्रतिषिध्य विधानं तत्कार्यापत्तौ प्रमाणम्। नेह तदस्ति, नारिष्ठहोमान् प्रतिषिध्येहोपहोमविधानाभावात्। एवं कार्यापत्तौ प्रमाणत्रयं निराकृत्य प्रत्यक्षमनुमानञ्चावशिष्टं प्रमाणद्वयं निराकर्तुमाह—संस्कारमिति। हेतुगर्भं कर्मविशेषणम्। संस्क्रियते—अदृष्टातिशयविशेषवत्तया क्रियतेऽनेनेति संस्कारम्। बाहुलकः करणे घञ्। 'घञजबन्ताः पुंसीति तु प्रायिकं सम्बन्धमनुवर्तिष्यत इति महाभाष्ये प्रयोगदर्शनात्' इति कैय्यटः। प्राकृतं वैकृतञ्चोपहोमात्मकं कर्मादृष्टार्थमिति यावत्। एवञ्च वैकृतोपहोमानां प्राकृतनारिष्ठहोमकार्यापत्तिः प्रत्यक्षसिद्धेति निरस्तम्। दृष्टार्थत्वे हि नीवाराणां हविर्निष्पत्तिलक्षणकार्यापत्तिवत् प्रत्यक्षसिद्धत्वं स्यात्। 'तथा संस्कारे युज्यमानानाम्' इति नावमिकाद्यपादीयाधिकरणरीत्या नखनिर्भिन्नचरौ निर्भेदनस्याप्यवघातवत्तण्डुलनिष्पत्तिद्वारापूर्वसाधनविशेषत्वान्नखानामपि तत्साधनानामुलूखलमुसलस्थानापत्तिरनुमीयते, तद्वदिहापीत्यपि निरस्तम्, अवघातवन्निर्भेदनस्यापि तण्डुलनिष्पादकत्वस्य प्रत्यक्षदृष्टतया तत्साधननखानामुलूखलमुसलस्थानापत्त्यनुमानेऽपीहादृष्टार्थतया तदसम्भवात्। न च होमत्वसामान्यादिह नारिष्ठकार्योपस्थितिरिति वाच्यम्, होमत्वस्याग्निहोत्रपार्वणहोमादिसाधारणत्वेन नारिष्ठहोमोपस्थापकत्वासम्भवेन तत्कार्योपस्थापकत्वस्य दूरापास्तत्वात्। "शरमयं बर्हिः" इत्यत्र तु कार्यवाचकशब्दाभावेऽपि बर्हिश्शब्देन बर्हिःकार्यं लक्षयित्वा तत्रैव शराणां विधानाद् बर्हिःकार्यापत्तिः। एवञ्च प्राकृतवैकृतोपहोमानां भिन्नादृष्टकार्यकत्वादतिदेशोपदेशाभ्यां समुच्चयः। न चैवमपि गृहमेधीयाज्यभागन्यायेन विकृतिभूतनक्षत्रेष्टिभावनेतिकर्तव्यताकाङ्क्षायाः प्रत्यक्षश्रुतैरुपहोमैरेव शान्तत्वेन प्राकृतेतिकर्तव्यताया अप्रवृत्तेः, कथमिह प्राकृतोपहोमसमुच्चय इति वाच्यम्, वैषम्यात्। प्रकृतौ ह्युपकारकत्वेन क्लृप्तयोराज्यभागयोः गृहमेधीये पुनर्विधानबलात्तदितरेतिकर्तव्यतानिराकाङ्क्षीकरणशक्तिरस्ति[1]। इह तु विकृतिविधिदशायामुपहोमानामुपकारकत्वेन क्लृप्तत्वाभावान्न तच्छक्तिरिति। न च सोमयागविधिदशायामेव दीक्षणी-

१. अस्तु. ग.

यादीनामभिषवादीनाञ्चारात् सन्निपत्योपकारकत्वकल्पनया यथेतिकर्तव्यतानिराकाङ्क्षीकरणशक्तिस्तद्वदिहाप्यस्त्विति वाच्यम्। सोमेऽभिषवादिसन्निपातिधर्माणां पौष्कल्येनाम्नातत्वेन तैरुपकाराकाङ्क्षाशान्तावपि, इह नक्षत्रेष्टिषु द्रव्यदेवतयोराम्नातत्वेनावघातादिसन्निपातिधर्माणामनाम्नातत्वेनोपकाराकाङ्क्षायां सन्निहितानप्युपहोमानक्लृप्तोपकारकत्वादुपेक्ष्य प्राकृतोपकारेण तद्द्वारकप्राकृतपदार्थैश्च भावना सम्बध्यते। तैरेव विकृतिभावनाया निराकाङ्क्षत्वेऽपि सन्निध्याम्नातानामुपहोमानां समुच्चय इति।

नन्वेवमपि "शरमयं बर्हिः" इत्यत्रापि मयटः प्राचुर्यार्थकत्वाच्छरप्राचुर्यस्य च कुशाबाधेनैवोपपत्तेस्समुच्चयो दुर्वार इत्यत आह—

**चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतसन्निधानात्॥२॥**

'प्राकृतचोदनागतकार्यबोधकं बर्हिःपदं चोदनालिङ्गम्। तत्संयुक्ते वाक्ये "शरमयं बर्हिः" इत्यत्र स्तरणकार्ये प्राकृते स्वसाधनद्रव्यद्वारा शरविकारत्वविधिः प्रत्येतव्यः। वचनाच्छराणां बर्हिःकार्यापत्तिरिति यावत्। कुतः? प्रकृतसन्निधानात्—बर्हिःशब्देन प्राकृतस्तरणलक्षणयोपस्थितत्वात् 'नित्यं वृद्धशरादिभ्यः' इति विकारार्थे ²शरशब्दान्मयटः प्रतिपदोक्तत्वेन तस्य विकारार्थत्वमेवाश्रयितुमुचितम्। तथा च बर्हिःकार्यं शरसाधनत्वात्मककुशविकारत्वापन्नमिति वचनव्यक्तिवचनादेवात्रापि कार्यापत्तिरिति स्थितम्॥

इति प्रथमं नक्षत्रेष्टावुपहोमानां समुच्चयाधिकरणम्॥ १ ॥

२

इदं सूत्रमधिकरणान्तरपरं वा। तथाहि—ज्योतिष्टोमे श्रुतम्-"उपावर्धत्वमिति दर्भाभ्यां स्तोत्राण्युपाकरोति" इति। अनेन मन्त्रेण प्रस्तोतुर्हस्ते दर्भयोः प्रदानेन स्तोत्राणि प्रवर्तयतीत्यर्थः। प्रस्तोत्रे बर्हिषी प्रयच्छति, स च ते उद्गात्रे प्रयच्छति, तत उद्गाताहरहस्तद् गायतीति स्थितिः। द्वादशाहे तु श्रूयते—"रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति" इति। तत्र किं रथश्च घोषश्चेति द्वन्द्वः? उत रथस्य घोष इति षष्ठीतत्पुरुषः? इति संशयः। तत्र षष्ठीतत्पुरुषे पूर्वपदस्य सम्बन्धिनि लक्षणा। द्वन्द्वे तु पदद्वयस्यापि श्रुतिवृत्तत्वमिति द्वन्द्वसमास एवा-

१. प्राकृत. नास्ति. क २. शरशब्दात्. नास्ति क.

श्रयणीयः। ततश्च रथेन घोषेण च स्तोत्रमुपाकरोतीति लभ्यते। घोषश्च रथस्य तदन्यस्य यस्य कस्यचिद् दुन्दुभ्यादेरित्यनियमः। न तु रथस्यैव, रथेन घोषस्याविशेषणात्। एवञ्च रथो द्रव्यत्वसामान्याद् बर्हिषोर्निवर्तकः। घोषस्तु शब्दत्वसामान्यान्मन्त्रस्य निवर्तक इति प्राप्ते, सिद्धान्तयति।

**चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात्॥ २॥**

प्राकृतचोदनागतस्तोत्रोपाकरणबोधकशब्दसंयुक्ते रथघोषेणेति वाक्ये तद्विकारः-तेन रथसम्बन्धिघोषेणैव मन्त्रस्य दर्भयोश्च बाधः प्रतीयेत, न तु रथेन बर्हिषोः, यस्यकस्यचिद् घोषेण मन्त्रस्येति। कुतः? प्रकृतिसन्निधानात्—षष्ठीतत्पुरुषे पूर्वपदस्य लाक्षणिकत्वेऽप्युत्तरपदस्य प्रकृत्या शब्दशक्तिस्वभावेन सन्निधानात्—समावेशसम्भवात्। द्वन्द्वे तूभयोरपि वर्तिपदयोर्लाक्षणिकत्वप्रसङ्गात्। यद्यपीतरेतरयोगद्वन्द्वेऽपि वर्तिपदे श्रुतिवृत्ते एव, तथापि नात्रेतरेतरयोगद्वन्द्वस्सम्भवति। तथा सति रथघोषाभ्यामिति द्विवचनापत्तेः। अतस्समाहारद्वन्द्व एवात्राश्रयणीयः। तत्र द्वे अपि वर्तिपदे लाक्षणिके स्याताम्, समाहारस्य वर्तिपदाभ्यां शक्त्याप्रतीतेः। तस्मात्पूर्वपदमात्रे लक्षणां स्वीकृत्य षष्ठीतत्पुरुष एवाश्रयणीयः। तथा च रथजन्यघोषस्यैवोपाकरणे विधानादविशेषेण दर्भमन्त्रोभयकार्यापत्त्या एकेनाप्युभयनिवृत्तिरिति॥

इति द्वितीयं रथघोषाधिकरणम्॥ २॥

३

बृहस्पतिसवे श्रूयते-"बार्हस्पत्यं ग्रहं गृह्णाति" इति। तथा गवामयने विषुवद्वाख्ये सुत्याहे श्रुतम्-"अर्कं गृह्णाति" इति। तथा महाव्रते "शुक्रं गृह्णाति" इति। तथाश्वमेधे "महिमानौ ग्रहौ गृह्णाति" इति! किमेवञ्जातीयकैर्वैकृतैर्ग्रहैः प्राकृता ऐन्द्रवायवादिग्रहा बाध्यन्ते? उत समुच्चीयन्ते? इति संशयः। प्राकृतवैकृतग्रहाणां सर्वेषां यागनिर्वृत्तिलक्षणकार्यैकत्वात्, प्रत्यक्षश्रुतैर्वैकृतग्रहैर्यागनिष्पत्तौ सत्यां चोदकप्राप्ताः प्राकृतग्रहा निवर्तन्त इति प्राप्ते, सिद्धान्तयति—

**सर्वत्र ग्रहाम्नानमधिकं स्यात्॥ ३॥**

प्रकृतिवद् बृहस्पतिसवादिषु सर्वत्र विकृतिषु बार्हस्पत्यादिग्रहाम्नानम् प्राकृतग्रहाम्नानापेक्षया अधिकं स्यात्। वैकृतग्रहाः प्राकृतैस्समुच्चीयन्त इति यावत्।

प्राकृतवैकृतग्रहाणां यद्यपि यागनिर्वर्तकत्वमविशिष्टम्, तथापि वैकृतग्रहाणां प्राकृतग्रहनैरपेक्ष्येण न यागनिर्वर्तकत्वम् किन्तु तत्सापेक्षाणामेव। यदि हि बार्हस्पत्येन ग्रहेण युज्यतेत्येवं विधिस्स्यात्, तदा यजतिना यागमनूद्य तत्र निरपेक्षतया बार्हस्पत्यादिग्रहविधानात् "परिधौ पशुं नियुञ्जन्ति" इति नियोजने परिधिवद्बाधस्स्यात्। न त्विह तथा, नियोजनस्येव यागस्यात्र शब्दत उपादानाभावात्। गृह्णातेर्यागलक्षकत्वे तु लक्षणैव दोषः द्वितीयानुपपत्तिश्च। न च ग्रहाणां यागनिर्वर्तकत्वं प्रत्यक्षमेवेति वाच्यम्, ग्रहाणामदृष्टार्थत्वात्। देवतोद्देशेनोर्ध्वपात्रादौ पृथक्करणमेव हि ग्रहणं नाम। तच्चादृष्टार्थमेव, न तु यागनिर्वृत्त्या दृष्टार्थम्। हविस्तु महति पृथक्करणं विनापि यत्र क्वचिदवस्थितेऽपि सोमरसे देवतोद्देश्यत्यागलक्षणयागस्य सम्भवात्। उक्तञ्च—

'शक्यते चागृहीतेऽपि यत्र क्वचिदवस्थिते।

द्रव्येऽस्मिन् देवतोद्देष्टुमित्यदृष्टार्थता विधेः' इति।

न च देवतोद्देशेन पृथक्करणात्मकग्रहणस्य देवतानिर्देशमुखेन दृष्टार्थत्वमिति वाच्यम्, ग्रहणस्य यागरूपत्वाभावेन तत्र देवतानिर्देशांशस्योपयोगाभावेन सुतरामदृष्टार्थत्वात्। न च "अग्नये जुष्टं निर्वपामि" इति निर्वाप इव ग्रहणेऽपि देवतानिर्देशस्य वक्ष्यमाणदेवतास्मरणार्थत्वं किं न स्यादिति वाच्यम्, वैषम्यात्। आग्नेयादियागे हि यदाग्नेयादिवाक्येनोत्पत्तिदशायामेव निर्वापसम्बन्धात् प्रागग्न्यादिदेवतासम्बन्धोऽवगतः। ततो निर्वापविधिदशायां देवतानिर्देशस्य प्रयोजनजिज्ञासायां पूर्वमेव यागसम्बन्धित्वेनावगतवक्ष्यमाणाग्न्यादिदेवतास्मरणमेव तत्प्रयोजनमिति युक्तमाश्रयितुम्। इह तु "सोमेन यजेत" इत्युत्पद्यमाने यागे ग्रहणसम्बन्धात् प्रागिन्द्रवाय्वादिदेवतासम्बन्धो नावगतः। ततश्च "ऐन्द्रवायवं गृह्णाति" इत्यादिग्रहणविधिदशायां देवतानिर्देशांशस्य वक्ष्यमाणेन्द्रवाय्वादिदेवतास्मरणार्थत्वासम्भवाददृष्टार्थत्वमेवाभ्युपेयम्, पश्चात्तु ग्रहणसम्बन्धादापतन्नपि यागदेवतासम्बन्धो न प्रागवगतं ग्रहणे देवतानिर्देशस्यादृष्टार्थत्वं विहन्ति। एवं बृहस्पतिसवादौ बार्हस्पत्यादिग्रहेष्वपि योज्यम्। अतो न ग्रहाणां यागनिर्वर्तकत्वं प्रत्यक्षसिद्धमिति न प्रकृतवैकृतग्रहाणां यागनिर्वृत्तिमादाय कार्यैकत्वम्। न ह्येकेन ग्रहणेन देवतोद्देशेन वा यददृष्टं क्रियते तदन्येनापि क्रियत इत्यत्र प्रमाणमस्ति।

अतस्समुच्चयः। प्रकृतिवत्-यथा प्रकृतौ ज्योतिष्टोमे "सोमेन यजेत" इत्यत्र सन्निधानादैन्द्रवायवादिग्रहाणां समुच्चयः, तथा विकृतिष्वपि चोदकप्राप्तानां वैशेषिकाणाञ्च ग्रहाणां समुच्चयः, सन्निधानाविशेषात्। न च विकृतिषु प्रयोगवचनं प्रत्यक्षोपदिष्टानेव ग्रहान् ग्रहिष्यतीति वाच्यम्। विकृतिचोदना हि आदौ प्रकृतौ क्लृप्तोपकारैर्धर्मैरन्वेति, ततस्सन्निध्याम्नानबलेन पुनरुत्थापिताकाङ्क्षया वैकृतधर्मैरप्यन्वेति, ततश्च प्रयोगवचनाश्चोदकोपदेशप्रवृत्त्युत्तरं प्रवर्तमानास्तदुभयप्रापितान् ग्रहान् युगपदेव गृह्णन्तः प्राकृतैर्वैकृतैश्च ग्रहैर्यजतेति समुच्चयमेव बोधयन्ति। नन्वस्तु "अर्कं गृह्णाति" इत्यादिकं वैकृतग्रहसमुच्चयोदाहरणम्, अर्कादिशब्दानां संज्ञाशब्दतया गुणविधित्वासम्भवेन कर्मान्तरविधित्वस्यावश्यकत्वात्। "प्राजापत्यं गृह्णाति" इति तु प्राकृतसर्वग्रहोद्देशेन देवतामात्रविधिरेवेति कथं वैकृतप्राकृतग्रहसमुच्चयोदाहरणमिति वाच्यम्, तथासति 'बार्हस्पत्यं ग्रहम्' इत्येकवचनानुपपत्तेः। प्रकृतौ ग्रहाणां बहुत्वेन तेषां ग्रहमित्येकवचनान्तेनानुवादासम्भवात्, अग्निष्टुति "आग्नेया ग्रहा भवन्ति" इति प्राकृतग्रहानुवादेनाग्निदेवताविधौ बहुवचनदर्शनात्। न च ग्रहैकत्वाधिकरणन्यायेनात्र ग्रहमित्येकत्वं न विवक्षितमिति वाच्यम्, वैषम्यात्। ग्रहसाधनकसम्मार्गविधौ द्वितीयाश्रुतिबाधापत्त्या ग्रहोद्देश्यकसमार्गविधित्वे सति ग्रहाणां बहुत्वादेकवचनं जात्याख्यायां कथञ्चिन्नेयम्। इह तु प्राकृतग्रहानुवादेन देवताविधौ विशिष्टग्रहान्तरविधौ वा न द्वितीयाश्रुतिबाधः, उभयथापि संस्कार्यत्वात्। तथा च द्वितीयाश्रुतेरबाधे सति बहुवचनस्याप्यनुग्रहो न्याय्य इति। तस्मात् बार्हस्पत्यं ग्रहमिति देवताविशिष्टग्रहान्तरविधिरेवेति भवति समुच्चयोदाहरणम्। न च विशिष्टविधौ गौरवं शङ्क्यम्, ग्रहोद्देशेन देवताविधौ प्राकृतैन्द्रवाय्वादिदेवताप्रापकबहुचोदकबाधापेक्षया तस्य ज्यायस्त्वात्। न चैवमपि "शुक्रं गृह्णाति" इति महाव्रतगतवाक्यमिह नोदाहरणम्, प्राकृतशुक्रग्रहपुनर्विधानस्य गृहमेधीयाज्यभागन्यायेन चोदकपरिलोपकतया बाधसमुच्चयचिन्तायास्तत्रासम्भवादिति वाच्यम्, ग्रहणस्य हि सन्निपातितया साक्षादुपकारकत्वासम्भवेन "द्वयोः प्रणयन्ति" इति वच्चोदकपरिलोपकत्वाभावे सति चोदकपरिलोपार्थतया पुनर्विध्यसम्भवादनुवादस्य चानर्थक्यात् ग्रहान्तरविधिरेवायमिति भवत्युदाहरणमिति दिक्॥

इतोऽपि प्राकृतवैकृतग्रहाणां समुच्चय इत्याह—

**अधिकैश्चैकवाक्यत्वात् ॥ ४ ॥**

अधिकैः—वैकृग्रहैस्सह प्राकृतग्रहाणामेकप्रयोगवचनोपात्तत्वदर्शनादित्यर्थः। वाजसनेयादिशाखासु वाजपेये "प्रज्ञातानाग्नीषोमिकान् ग्रहान् गृह्णीयात्" इत्युपक्रम्य "पञ्चैन्द्रान् वाजपेयग्रहान गृह्णाति, सप्तदश सोमग्रहान् प्राजापत्यान् गृह्णाति, सप्तदश सुराग्रहान्, अथ मधुग्रहग्रहं गृह्णाति, अथोक्थ्यं गृह्णाति, अथ ध्रुवं गृह्णाति" इति वैशेषिकाणां वाजपेयिकग्रहाणां प्राकृतानाञ्च ग्रहाणामनुक्रमणबलात् समुच्चयो गम्यते। तथा चैवञ्जातीयकेषु सर्वत्र समुच्चयो विज्ञायते ॥

इतोऽपि "बार्हस्पत्यं गृह्णाति" इति न प्राकृतग्रहानुवादेन देवताविधिरित्याह—

**लिङ्गदर्शनाच्च ॥ ५ ॥**

वाजपेये ऐन्द्रप्राजापत्यादिग्रहविधिषु यदि प्राकृतग्रहानुवादेन देवताविधानं स्यात्, तर्हि "अगृहीते माहेन्द्रे रथमुपावहरति" इति प्राकृतमहेन्द्रानुवादो नोपपद्येत। अतोऽपि लिङ्गादेवञ्जातीयकेषु न देवताविधिः। भाष्ये तु "विरण्यो वा एष यज्ञक्रतुर्यद्वाजपेयः" इति श्रुतम्। विरण्यशब्दो विस्तीर्णे। यथा विरण्यान्यरण्यानीति गम्यते। प्राकृतग्रहाणां समुच्चय एवैतदुपपद्यते, न तु तद्बाधे। अतोऽपि लिङ्गात् समुच्चय इति व्याख्यातम् ॥

इति तृतीयं बृहस्पतिसवादौ वैकृतग्रहाणां समुच्चयाधिकरणम् ॥ ३ ॥

४

वाजपेये श्रूयते—"सप्तदश प्राजापत्यान् पशूनालभते" इति। सन्ति च क्रतुव्यवस्थायां विहितास्सवनीयपशवः-"आग्नेयमग्निष्टोम आलभेत, ऐन्द्राग्नमुक्थ्ये द्वितीयमैन्द्रं वृष्णिं षोडशिनि तृतीयम्, सारस्वतीं मेषीं चतुर्थीमतिरात्रे" इति। तत्र षोडशिविकारे वाजपेये षोडशिक्रतुपशवश्चोदकतः प्राप्ताः प्राजापत्यैर्वैशेषिकपशुभिर्बाध्यन्ते ? समुच्चीयन्ते वा ? इति संशयः। यागात्मके प्राकृतसवनीयपशुकार्ये

पशुत्वेनोपस्थिते वैकृतप्राजापत्यपशूनां विधानात्तत एव प्राकृतसवनीयपशुकार्य सिद्धे चोदकप्राप्ताः क्रतुपशवो निवर्तन्त इति प्राप्ते, सिद्धान्तयति—

**प्राजापत्येषु चाम्नानात् ॥ ६ ॥**

चकार उक्तसमुच्चये। बार्हस्पत्यादिग्रहाणां वैकृतैर्ग्रहैस्समुच्चय उक्तः। प्राजापत्येष्वपि पशुषु प्राकृतपशुभिस्समुच्चयो भवति। कुतः? आम्नानात्—"आग्नेयं पशुमालभते, अग्निष्टोममेव तेनावरुन्धे ऐन्द्राग्नेनोक्थ्यम्, ऐन्द्रेण षोडशिनस्स्तोत्रम्" इति वाजपेये क्रतुपशूनामनुवादादित्यर्थः।

चकारोऽनुक्तामपि युक्तिं समुच्चिनोति। तद्यथा-पशुत्वस्य निरूढपश्वादिसाधारणत्वेन सवनीयोपस्थापनाशक्तत्वान्न तत्कार्ये प्राजापत्यपशूनां विध्यसम्भवः। न चैवमपि प्राकृतपश्वनुवादेन गुणविधिसम्भवात् कथं समुच्चयसिद्धिरिति वाच्यम्। सप्तदशत्वसङ्ख्यायाः प्रजापतिदेवतायाश्च प्राकृतपश्वनुवादेन विधौ वाक्यभेदप्रसङ्गात्। एवञ्च गुणविध्यसम्भवाद्विशिष्टकर्मान्तराण्येवात्र विधीयन्ते। तत्र च प्राकृतसवनीयकार्योपस्थापकाभावेन तेषां तत्र विधानासम्भवाददृष्टार्थत्वाच्च प्रमाणान्तरेणापि तत्कार्यापत्त्यसम्भवात् प्राकृतैः पशुभिस्समुच्चय इति॥

इति चतुर्थं वाजपेये क्रतुपशूनां समुच्चयाधिकरणम्॥ ४॥

५

"वैश्वदेवीं साङ्ग्रहणीन्निर्वपेत्" इति प्रकृत्य श्रूयते-"आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति" इति। सन्ति च प्रकृतौ त्रयोऽनूयाजाः। ते आमनहोमैस्समुच्चीयन्ते? न वा? इति संशयः। त्रित्वसामान्यादुपस्थितानूयाजकार्येषु प्रत्यक्षविहितैरामनहोमैश्चोदकप्राप्ता अनूयाजा बाध्यन्त इति न समुच्चयः। यद्वा यत्तिस्रो जुहोति तदामनमसीत्यादिमन्त्रैरित्येवं प्राकृतान् त्रीननूयाजहोमाननूद्य मन्त्रविधिः, न त्वामनहोमाः कर्मान्तराणीति न समुच्चयप्रसक्तिरिति प्राप्ते, सिद्धान्तयति—

**आमने लिङ्गदर्शनात् ॥ ७ ॥**

आमनवाक्ये विहितहोमैरनूयाजास्समुचीयन्ते। कुतः? लिङ्गदर्शनात्-लिङ्गात् दर्शनाच्चेत्यर्थः। दृश्यते निर्णीयतेऽनेनेति दर्शनं न्यायः। "तिस्र आहुती-

र्जुहोति" इत्यत्र त्रित्वस्य "त्रीन् परिधीन् परिदधाति" इति परिध्यादिसाधारणत्वान्नानूयाजकार्योपस्थापकता। अतो न प्रथमः पक्षः। त्रित्वविशिष्टप्राकृतानूयाजहोमानुवादेन मन्त्रविधौ तु विशिष्टानुवादाद्वाक्यभेदः। अतो न द्वितीयपक्षोऽपि। ततश्च त्रित्वविशिष्टहोमान्तराणां विधानात्तेषाञ्च प्राकृतकार्योपस्थापकाभावेन तत्र विधानाभावाददृष्टार्थतया प्रमाणान्तरेणापि तत्कार्यापत्यसम्भवात् प्राकृतैस्समुच्चयः। "यत् प्रयाजानूयाजानां पुरस्तादुपरिष्टाद्वा एता आहुतीर्जुहुयाद् बहिरात्मनः सजातान् दधीत। अथ यन्मध्यतो जुहोति मध्यत एव सजातानात्मन् धत्ते" इत्यनूयाजानुवादोऽप्यत्र लिङ्गम्॥

इति पञ्चमं साङ्ग्रहण्येष्टावनूजानां समुच्चयाधिकरणम्॥ ५॥

६

गवामयने महाव्रतनाग्नि सुत्याहे श्रूयते—"पत्न्य उपगायन्ति वीणाभिरुपगायन्ति" इति, "दिक्षु दुन्दुभयो नदन्ति शङ्खनाली तृणवा नदन्ति" इत्यादि। प्रकृतौ च ज्योतिष्टोमे श्रुतम्—"सामसु गीयमानेषु हो इत्युपगायेयुर्भक्त्यन्तरालानिच्छादयन्तः" इति। तदिदमुपगानमृत्विजः कुर्युरिति तृतीये स्थितम्—'उपगाश्च लिङ्गदर्शनात्' इत्यत्र। तदिह किं प्राकृत उपगाने पत्न्यो विधीयन्ते? उताप्राकृत उपगाने? इति संशये, पूर्वपक्षयति—

**उपगेषु शरवत्स्यात् प्रकृतिलिङ्गसंयोगात्॥ ८॥**

उपगेषु-उपगातृषु प्राकृतेषु ऋत्विक्षु पत्नीभिर्बाधस्स्यात्। कुतः? प्रकृतिलिङ्गसंयोगात्—प्रकृतिगतोपगानकार्यबोधकेनोपगायतिना संयोगात्। उपगायन्तीति शब्दत उपात्ते उपगानकार्ये प्राकृते पत्नीनां प्रत्यक्षविहितत्वेन ताभिः प्राकृतानामृत्विजां बाध उचितः, समानविषयत्वात्, शरवत्। "शरमयं बर्हिः" इत्यत्र शरैः कुशाः प्राकृता यथा बाध्यन्ते, तद्वत्। न च पत्न्य उपगायन्तीति सन्निहितदुन्दुभ्यादिनादानुवादेन पत्नीविधानं किं न स्यादिति वाच्यम्। गानस्योपचयो ह्युपगानम्। सन्निहितदुन्दुभ्यादिनादानाञ्च न गानत्वम्। अतः पत्नीभिः क्रियमाणस्य वीणागानस्य न दुन्दुभ्यादिनादोपचयत्वं सम्भवतीति प्राकृतं सामगानस्यैवोपचयात्मकमुपगानमिहानूद्य पत्नीनां विधानात् प्राकृतानां सामगानकर्तॄणामृत्विजां निवृत्तिः॥

अथ सिद्धान्तयति—

**आनर्थक्यात्त्वधिकं स्यात् ॥ ९ ॥**

तुः पूर्वपक्षव्यावृत्तौ। न तावत् प्राकृतोपगाने पत्नीविधिः। कुतः ? आनर्थक्यात्-उपगायतेर्गानोपचयार्थकत्वाभावात्। न हि गानस्योपचय उपगानम्, किन्तूपचयात्मकं गानमुपगानम्, सामानाधिकरण्यलाभात्। एवञ्च वीणाभिरुपगायन्तीत्यत्रोपचयात्मकं गानमवगतम्। उपचयश्च कस्येत्यपेक्षायां दारुमयोत्थत्वसाम्यात् सन्निहितत्वाच्च दुन्दुभ्यादिनादानामिति गम्यते। तच्च दुन्दुभ्यादिनादोपचयात्मकं (गानं वीणासाधनकं विधीयमानं ध्वनिविशेषानुकूलशरीरताल्वादिव्यापाररूपसामगानोपचयात्मकम्,) न प्राकृतमेव हो इति गानं भवितुमर्हति, तथाविधस्यैव शारीरस्य हो इति गानस्य सामगानोपचयत्वौचित्यात्। वीणानिवेशे च तस्य सामगानान्तर्भावानुपपत्तेः। अतः "वीणाभिरुपगायन्ति" इति दुन्दुभ्यादिर्नादोपचयात्मकं वीणासाधनमधिकमुपगानान्तरमेव विधीयते। विशिष्टविधानाच्च न वाक्यभेदः। ततश्च दुन्दुभ्यादिनादानामनन्तरविपरिवर्तमानानामिदमुपगानं पत्नीभिः कर्तव्यमृत्विजां [न] निवृत्तिरिति दिक् ॥

इति षष्ठं गवामयनमहाव्रते उपगानस्य पत्नीकर्तृकत्वाधिकरणम् ॥६॥

७

अभ्यञ्जनाभ्यञ्जनं नाम सत्रम्। तत्र श्रूयते "गौग्गुलवेन प्रातस्सवनेऽभ्यञ्जते पैतुदारवेण माध्यन्दिने सवने सौगन्धिकेन तृतीयसवने" इति। यन्त्रविशेषेण गुग्गुलुद्रव्यान्निर्गमितं तैलं गौग्गुलवम्। पितुदारुर्नाम गन्धवृक्षविशेषः, तस्य तैलं पैतुदारवम्। सौगन्धिकं सुगन्धितेजनाख्यतृणविशेषतैलम्। प्रकृतौ च "नवनीतेनाभ्यञ्जते" इति श्रुतम्। किमिदं प्राकृतमभ्यञ्जनं वैकृताभ्यञ्जनेन निवर्तते ? न वा ? इति संशयः। नवनीताभ्यञ्जनस्य गुग्गुल्वादितैलाभ्यञ्जनानाञ्च दृष्टमेकमेव कार्यम्—अङ्गेषु स्नेहनम्। तस्य प्रत्यक्षविहितैर्वैकृताभ्यञ्जनैरेव सिद्धेः प्राकृतं नवनीताभ्यञ्जनं निवर्तत इति प्राप्ते, सिद्धान्तयति—

**संस्कारे चान्यसंयोगात् ॥ १० ॥**

गौग्गलवाद्यभ्यञ्जनसंस्कारेऽपि प्राकृतेन नवनीताभ्यञ्जनेन समुच्चयः। कुतः ? अन्यसंयोगात्—कालान्तरसंयोगात्। प्राकृतं हि नवनीताभ्यञ्जनं दीक्षा-

( ) कपुस्तके स्खलितः

कालीनम्। सत्रे तु गौग्गलवाद्यभ्यञ्जनं सुत्याकालीनम्। अतो भिन्नकालीनत्वान्न तेषामेककार्यत्वसम्भव इति॥

ननु तिष्ठति पशौ क्रियमाणाः पाशुकाः प्रयाजा वपाप्रचारानन्तरमुत्पत्स्यमाने पुरोडाशे प्रयाजकार्यं साधयन्तीति न पृथक् पुरोडाशस्य प्रयाजाः क्रियन्त इति द्वादशाद्ये वक्ष्यते। तथेहापि सुत्याकालीनमपि गौग्गलवाद्यभ्यञ्जनं दीक्षाकालीननवनीताभ्यञ्जनस्यापि कार्यं साधयितुमर्हतीत्याशङ्क्य परिहरति—

**प्रयाजवदिति चेन्नार्थान्यत्वात्॥ ११॥**

पाशुकप्रयाजवत् कालभेदेऽपि गौग्गलवाद्यभ्यञ्जनं न, कार्यभेदादित्यर्थः। अयमाशयः—प्रकृतौ तावत् पञ्च प्रयाजा अदृष्टार्थाः। पशौ च त एव प्रयाजाः। सङ्ख्यालक्षणगुणमात्रन्तु भिद्यते। ते च पाशुकाः प्रयाजा वपाप्रचारात् प्रागनुष्ठिता अपि तदुत्तरकालीने पुरोडाशेऽपि प्रयाजादृष्टमादधते—'अन्त्यावयवेऽपूर्वाणां सम्बन्ध' इति ( ) न्यायादिति वक्ष्यते। इह तु-अभ्यञ्जनानि स्नेहनरूपदृष्टार्थानि। तत्र नवनीताभ्यञ्जनं तावदङ्गवैशद्याधायकस्नेहनाधानमुखेन सुखप्रचारार्थम्। गौग्गलवादितैलाभ्यञ्जनानि तु कण्डूत्याद्यङ्गरुजानिवर्तकस्नेहनाधानमुखेनाङ्गेषु परिमलविशेषकृतप्रोत्साहनशक्त्याधानमुखेन च सुखप्रचारार्थानीति भिन्नकार्यत्वान्न वैकृतैः प्राकृतस्य बाधः॥

इति सप्तममभ्यञ्जनाभ्यञ्जनसत्रेऽभ्यञ्जनसमुच्चयाधिकरणम्॥७॥

८

महाव्रते क्वचिच्छाखायां "तार्प्यं यजमानः परिधत्ते दर्भमयं पत्नी" इति। त्रपाख्यवृक्षविशेषस्य विकारः तार्प्यम्, आज्यसिक्तं वेति कर्मान्तसूत्रे बोधायनः। प्रकृतौ च ज्योतिष्टोमे "क्षौमं वासः परिधत्ते यजमानः पत्नी च" इति स्थितम्। तदिदं प्राकृतं क्षौमं वासः तार्प्येण दर्भमयेन च वाससा बाध्यते? उत समुच्चीयते? इति संशयः। तत्र पूर्वपक्षयति—

**आच्छादने त्वैकार्थ्यात् प्राकृतस्य विकारस्स्यात्॥ १२॥**

तुर्वैषम्ये। अस्तु "पत्न्य उपगायन्ति" इत्यत्र भिन्नकार्यत्वान्न बाधः। तार्प्यादिरूपे आच्छादने—गुह्यलिङ्गप्रदेशस्य प्रावारके विहिते सति प्राकृतस्य

क्षौमस्य विकारः—बाधस्स्यात्। कुतः? ऐकार्थ्यात्—एककार्यकत्वात्। क्षौमं हि परिधानार्थं श्रुतं तथा ताप्यादिकमपि। न च नाभेरधस्ताद् गुह्यप्रदेशस्यावरणं क्षौमस्य कार्यम्, ताप्र्यादेस्तु तदुपरि प्रावरणं कार्यमिति भिन्नविषयत्वान्न बाध इति वाच्यम्, परिदधातेर्गुह्यप्रदेशाच्छादन एव रूढत्वात्, 'परिधानमधोंऽशुके' इति कोशाच्च ॥

अथ सिद्धान्तयति—

## अधिकं वान्यार्थत्वात् ॥ १३ ॥

वाशब्दोऽवधारणे। प्राकृतात् क्षौमाद् अधिकमेवेदं ताप्र्यादि। तस्य न बाधकमिति यावत्। कुतः? अन्यार्थत्वात्—भिन्नकार्यत्वात्। प्रकृतौ गुह्यप्रदेशाच्छादने अन्तरीयवासःकार्ये क्षौमम्, स्नानोत्तरं तस्य तद्विधानात्[1]। इहापि महाव्रते चोदकतस्तत्प्राप्तम्। तच्च प्रत्यक्षश्रुतेन ताप्र्यादिना न बाधमर्हति, भिन्नकार्यत्वात्-उत्तरीयकार्ये ताप्र्यादिपरिधानविधिसम्भवात्। 'कम्बलं परिधत्ते' इत्युपर्यङ्गाच्छादनेऽपि परिदधातेः प्रयोगदर्शनात्। न च निघण्टुबलाद् रूढिनिश्चये सति कम्बलं परिधत्त इति प्रयोगः परितो धत्त इति योगबलान्निर्वाह्यः। प्रकृते च रूढिसम्भवे योगाश्रयणं न न्याय्यमिति वाच्यम्, इहापि चोदकाबाधाय योगाश्रयणस्यैव युक्तत्वात्। तस्मात् ताप्र्यादिना क्षौमस्य न बाधः। न चोपर्यङ्गाच्छादनार्थत्वेऽपि बाधस्तुल्यः, आचारप्राप्तोत्तरीयस्य बाधनीयत्वादिति वाच्यम्, क्षौमप्रापकवैदिकचोदकबाधापेक्षया आचारप्राप्तोत्तरीयबाधस्यैवाश्रयितुमुचितत्वात् ॥

नन्वेतावता क्षौमं वासोऽन्तरीयम्, ताप्र्यमुत्तरीयं यजमानस्य लभ्यते। एवं सत्यवभृथे "कृष्णविषाणया वासांसि विस्रंसयति, तानि ततोऽध्वर्युः परिधत्ते" इति क्वचिच्छाखायां वासोबहुलत्वानुवादस्य का गतिरित्यत आह—

## समुच्चयश्च दर्शयति ॥ १४ ॥

"वासांसि विस्रंसयति" इति वासोबहुत्वमनुवदति वेदः। अतस्तद्बलादेवात्राचारप्राप्तोत्तरीयबाधः। अन्यत्र तु[2] विश्वजिति "अवभृथादुदेत्य वत्सत्वचं

१. स्नानोऽर्थस्य तद्विधानात्. क.  २. तु. नास्ति. ख.

परिधत्ते" इत्यत्र वासोबहुत्वानुवादाभावात्, "अवभृथादुदेत्य सोमोष्णीषं यजमानः परिधत्ते" इति प्राकृतमन्तरीयं वासः, विशेषविहिता तु वत्सत्वगुत्तरीयकार्ये इति द्वयमेव भवति, न त्वाचारप्राप्तमुत्तरीयमिति सिद्धम् ॥

इत्यष्टमं तार्प्याधिकरणम् ॥ ८ ॥

९

महाव्रते श्रुतम्-"श्लोकेन पुरस्तात् सदसस्स्तुवन्ति" इत्यादि। किमिह श्लोकादिसामभिः प्राकृतगायत्रादिसाम्नां निवृत्तिः ? उत समुच्चयः ? इति संशयः। स्तुतिलक्षणकार्यैकत्वात् प्राकृतसाम्नां निवृत्तिरिति प्राप्ते, सिद्धान्तयति—

**सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥१५॥**

श्लोकादिसामसु विहितेषु प्रत्यक्षश्रुतश्लोकादिसामभिः प्राकृतगायत्रादिसाम्नाम् अविकारः-अबाधः प्रतीयेत। कुतः ? अर्थान्तरश्रुतेः-प्राकृतस्तुत्यपेक्षया स्तुत्यन्तराणामेव श्लोकादिविशिष्टानां विधानात्। प्राकृतस्तुत्यनुवादेन श्लोकादिसाम्नां पुरस्तात् सदसः पश्चात् सदस इत्यादिगुणान्तराणाञ्च विधौ वाक्यभेदात्। न च स्तुत्यन्तरविधावपि प्राकृतस्तुतितत्साधनसाम्नां निवृत्तिर्दुर्वारेति वाच्यम्, प्राकृतवैकृतस्तुतीनामदृष्टार्थत्वेन कार्यभेदावश्यकतया वैकृतस्तुतिभिः प्राकृतस्तुतिनिवृत्तेरसम्भवात् ॥

इति नवमं महाव्रते प्राकृतसाम्नां समुच्चयाधिकरणम् ॥९॥

१०

क्वचिद्विकृतिविशेषेषु श्रुतम्-"कौत्सं भवति काण्वं भवति" इत्यादि। तत्र साममात्रश्रवणात् स्तुतेरश्रवणाद् दीक्षणीयादिपरिसामवददृष्टार्थत्वान्न तैः प्राकृतस्तुतिसाम्नां निवृत्तिरिति प्राप्ते, सिद्धान्तयति—

**अर्थे त्वश्रूयमाणे शेषत्वात् प्राकृतस्य विकारस्स्यात् ॥१६॥**

तुर्वैषम्ये। श्लोकादिसाम्नां स्तुत्यनुवादेन विधानाभावात्तद्विशिष्टस्तुत्यन्तराणामदृष्टार्थतया विधानान्न तैः प्राकृतसाम्नां निवृत्तिः। अर्थे-स्तुतिलक्षणकार्येऽश्रूयमाणे तु कौत्सादिविधौ प्राकृतस्य-गायत्रादिसाम्नः विकारः-बाधस्स्यात्। कुतः ? शेषत्वात्-

प्राकृतगायत्रादिसामवत् कौत्सादिसाम्नामपि स्तुत्यर्थत्वात् स्तुत्यनुवादेन विना केवलं कौत्सादिसाम्नां विहितानामपि तेषां प्रकरणात् क्रत्वर्थत्वेनावगतानां प्रयोजनापेक्षायां दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात् सामर्थ्याच्च ऋगक्षराभिव्यक्तिद्वारा प्राकृतस्तुतिरेव प्रयोजनमिति स्वीक्रियते। दीक्षणीयादिपरिसाम्नान्तु "दीक्षणीयायां तार्क्ष्यसामानि गायेत्" "प्रायणीयायां प्रवद्भार्गवम्" इत्यादिना दीक्षणीयाद्यङ्गतयादृष्टार्थतया विधानान्न तैर्निवृत्तिरिति वैषम्यम् ॥

इति दशमं कौत्सादिसाम्नां प्राकृतसामनिवर्तकत्वाधिकरणम् ॥

११

कौत्सादिसामानि प्राकृतस्तुतिसाधनसाम्नां निवर्तकानीति समधिगतम्। किं तत्रैकं साम, द्वे वा, बहूनि वा सर्वेषां निवर्तकानि? उतैकमेकस्य, द्वे द्वयोः, बहूनि बहूनाम्? इति संशये, पूर्वपक्षयति—

**सर्वेषामविशेषात् ॥१७॥**

सर्वेषां प्राकृतसाम्नां निवर्तकानीत्यर्थः ॥

अथ सिद्धान्तयति—

**एकस्य वा श्रुतिसामर्थ्यात् प्रकृतेश्चाविकारस्स्यात् ॥१८॥**

वाशब्दोऽवधारणे। एकस्येत्युपलक्षणम्। एकेन वैकृतसाम्ना एकस्य-प्राकृतसाम्नः, द्वाभ्यां द्वयोः, बहुभिर्बहूनाम् इत्येवं यावन्ति वैकृतानि सामानि तावतामेव प्राकृतसाम्नां निवृत्तिः, न त्वितरेषामपि। कुतः? श्रुतिसामर्थ्यात्-एकद्विबहुसामप्रत्यक्षश्रवणस्य क्रमेणैकद्विबहुसामनिवर्तनमात्रे सामर्थ्याद् वैकृतोपदेशान्यथानुपपत्त्या प्राकृतबाधः। तत्र यावन्निवृत्तिं विना वैकृतोपदेशोऽनुपपन्नस्तावदेव तन्निवर्तयितुं शक्नोति नाधिकम्, प्रमाणाभावात्। किञ्चैवं सत्येव प्रकृतेः प्राप्तानामवशिष्टसाम्नामविकारात्, अन्यथा तद्विषये चोदकबाधप्रसङ्गात्। न हि तदबाधेनैवोपपत्तौ तद्बाधाश्रयणं न्याय्यम्। तस्मादेकेन वैकृतसाम्ना एकस्य प्राकृतस्य साम्नो बाधः, द्वाभ्यां द्वयोः, बहुभिर्बहूनामिति स्थितम् ॥

इत्येकादशं कौत्सादीनां व्यवस्थया बाधकत्वाधिकरणम् ॥११॥

१२

राजसूये श्रूयते–"द्वात्रिंशाः पवमाना अभिषेचनीयस्य" इति। द्वात्रिंशद्दक्षु प्रगीतसामसाधनकानि पवमानस्तोत्रकाणीत्यर्थः। तत्र राजसामादीन्यपि कतिपयसामान्युपदिष्टानि। प्रकृतौ तु "त्रिवृद् बहिष्पवमानम्, पञ्चदशो मध्यन्दिनः पवमानः, सप्तदश आर्भवः पवमानः" इति श्रुतम्। अन्यान्यपि गायत्रादिसामानि तत्रोपदिष्टानीति स्थितिः। किमेतानि प्राकृतसामादिभिर्बाध्यन्ते? समुच्चीयन्ते वा? इति संशयः। प्रत्यक्षश्रुतै राजसामादिभिः प्राकृतसाम्नां बाध उचितः। न च वैकृताधिकसङ्ख्यापूरणाय प्राकृतसाम्नां समुच्चय एवोचितः, अन्यथा वैकृतराजसामादीनां तन्न्यूनसङ्ख्याकतया तैरुक्तवैकृतसङ्ख्यापूरणासम्भवादिति वाच्यम्। स्तोमविवृद्धौ हि सामान्तरागमनेन सङ्ख्यापूरणं वक्ष्यते–'आगमेन वाभ्यासस्याश्रुतत्वात्' इत्यत्र। ततश्च प्राकृतैरागन्तुकैश्च सामभिर्द्वात्रिंशत्सङ्ख्यापूरणे प्राप्ते प्रत्यक्षश्रुतराजसामादीनां वैय्यर्थ्यापत्त्या तैर्वैशेषिकागन्तुकसामान्युपेक्ष्य प्राकृतसामानि बाध्यन्ते। बाधितानाञ्च तेषां प्राकृतानां स्थाने तानि राजसामादिसामानि सन्निवेशं लभन्ते। तथा च श्रुतराजसामादिभिरागमितैश्च सामभिर्द्वात्रिंशत्सङ्ख्यापूरणम्। प्राकृतानि तु सामानि बाध्यन्त इति प्राप्ते, सिद्धान्तयति—

**स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारस्स्यादितरस्याश्रुतत्वात् ॥ १९ ॥**

स्तुतिपरिमाणं स्तोमः त्रिवृत्पञ्चदशसप्तदशात्मकः प्राकृतः। तदपेक्षया विकृतौ विवृद्धौ–आधिक्ये सति, अधिकसङ्ख्यायामिति यावत्। प्राकृतं सामजातं वैकृतराजसामाद्यपेक्षया अधिकं स्यात्—समुच्चितं स्यात्। कुतः? इतरस्याश्रुतत्वात्–इतरस्यागमेन सङ्ख्यापूरणस्य अश्रुतत्वात्–वाचनिकत्वाभावात्। प्राकृतसामभिरधिकसङ्ख्यापूरणानुपपत्तौ हि सामान्तरानयनं क्रियते। तच्च प्रत्यक्षोपदिष्टराजसामादिसामभिरेव सिद्धमिति कथमश्रुतानयनेनातिदिष्टबाधः? तदबाधेनैव राजसामादिभिराम्नातैरेवाधिकसङ्ख्यापूरणस्योपपत्तेः। यत्र विकृतौ स्तोमसङ्ख्या यथाप्रकृत्येवावतिष्ठते, वैकृतानि च सामान्तराणि तावत्सङ्ख्यान्युपदिष्टानि, यत्र वा पुनस्तोमादौ "द्वादशस्तोमं माध्यन्दिनं सवनम्" इति प्राकृतसङ्ख्यातो हीन-

सङ्ख्या श्रुता, तत्रोभयत्र परं द्रव्यविकारः—प्राकृतसामनिवृत्तिः, तां विना विकृतौ निवेशासम्भवात् ॥

इति द्वादशं राजसूये राजसामादिसमुच्चयाधिकरणम् ॥ १२ ॥

१३

त्रिवृत् पञ्चदशस्सप्तदश एकविंश इत्येवं चतुष्टोमो ज्योतिष्टोमः प्रकृतिः। सन्ति च विकृतिसोमा विवृद्धस्तोमकाः—"एकविंशेनातिरात्रेण प्रजाकामं याजयेत् त्रिणवेनौजस्कामम्" इत्यादयः। तत्र वैशेषिकाणि [1]कतिपयानि सामान्याम्नातानि। किमेषां प्रत्यक्षश्रुतसाम्नां यत्र क्वचित् स्तोत्रे यत्र क्वचित् समावेशः, समाविष्टैश्च तैः प्राकृतसाम्नामुद्धारः? अथवा पवमानस्तोत्रे गायत्रीबृहत्यनुष्टुप्सु समावेशः, समाविष्टैश्च तैः प्राकृतसाम्नामुद्धारः? इति संशयः। अविशेषाद्यत्र क्वापि स्तोत्रे यत्र क्वाप्यृचीति प्राप्ते, सिद्धान्तयति—

**पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ॥ २० ॥**

पवमानस्तोत्रे गायत्रीबृहत्यनुष्टुप्सु प्रत्यक्षश्रुतसाम्नां निवेशः प्राकृतसाम्नां ताभ्य उद्धारश्च स्याताम्, नान्यत्र स्तोत्रे नाप्यन्यस्यामृचि। कुतः? तस्मिन्नावापोद्वापदर्शनात्—तस्मिन् पवमानस्तोत्रे प्राकृते साम्नामावापोद्वापयोः श्रवणात्। एवं हि पवमानस्तोत्रं प्रकृत्य श्रूयते—"त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च। अत्र ह्येवावपन्त्यत एवोद्वपन्ति" इति। अत्रैव—पवमानस्तोत्रगतासु गायत्रीबृहत्यनुष्टुप्स्वेव प्राकृतीषु वैशेषिकसामान्यावपेयुः, अतः—आभ्यो गायत्रीबृहत्यनुष्टुब्भ्यः प्राकृतीभ्यः प्राकृतसामान्युद्धरेयुरित्यर्थः॥

ननु ह वै शब्दोपबन्धाद्वर्तमानापदेशाच्च नेदं वाक्यं विधायकमित्यत आह—

**वचनानि त्वपूर्वत्वात् ॥ २१ ॥**

तुरवधारणे। सत्यपि हवैशब्दोपबन्धे वर्तमानापदेशे चैवञ्जातीयकानि "उपरि हि देवेभ्यो धारयति" इत्यादिवाक्यान्यप्राप्तार्थत्वाद्विधायकानीति व्यवस्थापितं तृतीयस्य निवीतपादे 'विधिस्तु धारणेऽपूर्वत्वात्' इत्यत्र। अत इदमपि वाक्यं

---

१. कतिपयसामानि. ग.

विधायकं भवितुमर्हतीत्यर्थः। न च पवमानस्तोत्रे यावावापोद्वापौ तौ गायत्र्यादिष्वेवेत्येव वचनव्यक्तिः। ततश्च पवमानविषयावापोद्वापमात्रस्य ऋगन्तरेषु व्यावृत्तावपि न स्तोत्रान्तरेषु तद्व्यावृत्तिसिद्धिरिति वाच्यम्। "त्रीणि ह वै यज्ञस्य" इत्युपक्रमाद्धि यज्ञगतयोरेवावापोद्वापयोरयं देशनियमः, न तु पवमानमात्रगतयोः। ततश्च पवमानस्तोत्रे यावावापोद्वापौ तौ गायत्र्यादिष्वेवेति न वचनव्यक्तिः, किन्तु प्रकृतौ प्रत्यक्षश्रुतसामसम्बन्धिनौ यावावापोद्वापौ पाठादेव सर्वस्तोत्रेषु यत्र क्वचिदृक्षु प्रसक्तौ तौ पवमानगतगायत्र्यादिष्वेवेति वचनव्यक्तिः। एवञ्चैकविंशतिरात्रादौ पवमानस्तोत्रादन्यत्रावृत्त्यैव सङ्ख्यापूरणम्, न तु सामान्तरावापः, नापि प्राकृतसाम्नामुद्वापः। न चैकविंशतिरात्रेणेति श्रूयमाणापि स्तोमवृद्धिः पवमानमात्रविषयेति भ्रमितव्यम्, "द्वात्रिंशाः पवमाना अभिषेचनीयस्य" इतिवत् पवमानशब्दाभावात्। एतेन "अत्र ह्येवावपन्ति" इत्यपूर्वविधिरित्यपास्तम्, कौत्सादिसाम्नां पाठादेवावापसिद्धेः। न च यत्र विकृतौ न सामान्तरपाठस्तत्रावापस्याप्राप्तेरपूर्वविधिरस्त्विति वाच्यम्. तत्रापि सामान्तरानयनेन सङ्ख्यापूरणस्य वक्ष्यमाणन्यायसिद्धतया तदपूर्वविधित्वासम्भवात्। एवकारेण स्पष्टमेव परिसङ्ख्याविधित्वावगमाच्च। ततश्च प्रकृतौ यौ आवापोद्वापौ प्रसक्तौ तौ पवमानस्तोत्रगतगायत्र्यादिष्वेव नान्यत्र स्तोत्रेष्वित्येवमेवकारार्थः परिसङ्ख्यैवात्र विधीयत इति युक्तम्। न च परिसङ्ख्यायां त्रैदोष्यं शङ्क्यम्, इह तस्या एवकारवाच्यत्वेन स्वार्थत्यागपरार्थस्वीकारलक्षणदोषद्वयाभावात्। किन्तु प्राप्तबाधलक्षण एव दोष इति नात्यन्तदुष्टेयं परिसङ्ख्या। ननु यदा कौत्सादिसाम्नामपि विवृद्धस्तोमेषु क्रतुषु पाठबलादेव प्राकृतीष्वृक्षु सर्वत्र प्राप्तिस्स्यात्, तदा भवेदेवं परिसङ्ख्या न त्वेवमस्ति। तथा हि—प्रत्यक्षश्रुतानि कौत्सादिसामानि, आगमनीयानि च सामसमाम्नायाध्ययनसिद्धस्वस्वयोनिभूतास्वेव ऋक्षु क्लृप्तानि ऋगन्तरेषु तान्यूहेन कल्पनीयानि। ततश्च तेषामुभयेषामपि साम्नां न प्राकृतीष्वृक्षु प्रसक्तिः। तथासत्यक्लृप्तकल्पनाप्रसङ्गात् सामसमाम्नायाध्ययनसिद्धसामस्वरूपान्यथाभावप्रसङ्गाच्च। ततश्च यत्र क्वचित् स्तोत्रे क्वचित् प्राकृतीष्वृक्षु कौत्सादिसाम्नामागमनीयसाम्नाञ्च यावावापोद्वापौ प्रसक्तौ तौ प्राकृतीषु गायत्र्यादिष्वेवेत्येव परिसङ्ख्याविधिरिति न युज्यते, किन्त्वपूर्वविधिरेवेति चेत्—नैष दोषः; यदि हि प्रकृतावपि सामोपदेशबलादेव तद्योनिभूतानामृचां प्राप्तिस्स्यात्, तदा विकृतौ कौत्सादि-

साम्नामपि तुल्यन्यायतया प्राप्तिस्स्यात्, नैवमस्ति। प्रकृतौ हि क्रमप्रकरणाभ्यां योनिभूता ऋचोऽङ्गत्वेन प्रज्ञाताः, ताश्च विकृतिष्वपि चोदकतः प्राप्ता न बाधमर्हन्ति, गुणभूतसामान्यथाभावभयेन प्रधानभूतानामृचां बाधस्यायुक्तत्वात्, सामानि प्रति ऋचां संस्कार्यतया प्रधानत्वात्। अतः प्राकृतीष्वेव ऋक्षु क्वचित् प्रत्यक्षश्रुतान्यागमयितव्यानि च सामानीति प्राप्ते पवमानगतगायत्र्यादिष्वेवेति परिसङ्ख्याविधिरेवाश्रयितुमुचितः। एवञ्चैवकारोऽप्यर्थवान् भवति। अस्तु वा "अत एवोद्वपन्ति" इत्यपूर्वविधिः, तथापि न स्तोत्रान्तरेष्वावापप्रसक्तिः, अस्य वचनस्य प्रकरणबलेन पवमानविषयकत्वात्, स्तोत्रान्तरेष्वावापे विधायकवचनान्तराभावाच्च। अत्र गायत्र्यादिषु साम्नामावापे विहिते तत एवोद्वापस्यार्थसिद्धत्वात् "अत एवोद्वपन्ति" इत्यनुवादमात्रमिति ध्येयम्॥

इति त्रयोशमावापोद्वापाधिकरणम्॥ १३॥

१४

दर्शपूर्णमासयोरस्त्यावाहननिगदः—"अग्निमग्न आवह" इत्यादिः। अस्ति स्वाहाकारनिगदः—"स्वाहाग्निम्" इत्यादिः। अस्ति स्विष्टकृन्निगदः—'अयाडग्निरग्नेः प्रियाधामानि' इत्यादिः। अस्ति च सूक्तवाकनिगदः—'अग्निरिदं हविरजुषत' इत्यादिः। सन्ति च हुतानुमन्त्रणादिमन्त्राः—"अग्नेरहं देवयज्यया" इत्यादयः। सन्ति च त्यागवाक्यानि—'अग्नय इदं न मम' इत्यादीनि। तत्र किम् अग्निः शुचिः पावकः इन्द्रो वज्री पुरन्दर इत्यादिपर्यायेष्वन्यतमेन केनचिच्छब्देनाग्न्यादिदेवता निर्देष्टव्याः? उत "आग्नेयोऽष्टाकपालः" इत्यादिविधिगताग्न्यादिशब्देनैव? इति संशयः। विनिगमकाभावादन्यतमेनेति ब्रूमः। निगमेष्वग्न्यादिशब्दास्तु पाक्षिकानुवादमात्रमिति प्राप्ते, सिद्धान्तयति—

**विधिशब्दस्य मन्त्रत्वे भावस्स्यात्तेन चोदना॥ २२॥**

मन्त्रग्रहणं त्यागवाक्यस्याप्युपलक्षणम्। त्वप्रत्ययस्तु स्वार्थिकः, अद्येत्यर्थे 'अद्यत्व' इति महाभाष्ये प्रयोगदर्शनात्। मन्त्रत्वे-आवाहनादिनिगदे त्यागवाक्ये च विधिगताग्न्यादिशब्दस्य भावः—उच्चारणनियमस्स्यात्। यतः आग्नेयादिवाक्ये तेन—अग्न्यादिशब्देन यागस्य चोदना-विधिः। अग्न्यादिशब्दकरण-

कयागविधिरिति यावत्। आग्नेय इत्यादितद्धितेन ह्यग्निदेवताकं हविरित्यवगतम्। देवतात्वं च त्यज्यमानहविरुद्देश्यत्वम्। अग्न्यादेर्हविरुद्देश्यत्वञ्च अग्नय इदं न ममेत्येवं निवृत्तयजमानस्वत्वकहविस्स्वामित्वात्मकम्। [तद्धि] चतुर्थ्यन्तशब्दोच्चारणविषयत्वमेव। ततश्च देवतात्वस्योद्देश्यनिबन्धनत्वादग्न्यादिदेवतात्वं [यदा]ग्नेयादिशब्दत एव त्यागवेलायां तदुद्देशायाग्न्यादिशब्दोच्चारणमपेक्षते। ततश्चाग्न्यादिदेवताकं हविः कुर्यादिति श्रौतोऽर्थः। अग्न्यादिशब्दमुच्चार्य हविस्त्यजेदिति[1] त्वार्थिकः। तेन विना देवतात्वस्यानिर्वाहात्। हविस्त्यागकालीनचतुर्थ्यन्तशब्दोच्चारणविषयत्वमेव हि देवतात्वम्। न च श्रौतार्थिकोभयविधौ गौरवं शङ्क्यम्। आवश्यकत्वादग्न्यादिशब्दमुच्चार्य हविस्त्यजेदित्येवमार्थिकशब्दोच्चारणमेव ह्यत्र विधीयते। तद्विधौ चाग्न्यादिशब्दार्थस्य देवतात्वं प्राप्तमाग्नेय इत्यादितद्धितेनानूद्यत इति नोभयविधिगौरवम्। यथा फलचमसे श्रौतस्यापि भक्षणस्य न विधिः, किन्त्वार्थिकस्य त्यागस्य तद्विधौ भक्षणस्य श्रौतस्याप्यनुवादः, तद्वत्। केचित्तु—इन्द्रादिशब्दानां लोकतोऽर्थानवगमेनानर्थकत्वादर्थस्य देवतात्वाभावाच्छब्द एव देवतेति तन्न; तेषां लोकतोऽर्थानवगमेऽपि मन्त्रार्थवादादितोऽर्थावगमसम्भवात्। अन्यथार्थवत्वाभावेन प्रातिपदिकत्वाभावात् सुबुत्पत्त्यनुपपत्तेः, अग्नय इदं न ममेत्यादितादर्थ्यचतुर्थ्यनुपपत्तेश्च। हविः प्रति स्वामित्वलक्षणशेषित्वात्मकमेव हि तादर्थ्यं वाच्यम्। न ह्येतदचेतनस्य शब्दस्य सम्भवति। अग्न्यादिशब्दार्थस्य तु विग्रहादिपञ्चकस्य षष्ठे वर्णितत्वात्तद्युज्यते। न चैवमपि आग्नेयादिवाक्ये अग्न्यादिशब्दमुच्चार्य हविस्त्यजेदिति विधिलाभाद्धविस्त्यागमात्रे विधिगतशब्दनियमलाभेऽपि निगदेषु कथं तन्नियम इति वाच्यम्, हविस्त्यागवेलायामग्न्यादिशब्दस्फूर्तये अग्न्यादिशब्दविधिपर्यालोचनस्यावश्यकत्वे सति हविस्त्यागतः प्राक् पश्चाच्च प्रयोगवेलायां निगदेष्वप्यग्न्यादिशब्दस्यैव सन्निहितत्वेन तन्नियमलाभात्॥

अथ निगदेषु विधिगतशब्दनियमलाभे युक्त्यन्तरं वदन् पाक्षिकानुवादत्वमुक्तं निराचष्टे—

**शेषाणां चोदनैकत्वात्तस्मात् सर्वत्र श्रूयते॥ २३॥**

शेषाणां—कर्मसमवेतदेवतास्मरणार्थानां मन्त्राणामाग्नेयादिविधिनैकत्वात् साम्यात्। विधाविव तेष्वप्यग्न्यादिशब्दस्यैव प्रत्यक्षपठितत्वाविशेषादिति यावत्।

१. इत्येवमार्थिकः ख.

न तत्र पर्यायप्रसक्तिरिति शेषः। ननु तेषु मन्त्रेष्वग्न्यादिशब्दः पाक्षिकानुवादोऽस्तु, तत्राह—तस्मादित्यादि। ल्यब्लोपे पञ्चमी। तं विधिगतमग्न्यादिशब्दमनतिक्रम्य सर्वत्रोदाहृतमन्त्रेष्वग्न्यादिशब्दः नित्यवत्पठ्यते। पाक्षिकानुवादत्वे तु तेषु क्वचिदपि [ न ] पर्यायशब्दः श्रूयते। अतो न पाक्षिकानुवादत्वम्। तस्मादुदाहृतमन्त्रेषु त्यागवाक्येषु च विधिगतशब्देनैव देवतानिर्देशः॥

इति चतुर्दशं विधिशब्दाधिकरणम्॥ १४॥

१५

सौर्यादिषु विकृतिष्वपि पूर्वाधिकरणन्यायेन सूर्यादिशब्दमुच्चार्य हविस्त्यजेदिति विधिबलात् त्यागेषु विधिगतशब्दनियमस्सिद्ध एव। आवाहनादिमन्त्रेषु चोदकप्राप्तेषु सूर्यादिशब्दो न प्रत्यक्षपठितः। तत्राग्न्यादिशब्दस्थाने सूर्यादिशब्द आगमयितव्यः। तत्र विनिगमकाभावादर्थप्रत्ययार्थः कश्चिच्छब्द आगमयितव्य इति प्राप्ते, सिद्धान्तयति—

**तथोत्तरस्यां ततौ तत्प्रकृतित्वात्॥ २४॥**

प्रकृतिवद् उत्तरस्यां ततौ–विकृतावपि आवाहनादिमन्त्रेष्वपि विधिगतशब्दनियमः प्रत्येतव्यः। कुतः? तत्प्रकृतित्वात्—दर्शपूर्णमासप्रकृतिकत्वात्। प्रकृतौ ह्याग्नेयादिवाक्येऽग्निशब्दमुच्चार्य त्यजेदिति न केवलं त्यागो विधीयते, कारकाणां मिथस्सम्बन्धायोगात्। किन्तु त्र्यंशभावनापरनामधेये साङ्गप्रयोगेऽग्न्यादिशब्दमुच्चार्य प्रयोगः कर्तव्य इति। तत्र बर्हिराहरणादावपि सर्वत्राग्निशब्दप्रयोगे प्राप्ते निगदेष्वग्न्यादिशब्दपाठः परिसङ्ख्यानार्थः। एवञ्च वैकृतेष्वपि मन्त्रेषु प्रकृतिप्राप्तेष्वग्न्यादिशब्दस्थाने ऊहेन भास्करादिशब्दस्यापि प्राप्तौ विकृतिगतसूर्यादिशब्दः प्राकृतस्याग्निशब्दस्य स्थाने निविशमानः पर्यायान्निवर्तयति। ननु प्रकृतावग्न्यादिशब्दैः प्रकृतापूर्वसम्बन्धिनीं देवतां प्रयोगे प्रकाशयेदित्यवगमात् कथं विकृतावावाहनादिमन्त्रेषु विधिगतसूर्यादिशब्दनियमलाभ इति वाच्यम्। शब्दविधिर्ह्यर्थात् कल्प्यमानः प्रकृतापूर्वसम्बन्धिनीं देवतां विधिगतशब्देन प्रकाशयेदिति कल्प्यते, न त्वग्न्यादिपदैरिति, तथासत्यनेकश्रुतिकल्पनापत्तेः। ततश्च विकृतौ चोदकप्राप्तेष्वपि मन्त्रेषु विधिगतशब्दनियमस्सिद्धः॥

इति पञ्चदशं विकृतिनिगदमन्त्रेष्वपि विधिगतशब्दनियमनाधिकरणम्॥ १५॥

१६

आधाने श्रूयते—"अग्नये पवमानायाष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये" इति। तत्र किं निर्वापादिमन्त्रे हविस्त्यागेषु चाग्निशब्देनैवैकेन देवताभिधानम्? उत पवमानादिशब्देनापि? इति संशये, सिद्धान्तेनोपक्रमते—

**प्राकृतस्य[1] गुणश्रुतौ सगुणेनाभिधानं स्यात् ॥ २५ ॥**

प्रकृतिसिद्धस्याग्नेः पवमानत्वादिगुणनिमित्तकपवमानादिशब्दसहितेनाग्निशब्देनाभिधानं स्यात् ॥

अथ पूर्वपक्षी प्रत्यवतिष्ठते—

**अविकारो वार्थशब्दानपायात्स्याद्द्रव्यवत् ॥ २६ ॥**

वा शब्दः प्रत्यवस्थाने। पवमानहविष्षु अग्नेरभिधाने प्रकृतितोऽविकार'-अवैलक्षण्यमस्तु। अग्निशब्देनैवाभिधानं न तु गुणवाचिपवमानादिशब्देनापीति यावत्। कुतः? अर्थशब्दानपायात्-अर्थस्य अग्नेः, एकेनैवाग्निशब्देनानपायात्-अभिधानसम्भवादिति यावत्। अग्निशब्दे पवमानादिगुणशब्दे च [ विहितेऽपि ] तस्य दृष्टार्थत्वायार्थप्रत्यय एव द्वारमिति वक्तव्यम्। तस्य चैकेनैवाग्निशब्देन सिद्धेर्न पवमानादिशब्दोच्चारणम्। न च विनिगमनाविरहः, चोदकानुग्रहायाग्निशब्देनैव तदभिधानाश्रयणात्। द्रव्यवत्। "सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेत" इति प्रकृतिप्राप्ते छागद्रव्ये वशात्वगुणविधानेऽपि "छागस्य वपाया मेदसः" इति प्राकृतमन्त्रस्थाने छागस्य वपाया मेदस इत्येव प्रयोगः, न तु वशात्वप्रकाशनाय वशाशब्दोऽपि तद्वत् ॥

अथ सिद्धान्ती प्रत्याचष्टे—

**[2]आरम्भसमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात् ॥ २७ ॥**

वा शब्द एवार्थे। अग्निशब्दं पवमानादिशब्दमुच्चार्य त्यजेदिति चोदितेन विहितेन-अग्निशब्देन पवमानादिगुणशब्दसहितेनैवार्थस्य-अग्नेः अभिधानं स्यात्,

---

१. प्रकृतगुणश्रुतौ. २. तथारम्भ.

न त्वग्निशब्देनैव। कुतः? श्रुतिसमवायित्वात्-श्रुतिषु "अग्नये पवमानाय" इत्यादिविधिषु पवमानादिगुणशब्दस्याग्निशब्दस्य च समवायित्वात्-समावेशात्। ननु विहितस्यापि पवमानादिशब्दस्यार्थप्रत्ययद्वारकत्वादर्थप्रत्ययस्य चैकेनैवाग्नि-शब्देन चोदकानुगृहीतेन सिद्धेर्न गुणशब्दोच्चारणमित्युक्तम्, तत्राह-आरम्भ-समवायादिति। आरम्भे प्रथमत एव गुणशब्दसमुच्चयावगमादिति यावत्। एकै-कस्मिन् वाक्ये विहितस्य शब्दद्वयस्य समुच्चये प्रथमत एवावगते पश्चाद् द्वारत्वेन आपतन्नर्थप्रत्ययो न प्रथमावगतं समुच्चयं बाधितुमीष्टे, किन्तु तदविरोधेनैव समुच्चितयोश्शब्दयोरर्थप्रत्ययः पृथग्भवद् द्वारत्वमादाय विश्राम्यति। यथा "चतुर्भिरभ्रिमादत्ते" इत्यत्रैकैकस्य अभ्र्यादानप्रकाशनसामर्थ्येऽपि वचनबलात् समुच्चयस्तद्वत्। विपक्षे बाधकमाह—अवचने चेति। पवमानादिशब्देनानभिधाने पवमानत्वादिगुणविधानम् अनर्थकं स्यात्, गुणस्य त्यागादिषु क्वाप्यसम्बन्धात्॥

अथ यदुक्तं वशावदिति तत्राह—

**द्रव्येष्वारम्भगामित्वादर्थेऽविकारस्सामर्थ्यात्॥ २८॥**

अजा वशा मेषी वशा गौर्वशेत्येवञ्जातीयकेषु[1] द्रव्येषु "छागस्य वपाया मेदसः" इति प्राकृतमन्त्रमूहित्वा द्रव्यनिर्देशात्मके अर्थे-कार्ये कर्तव्ये अविकारः--प्रकृतेरवैलक्षण्यमाश्रयणीयम्। छागशब्देनैव द्रव्यं निर्देष्टव्यम्, न तु वशाशब्देनेति यावत्। कुतः? सामर्थ्यात्-एवं सत्येव चोदकस्य सङ्गतार्थत्वात्। वशाशब्देन तन्निर्देशे चोदकविरोधात्। वशाशब्देन द्रव्यनिर्देशाभावेऽपि विधौ वशाशब्दस्य सङ्गतार्थकत्वादित्यप्यर्थः। कुतः? आरम्भगामित्वात्-आरम्भः उपाकरणेन अजादिद्रव्यपरिग्रहः, तद्गामित्वात्। तदौपाधिकत्वादिति यावत्। विधौ वशाशब्दा-भावे हि अवशापि परिगृह्येत, तद्व्यावृत्तये वशाग्रहणमावश्यकमिति निगदादिषु वशाशब्दाभावेन तदानर्थक्यम्। पवमानादिशब्दस्य तु निगदादिषूच्चारणं विना किञ्चिदपि प्रयोजनं नास्तीति तदुच्चारणमपि देवतानिर्देशेष्वाश्रयणीयमिति वैषम्यम्॥

इति षोडशं पवमानेष्टिष्वग्नेः सगुणेनाभिधानाधिकरणम्॥ १६॥

---

१. जातीयकद्रव्येषु. ख.

१७

पौनराधेयिक्यामिष्टौ आज्यभागौ प्रकृत्य श्रूयते—"वृधन्वानाग्नेयः कार्यः" इति। तत्र किमग्निशब्देन वृधन्वच्छब्देन चाग्नेः निर्देशः? उताग्निशब्देनैव? इति संशये[1], पूर्वपक्षयति—

**वृधन्वान् पवमानवद्विशेषनिर्देशात् ॥ २९ ॥**

"वृधन्वन्तमग्निमावह" इत्येवं वृधन्वच्छब्दोऽपि देवताभिधानाय प्रयोक्तव्यः। कुतः? विशेषनिर्देशात्—विधौ वृधन्वानिति गुणविशेषश्रवणात्। पवमानवत्। यथा "अग्नये पवमानाय" इति विधौ पवमानशब्देनापि देवताभिधानं तद्वत्॥

अथ सिद्धान्तयति--

**मन्त्रविशेषनिर्देशान्न देवताविकारस्स्यात् ॥ ३० ॥**

आवाहनादावग्नेराज्यभागदेवतायाः अविकारः—प्रकृतितो वैलक्षण्यं न स्यात्, किन्तु प्रकृतिवदग्निशब्देनैवाभिधानं स्यात्, न तु वृधन्वच्छब्देनापि। कुतः? मन्त्रविशेषनिर्देशात्—"वृधन्वानाग्नेयः" इति विधौ [2]हि वृधन्वत्ता नाग्नावन्वेति। तथा सति सापेक्षत्वेनासामर्थ्यात्तद्धितानुपपत्तेः। किन्तु आग्नेये आज्य भागे कर्मणि, तस्य च कर्मणो वृधन्वत्वासम्भवादानर्थक्यतदङ्गन्यायेन वृधन्वत्ता मन्त्रेऽन्वेति। "अग्निं स्तोमेन [3]वर्धय" इति मन्त्रे हि वृधधातुरस्ति। तद्द्वारा आग्नेय आज्यभागो वृधन्वान् वृधधातुप्रकृतिशब्दयुक्तमन्त्रक इत्यर्थः। वृधवानिति वक्तव्ये नकारोपजनश्छान्दसः। ततश्च वृधन्वानिति मन्त्रविधिरेवायं न त्वग्निदेवतायां गुणविधिरिति नावाहनादिमन्त्रेषु वृधन्वच्छब्देन तन्निर्देशः। न चाग्नेयशब्दस्य प्रकृताज्यभागपरत्वमङ्गीकृत्यानर्थक्यतदङ्गन्यायावतरणेऽपि तदङ्गदेवतायामग्नौ वृधन्वत्तागुणोऽवतिष्ठतामिति वाच्यम्। आनर्थक्यतदङ्गन्यायावतरणे सति मन्त्रविशेषणविधिपर्यवसानमेव युक्तम्, न तु देवताविशेषणविधिपर्यवसानम्। तथा सत्यपूर्वविधित्वापातात्, प्राप्ताज्यभागानुवादेन वृधन्वत्तानियमविधौ

---

१. संशयः। तत्र. क, ख.        २. हि. नास्ति. अ क.

३. 'बोधय' इत्यपि मन्त्रः। अतस्सूत्रपाठो 'बुधन्वान्' इत्यपि सङ्गच्छते। तदनुसारेण 'बुधन्वान्' बुधन्वत्ता' 'बुध धातुः' इत्यादयः पाठा मातृकासूपलभ्यन्ते।

लाघवात्। न चाग्निं स्तोमेनेति मन्त्रस्यात्राज्यभागक्रमे पठितस्य लिङ्गक्रमाभ्यामेव प्राप्तत्वान्मन्त्रविशेषणत्वेन विधिवैय्यर्थ्याद्देवतायामेव वृधन्वत्ताविधिरिति वाच्यम्। मन्त्रान्तराण्यपि ह्यग्निलिङ्गान्यत्र प्रकरणे पठ्यन्ते–"सप्त ते अग्ने" इत्यादीनि। तत्र मन्त्रविशेषनियमाय वृधन्वानिति वचनमर्थवत्। एवञ्च वृधन्वत्ताया मन्त्रविशेषणत्वेऽपि न विधिवैय्यर्थ्यम्। तस्मादत्राग्निशब्देनैवाभिधानम्, न तु वृधन्वच्छब्देनापि। यद्यपि तैत्तिरीयशाखायां "वृधन्वत्याग्नेयस्याज्यभागस्य पुरोनुवाक्या भवति" इति वृधन्वत्ता पुरोनुवाक्यायामेव स्पष्टं श्रुता, तथापि "वृधन्वानाग्नेयः कार्यः" इति शाखान्तरीयवचनमवष्टभ्याधिकरणप्रवृत्तिः॥

इति सप्तशमाधानाज्यभागयोरग्नेर्निर्गुणेनाभिधानाधिकरणम्॥ १७॥

१८

ज्योतिष्टोमे श्रूयते—"मैत्रावरुणीं गां वशामनुबन्ध्यामालभते" इति। तत्र पठ्यते—"मित्रावरुणाभ्यामुस्राया वपाया मेदसोऽनुब्रूहि" इत्यादि। सन्ति च गोरभिधानानि गौः अघ्न्या उस्रा अप्सुनीत्यादीनि। प्रकृतौ त्वग्नीषोमीयपशौ "अग्नीषोमीयं पशुमालभेत" इति पशुशब्देन द्रव्यविधिः। मन्त्रेषु तु "छागस्य वपाया मेदसः" इत्येवं तदन्यशब्देन द्रव्यनिर्देश इति स्थितिः। किमिहानुबन्ध्यायां प्रकृतिवद्विधिगतगोशब्दादन्येन केनचित् पर्यायशब्देन द्रव्याभिधानम्? उतोस्राशब्देनैव? इति संशयः। तथा अग्नीषोमीयपशौ "पृषदाज्येन वनस्पतिं यजति" इति श्रुतम्। सन्ति च वनस्पतेरभिधानानि–वृक्षः द्रुमः पादप इत्यादीनि। अस्ति च पशुप्रकृतौ दर्शपूर्णमासयोः "अग्निं स्विष्टकृतं यजति" इति विधिः। अस्ति च तत्रावाहनादिनिगदेषु स्विष्टकृत्त्वं विहाय केवलाग्निशब्दः "अग्निं होत्रायावह स्वाहाग्निं होत्रात् यक्षदग्ने होतुः प्रियाधामानि" इत्यादिषु। तदिहाग्नीषोमीयपशौ चोदकप्राप्तेषु निगदेषु प्रकृतिवद्विधिगतवनस्पतिशब्दविलक्षणेन वृक्षादिशब्देनाभिधानम्? उत वनस्पतिशब्देनैव? इति संशयः। न च वनस्पतेः प्राकृतदेवतास्थानापन्नत्वाभावादपूर्वत्वान्नावाहनादिनिगदेष्वनुक्रमणप्रसक्तिरिति वाच्यम्। सङ्कर्षकाण्डे वनस्पतेः स्विष्टकृद्विकारत्वस्य वक्ष्यमाणत्वात्। उक्तञ्चात्र भाष्ये शबरस्वामिभिः–'वनस्पतिः स्विष्टकृद्विकार इति सङ्कर्षे वक्ष्यते' इति। एवञ्च सङ्कर्षसूत्राणां शबरस्वामिपरिग्रहाभावात्तेषां जैमिनिप्रणीतत्वे ये विप्रतिपद्यन्ते, ते पण्डितम्मन्याः प्रत्युक्ताः॥

तत्र पूर्वपक्षयति—

**विधिनिगमभेदात् प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदः स्यात् ॥ ३१ ॥**

प्रकृतौ-अनुबन्ध्याप्रकृतिभूते अग्नीषोमीयपशौ तत्प्रकृतिभूतदर्शपूर्णमासयोश्च पशुविध्यपेक्षया स्विष्टकृद्विध्यपेक्षया च "छागस्य वपाया मेदसः" इत्यादिमन्त्राणां "अग्नि होत्राय" इत्यादिमन्त्राणाञ्च द्रव्यदेवताभिधायकशब्दविषये वैलक्षण्यात् तद्विकृतावप्यनुबन्ध्यायामग्नीषोमीयपशौ च द्रव्यदेवतानिर्देशकशब्दविषये विधितो वैलक्षण्यं स्यात्। कुतः ? तत्प्रकृतित्वात्-अनुबन्ध्याया अग्नीषोमीयपशुप्रकृतित्वात्, अग्नीषोमीयपशोश्च दर्शपूर्णमासप्रकृतित्वात्। अनुबन्ध्याप्रकृतिभूतेऽग्नीषोमीयपशौ हि पशुशब्देन द्रव्यविधिः, छागशब्देन निगमेषु द्रव्यनिर्देश इति वैलक्षण्यं स्थितम्। अतस्तद्विकृतावनुबन्ध्यायामपि तथा भाव्यम्। तस्मादनुबन्ध्यायां विधिगतगोशब्दादन्येन उस्रादिशब्देन केनचिद् द्रव्याभिधानम्। न च विधिश्रुतत्वादग्न्यादिशब्दवद् गोशब्दनियमो न्याय्य इति वाच्यम्, वैषम्यात्। आग्नेयादिवाक्ये हि तद्धितावगतदेवतात्वस्याग्न्यादिशब्दोच्चारणनिबन्धनत्वात्तथा विधशब्दविधिरर्थाल्लभ्यते। द्रव्यविधौ तदीयशब्दोच्चारणविधौ च न किञ्चित्प्रमाणमस्ति। न चैवमपि "उस्राया वपाया मेदसः" इति पाठादुस्राशब्दनियमस्स्यात्। एवमपि विधिवैलक्षण्यसम्भवादिति वाच्यम्। प्रकृतौ हि तावदग्नीषोमीयपशौ पाठबलादेव छागशब्दस्य विशेषतो विधिरनुमीयत इत्यस्तु नियमः। तद्विकृतौ त्वनुबन्ध्यायां यावदुस्राशब्दपाठात्तद्विधिः कल्प्यते, ततः प्रागेव चोदकाद्विधिनिगमाद्विधिनिगमवैलक्षण्यप्रापकाद्विधिगतगोशब्दभिन्नस्य कस्यचिन्नियमतः प्राप्तत्वान्नोस्राशब्दनियमे प्रमाणमस्ति। उस्राशब्दपाठस्तु उपलक्षणमात्रं भविष्यति। यद्यपि दार्शपूर्णमासिकस्विष्टकृन्निगदेषु अग्निशब्दस्य "अग्नि स्विष्टकृतं यजति" इति विधिगताग्निशब्दाद् वैलक्षण्यं नास्ति, तथापि सगुणनिर्गुणत्वकृतवैलक्षण्यमस्तीति तद्विकृतावग्नीषोमीयपशावपि विधिगतशब्दवैलक्षण्याय वनस्पतिशब्दादन्येन केनचिद्वृक्षादिशब्देनाभिधानं युक्तम्। अन्यथा गुणविकृतवैलक्षण्यस्यापि तत्रालाभाद्विधिनिगमवैलक्षण्यं चोदकप्राप्तमत्यन्तं बाध्येत ॥

अथ सिद्धान्तयति—

**यथोक्तं वा विप्रतिपत्तेरचोदनात् ॥ ३२ ॥**

वा शब्दोऽवधारणे। उक्तम्-पठितमुस्राशब्दमनतिक्रम्य यथोक्तम्। पाठबलादुस्राशब्देनैव द्रव्याभिधानमिति यावत्। कुतः ? विप्रतिपत्तेरचोदनात्—श्रुतार्थविलक्षणतया प्रतिपद्यते गम्यत इति विप्रतिपत्तिः आर्थिकोऽर्थः, तस्य अचोदनात्—अनतिदेशात्। न ह्यार्थिकं चोदकः प्रतिदिशति। अग्नीषोमीयपशुविधौ हि पशुशब्दः श्रुतः। निगदेषु तु छागशब्दः पठितः। पाठबलाच्च छागशब्दनियमविधिः कल्प्यत इति स्थितिः। विधिनिगमवैलक्षण्यन्त्वार्थिकम्, न तु विहितमिति न तस्य विकृतावतिदेशः। एवञ्च पाठबलादुस्राशब्दविध्यनुमानप्रवृत्त्यप्रतिबन्धादुस्राशब्देनैव द्रव्यनिर्देशः। वनस्पतिशब्दविषये तु सूत्रमेवं योज्यम्—यथोक्तं वनस्पतिशब्दं विधौ पठितमनतिक्रम्य विधिगतवनस्पतिशब्देनैव तदभिधानम्। कुतः ? विप्रतिपत्तेरचोदनात्—अर्थिकस्य विधिनिगमवैलक्षण्यस्यानतिदेशादित्येकोऽर्थः। नन्वेवमप्यावाहनादिनिगदेषु चोदकप्राप्तेषु वनस्पतिशब्दस्य पाठाभावाद्देवतात्वाभावेन शब्दविध्यलाभाच्च। वनस्पतिवृक्षादियत्किञ्चित् पर्यायशब्दनिर्देशः कुतो न स्यात् ? ऊहस्य पुरुषेच्छाधीनत्वादित्यत्राप्येतदेवोत्तरम्—विप्रतिपत्तेरचोदनादिति। "वनस्पतिं यजति" इत्यादिविधौ [1]वनस्पतिशब्दस्यैव विशिष्य प्रतिपत्तेः-श्रवणात् तदन्यस्य चाचोदनात्—अविधानादित्यर्थः। यद्यपि वनस्पतिं यजतीति विधौ आग्नेयवाक्य इव देवतात्वबोधकतद्धितो न श्रुतः, येन देवतात्वस्योद्देश्यत्वनिबन्धनत्वात्तच्छब्दविधिर्लभ्येत, तथापि यजिना देवतात्वं वनस्पतेरवगतम्। देवतोद्देश्यकहविस्त्यागस्यैव यजिवाच्यत्वात्। वनस्पतिमिति द्वितीया तु सम्प्रदानत्वे वर्तते। 'सम्प्रदानस्य कर्मसंज्ञा वक्तव्या' इत्यनुशासनात्। देवतात्वञ्च वनस्पतेरुद्देश्यत्वनिबन्धनमित्याग्नेयादिवाक्येऽग्न्यादिशब्दवद्वनस्पतिशब्दनियमविधिलाभान्न पर्यायवृक्षादिशब्दप्रसक्तिः। यद्यपि [2]वृक्षद्रुमादिशब्दास्सामान्यतस्तरुवचनाः, वनस्पतिशब्दस्तु वृक्षविशेषवाची 'वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिः' इति कोशात्। तथापि वैदिकशिरोमणि [प्रणी]तभाष्यादिप्रामाण्याद्वनस्पतिशब्दो वृक्षादिशब्द-

---

१. इति विधौ. ख. २. वृक्ष. नास्ति. क, ख.

पर्याय एवास्थेयः[१] । अत एवाधाने सम्भारसम्भरणप्रकरणे वानस्पत्येषु पुष्पफलोपेत-पलाशवृक्षोऽपि परिगणितः कल्पसूत्रेषु ॥

इत्यष्टादशं वानस्पत्याधिकरणम् ॥ १८ ॥

१९

अवभृथे श्रूयते—"अग्नीवरुणौ स्विष्टकृतौ यजति" इति । तत्र किम् 'अग्नीवरुणाभ्यामिदं न मम, अग्नीवरुणाभ्यामनुब्रूहि' इत्येवं केवलाग्नीवरुणशब्देन देवताभिधानम् ? उताग्नीवरुणाभ्यां स्विष्टकृद्भ्याम् इत्येवं स्विष्टकृच्छब्देनापि ? इति संशये, पूर्वपक्षयति—

**स्विष्टकृद्देवतान्यत्वात्तच्छब्दत्वान्निवर्तेत ॥ ३३ ॥**

देवतान्यत्वादिति हेतुगर्भम् । देवता निवर्तेत । कुतः ? देवतान्यत्वात्-प्रकृतौ स्विष्टकृच्छब्दो यस्मिन्नग्नौ, तदपेक्षयाग्नीवरुणयोरन्यत्वात् प्रकृतौ चाग्नेरेव केवलस्य रूढ्या स्विष्टकृच्छब्दकत्वात् । तथाहि-इष्टं यजनं प्रधानयागं सु सुष्ठु कृतवानिति स्विष्टकृत् 'सुकर्म पापमन्त्रपुण्येषु कृञ्' इति भूते क्विप् । शास्त्रकृद् भाष्यकृदित्यादिप्रयोगादुपपदान्तरेऽपि भवति । तदेवमवयवव्युत्पत्त्या "स्विष्टं वै न इदं भविष्यति यदिमं राधयिष्याम इति तत् स्विष्टकृतः स्विष्टकृत्त्वम्" इत्यादिवाक्यशेषबलेन च स्विष्टकृद्यागेनाराधितस्याग्नेर्भूतस्विष्टकरणहेतुत्वमवगतम् । तस्य चावयवार्थस्य स्विष्टकृद्यागसमये असम्भवात्तदानीं प्रयोगनिर्वाहाय स्विष्टकृच्छब्दस्याग्नौ रूढिः स्वीकार्या । अग्नीवरुणयोश्च तदन्यत्वात्तत्र स्विष्टकृच्छब्दोऽनुवर्तितुमर्हति । अतोऽत्र स्विष्टकृच्छब्दो लाक्षणिकः । अग्नीवरुणौ स्विष्टकृत्कार्यकारिणाविति । अग्नीवरुणदेवताकः स्विष्टकृद्याग इति यावत् । ततश्च स्विष्टकृत्त्वं न देवताशरीरप्रविष्टमिति न स्विष्टकृच्छब्देन तन्निर्देशः । शब्दविधेरुद्देश्यत्वनिबन्धनदेवतात्वनिबन्धनदेवतायाः 'विधिशब्दस्य मन्त्रत्वे भावस्स्यात्' इत्यत्रोक्तत्वात् ॥

अथ सिद्धान्तयति—

**संयोगो वार्थापत्तेरभिधानस्य कर्मजत्वात् ॥३४॥**

वाशब्दोऽवधारणे । देवतानिर्देशे स्विष्टकृच्छशब्दस्यापि समवायो भवत्येव । कुतः ? अर्थापत्तेः-स्विष्टकृत्वगुणकाग्निलक्षणदेवतायां प्राकृत्यामग्निलक्षणं गुणिनम-

१. अवस्थेयः. क, ख.

पोद्य, तत्स्थानेऽग्नीवरुणलक्षणगुणिविधेरित्यर्थः। यस्तावत् प्रकृतौ स्विष्टकृत्त्वगुणकाग्नि-देवत्यो यागः, स इह स्विष्टकृत्त्वगुणकाग्नीवरुणदेवत्य इति वचनव्यक्तिः। ननु स्विष्टकृच्छब्दो न गुणवचनः, किन्तु रूढ्या अग्निवचनः। स चाग्नीवरुणयोर्न सम्भवतीत्युक्तमत आह-अभिधानस्य कर्मजत्वादिति। प्रकृतौ स्विष्टकृच्छब्देनाग्ने-रभिधानस्य भूतत्वानादरेणैव स्विष्टकरणकर्तृत्वमादाय क्रियानिमित्तकत्वात्, तस्य चाग्नीवरुणयोरपि सम्भवात्। न हि स्विष्टकृच्छब्दो भूते क्विबन्त एवेत्यस्ति, येन भूतत्वासम्भवाद्रूढिरग्नौ कल्प्येत। सुकर्मादिषूपपदेष्वेव भूते क्विब्विधानात्, किन्तु क्विप्चेति सूत्रेण क्विपैवायं व्युत्पाद्यः। शास्त्रकृदित्यादौ तु तात्पर्यवशाद् भूतत्वप्रतीतिः। एवञ्च स्विष्टकरणकर्तृत्वमात्रेण प्रयोगोपपत्तौ नात्यन्तरूढिकल्पनं युक्तम्। भूतस्विष्टकरणकर्तृत्वस्यापि अनादौ संसारे प्रयोगान्तरमादाय एतद्यागसमये सम्भवाच्च। एवञ्च स्विष्टकृत्त्वस्य प्राकृताग्निस्थानापन्नाग्नीवरुणगुणत्वात् प्रकृति-वदेवं स्विष्टकृच्छब्देनाप्यभिधानमिति॥

इत्येकोनविंशमवभृथेऽग्नीवरुणयोस्स्विष्टकृच्छब्देनाभिधानाधिकरणम ॥१९॥

२०

अग्नीषोमीयपशौ श्रूयते-"वपया प्रचार्याग्नीषोमीयं पशुपुरोडाशं निर्वपति" इति। तत्र "अग्नीषोमाभ्यां पुरोडाशस्यानुब्रूहि" इत्यादिप्रधानप्रचारेऽभिहिते स्विष्टकृद्यागक्रमे "अग्निं यजति" इति श्रुतम्। प्राकृतस्विष्टकृत्त्वगुणकस्याग्नेः प्राप्तौ पुनरग्नेर्विधिर्गुणलोपविधौ पर्यवस्यति। तत्र किं त्यागमात्रे स्विष्टकृच्छब्दलोपः? उत तदीयमन्त्रे "अग्नेः स्विष्टकृतोऽहं देवयज्यया" इति हुतानुमन्त्रणेऽपि? इति संशये, पूर्वपक्षयति-

**सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात् ॥३५॥**

प्रकृतौ स्विष्टकृत्त्वगुणकस्याग्नेः पशुपुरोडाशे गुणलोपे श्रूयमाणे निगमेषु-देवतानिर्देशेषु कर्तव्येषु यावदुक्तम्-यत्र गुणलोपः श्रुतः तत्रैव स्यात्। "अग्निं यजति" इति याग एव गुणलोपः श्रुतो नेतरत्र। अतो न तदीयहुतानुमन्त्रणमन्त्रे स्विष्टकृच्छब्दः। सूत्रे निगमेष्विति बहुवचनन्तु प्रयोगबहुत्वाभिप्रायम्, पशुपुरोडाशे प्रसङ्गात् पाशुकतन्त्रोपकारस्य द्वादशाद्ये वक्ष्यमाणत्वेन तत्र पृथगावाहनादिनिगदा-

भावेन तत्र देवता निर्देशस्याप्रसक्तेः "होता यक्षदग्निं पुरोडाशस्य" इत्यादिप्रत्यक्षपठितपाशुकपुरोडाशिकनिगदेषु स्विष्टकृच्छब्दलोपस्य केवलाग्निशब्दपाठादेव निवृत्तेश्च। अतो हुतानुमन्त्रणमन्त्रे न भवतीति स्विष्टकृच्छब्दलोप इत्येव पूर्वपक्षे फलतीति ॥

अथ सिद्धान्तयति—

**सर्वस्य वैककर्म्यात् ॥३६॥**

वाशब्दोऽवधारणे। त्यागस्य हुतानुमन्त्रणमन्त्रस्य च सर्वस्य स्विष्टकृच्छब्दराहित्यं स्यात्, न तु त्यागमात्रस्य। कुतः? ऐककर्म्यात्-'एके मुख्यान्यकेवलाः' इत्यमरः। एकं मुख्यं कर्म त्र्यंशभावनापरनामधेयप्रयोगात्मकं शेषि यस्य स्विष्टकृत्त्वगुणलोपस्य, स एककर्मा, तस्य भावः ऐककर्म्यम्। 'तथोत्तरस्यान्ततौ तत्प्रकृतित्वात्' इत्यनुपदोक्ताधिकरणन्यायेन स्विष्टकृद्यागप्रयोगे निर्गुणाग्निविधानादिति यावत्। न च भावनोद्देशेन निर्गुणाग्निविधौ धातोरत्यन्तपारार्थ्यप्रसङ्गाद् धात्वर्थयागानुवादेनैव निर्गुणाग्निविधिर्युक्त इति वाच्यम्। धात्वर्थस्वरूपान्वये सत्यानर्थक्यापत्या धातोरत्यन्तपारार्थ्यमप्यङ्गीकृत्य भावनायामेव निर्गुणाग्निविधानस्य स्वीकार्यत्वात्। एतदधिकाशङ्कापरिहारार्थत्वाच्च न पुनरुक्तिः ॥

इति विशमग्नीषोमीयपशौ निर्गुणेनाग्नेरभिधानाधिकरणम् ॥२०॥

२१

दर्शपूर्णमासयोरनूयाजान् प्रकृत्य श्रुतम्—"बर्हिर्यजति" "नाराशंसं यजति" "अग्निं स्विष्टकृतं यजति" इति। किमयं तृतीयोऽनुयाजः प्रधानकर्म? उत संस्कारकर्म? इति संशयः। प्रथमपक्षे स्विष्टकृदग्निदेवत्येन यागेन क्रतुमुपकुर्यादिति वचनव्यक्तिः। द्वितीयपक्षे त्वग्निं स्विष्टकृतं यागेन [1]संस्कुर्यादिति। तत्र प्रकरणात् प्रधानकर्मत्वमेव युक्तम्। न च प्रधानहविश्शेषद्रव्यकस्विष्टकृद्यागीयदेवतासंस्कारार्थत्वमेव पशुपुरोडाशन्यायादाश्रयितुं युक्तम्। "देवो अग्निः स्विष्टकृत्" इति तन्मन्त्रजन्यस्मरणद्वारा दृष्टार्थत्वसम्भवादिति वाच्यम्, वैषम्यात्। पशुपुरोडाशस्य

---

१. कुर्यात्. ख.

हि परत्वङ्गत्वात्तदीयदेवतासंस्कारार्थत्वं युक्तम्। तृतीयस्य त्वनूयाजस्य शेषद्रव्यकस्विष्टकृद्यागस्य चेत्युभयोरपि दर्शपूर्णमासाङ्गत्वाविशेषेण परस्पराङ्गाङ्गि[१]भावासम्भवाद्वैपरीत्यप्रसङ्गाच्चारादुपकारकत्वं युक्तमाश्रयितुमिति प्राप्ते, सिद्धान्तयति—

**स्विष्टकृदावापिकोऽनूयाजे स्यात् प्रयोजनवदङ्गानामर्थसंयोगात् ॥३७॥**

आज्यभागत ऊर्ध्वं प्रधानहविश्शेषद्रव्यकस्विष्टकृद्यागात् प्राग् वैकृतदेवतानामावापः-समावेशनम्। तस्मिन्नावापे उत्तरावधित्वेन भवः आवापिकः। प्रधानहविश्शेषद्रव्यकस्विष्टकृद्यागः तदीयदेवताभूतः अग्निः स्विष्टकृदपि आवापिकः। सः तृतीयानुयाजे तन्मन्त्रजन्यस्मरणद्वारा संस्कार्यस्स्यात्, एवं सत्येव हि तृतीयानुयाजकर्म पशुपुरोडाशवत् दृष्टप्रयोजनकं भवति। न चावापिकस्विष्टकृद्यागस्य तृतीयानुयाजस्य च दर्शपूर्णमासाङ्गत्वाविशेषान्न परस्परमङ्गाङ्गिभाव इति वाच्यम्। दृष्टार्थत्वलाभलोभेनावापिक [२]स्विष्टकृदङ्गस्यापि स्वीकार्यत्वात्। उत्तमप्रयाजस्य "स्वाहाग्निं स्वाहा सोमम्" इत्यादिस्वयाज्यानिगदांशेनाङ्गभूताज्यभागादिदेवतासंस्कारार्थत्वस्येहैव प्रथमपादे 'प्रयाजे च तन्न्यायत्वात्' इत्यत्राभ्युपगतत्वाच्च। न चावापिकस्विष्टकृद्यागस्यैव तृतीयानुयाजाङ्गत्वं किं न स्यादिति वाच्यम्। आवापिकस्विष्टकृद्यागस्य प्रधानहविश्शेषोपजीवित्वेन द्रव्यप्रतिपत्तिद्वारा प्रधानार्थत्वेन "अयाडग्निरग्नेराज्यस्य हविषः प्रियाधामान्ययाट्" इत्यादितद्याज्यानिगदद्वारा इष्टयक्ष्यमाणसर्वदेवतास्मरणार्थत्वेन चावगतस्य स्विष्टकृदग्निलक्षणदेवतामात्रस्मरणद्वारानुयाजार्थत्वासम्भवात्, तृतीयानुयाजस्य तु दृष्टप्रयोजनान्तराभावाददृष्टकल्पनापरिहारायावापिकस्विष्टकृत्संस्कारार्थत्वं युक्तमाश्रयितुम्। कथञ्चिद्दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात्। ननु तृतीयानुयाजस्यारादुपकारकत्वे साक्षात् प्रधानार्थता, स्विष्टकृदर्थत्वे त्वङ्गद्वारेति न संस्कारकर्मत्वमित्यत आह-अङ्गानामर्थसंयोगादिति। आरादुपकारकाणामङ्गानां प्रकरणबलेन क्रतूपकारलक्षणप्रयोजनसंयोगात्, संस्कारकर्मत्वे तु "स्रुचस्संमार्ष्टि" इत्यादौ श्रुत्यादिना संस्कार्येऽर्थे संयोगात्। एवञ्च प्रकृते तृतीयानुयाजस्यावापिकस्विष्टकृदर्थत्वे "अग्निं स्विष्टकृतं

---

१. भावात ? अ.    २. स्विष्टकृत्त्वस्यापि. ख.

यजति" इति श्रुत्यनुग्रहः, आरादुपकारकत्वे तु प्रकरणानुग्रहः। प्रकरणाच्च श्रुतिर्बलीयसी। तस्मात् संस्कारकर्मत्वमेव तृतीयानुयाजस्य प्रयोजनम्। सिद्धान्ते साकम्प्रस्थायीये सर्वहुतत्वात्, स्विष्टकृदभावान्न तृतीयोऽनुयाज इति ॥

इत्यैकविंशमनुयाजेषु स्विष्टकृद्यागस्य संस्कारकर्मताधिकरणम् ॥२१॥

२२

दर्शपूर्णमासयोः श्रूयते—"तिष्ठन् याज्यामन्वाह, आसीनः पुरोनुवाक्याम्" इति। ब्रूयादित्यर्थः। किमिदं याज्यापुरोनुवचनमदृष्टार्थम्? उत देवताप्रकाशनरूपदृष्टार्थम्? इति संशये, पूर्वपक्षयति—

**अन्वाहेति च शस्त्रवत् कर्म स्याच्चोदनान्तरात् ॥३८॥**

चकारस्तुपर्यायः पूर्ववैषम्येऽस्तु। तृतीयानुयाजस्संस्कारकर्म। अन्वाहेति विधीयमानं याज्यापुरोनुवाक्यावचनन्तु अदृष्टार्थकर्म स्यात्। कुतः? चोदनान्तरात्-पुनर्विधानादित्यर्थः। अर्थप्रकाशने हि याज्यापुरोनुवाक्यावचनं न विधेयम्, लिङ्गादेव प्राप्तत्वात्। नापि वचने तिष्ठत्वविधिः, "इषे त्वा" इत्यादिमन्त्रवचनेऽपि प्रसङ्गात्, याज्यापुरोनुवाक्याग्रहणवैयर्थ्याच्च। नापि याज्यापुरोनुवाक्यावचने तद्विधिः, अनुवचनस्वरूपे आनर्थक्यात्। अपूर्वीयानुवचने तद्विधिश्च अनुवचनद्वारा क्रतौ तद्विधिः पर्यवस्यति। न चाविहितमनुवचनं द्वारं भवितुमर्हति। तस्यापि विधौ वाक्यभेदः। अतस्तिष्ठत्त्वगुणविशिष्टं याज्यापुरोनुवाक्यावचनमत्र विधेयम्। तत्र वचनांशस्यार्थप्रकाशने प्राप्तत्वेन पुनर्विधिवैय्यर्थ्यात्तद्बलाददृष्टार्थत्वं शस्त्रवत्। यथा शस्त्रशंसनमदृष्टार्थम्, तद्वत्। स्तुतशस्त्राधिकरणे [1]व्यक्तोक्तमेतत् ॥

अथ सिद्धान्तयति—

**संस्कारो वा चोदितस्य शब्दवचनार्थत्वात् ॥३९॥**

वा शब्द एवार्थे। याज्यानुवाक्यानुवचनेन देवतास्मरणरूपसंस्कार एव स्यात्, न त्वदृष्टार्थं तदनुवचनम्। कुतः? चोदितस्य-अर्थप्रकाशनेऽर्थप्राप्तस्य याज्यापुरोनुवाक्यानुवचनस्य यः शब्दः अन्वाहेति तस्य वचनार्थत्वात्-अनुवादार्थ-

---

१. व्यक्तमेतत्. अ, क.

त्वात्। लिङ्गादेव प्राप्तं याज्यानुवाक्यानुवचनमनूद्य तत्र तिष्ठत्त्वगुणविधानं[1] नानुवचनस्यात्र [2]विधिसंस्पर्शः, येन तद्वैय्यर्थ्यापत्त्यादृष्टार्थत्वमास्थीयेत ॥

अथानुवचनस्याविहितत्वात् कथं तद्द्वारा तिष्ठत्त्वविधिरित्याशङ्क्य निराकरोति—

## अवाच्यत्वान्नेति चेत् स्याद् गुणार्थत्वात् ॥४०॥

अनुवचनस्यार्थप्राप्तस्याविधेयत्वान्न तद्द्वारा क्रतौ तिष्ठत्त्वविधिरिति चेद् ब्रूषे, तत्रेदमुत्तरम्-[3]अर्थप्राप्तग्रहणावेक्षणादिद्वारा भक्षानुवाकमन्त्राणां क्रत्वर्थत्वस्य भक्षपेटिकायां व्यवस्थापितत्वेनार्थप्राप्तस्याप्यनुवचनस्य द्वारत्वसम्भवात्तनुवादेन तिष्ठत्त्वगुणविधिः स्यादेव। ततश्च प्रकृतौ याज्यानुवाक्ययोस्समवेतदेवताप्रकाशनार्थत्वात् सौर्यादिषु विकृतिषु प्राकृतदेवताभावान्न तयोः प्रयोगः ॥

इति द्वाविंशं याज्यापुरोनुवाक्ययोस्संकारकर्मताधिकरणम् ॥२२॥

२३

बह्वृचब्राह्मणे अग्नीषोमीयपशौ श्रूयते—"मनोतायै हविषोऽवदीयमानस्यानुब्रूहीत्याहाध्वर्युः स त्वं ह्यग्ने प्रथमो मनोतेति सूक्तमन्वाह" इति। मनोतेत्यग्निरुच्यते, देवानां मनांसि एतानि सन्निवेशितानि हविर्वहनतः प्रीत्या यस्मिन्निति व्युत्पत्तेः। पृषोदरादित्वादवर्णविकारः, स्त्रीत्वञ्च देवताभिप्राया वा इति वेदभाष्ये। "अग्निर्वै देवानां मनोता तस्मिन् तेषां मनांस्येतानि" इति वाक्यशेषश्च। आग्नेयमेतत् सूक्तम् चोदकतो वायव्यादिपशौ प्राप्तम्। तत्राग्निशब्दस्य वाय्वादिप्रकाशनेऽसामर्थ्यात्तत्समर्थं वाय्वादिपदमागमयितव्यम्? न वा? इति संशयः। सौर्यादौ सूर्यादिशब्दवदागमयितव्यम्। न च "यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या" इति वचनान्नोह इति वाच्यम्। न हीदं वचनं विकृतावूहनिषेधपरम्, किन्त्वेतस्य केवलाग्निप्रकाशकसूक्तस्याग्नीषोमदेवताकप्रकृतिभूतपशावसवेतार्थतया आग्नेये सवनीयादिपशावुत्कर्षे प्राप्ते तन्निवारणेन प्रकृतौ निवेशोऽनेन क्रियते, न तु विकृतावूहनिषेधः। तथा सत्युत्कर्षप्रसङ्गात्। न चैवं सत्याग्नेय्येव

१. विधानान्तानु. अ.

२. विधिस्पर्शः. ख.

३. ग्रहणादिद्रव्यद्वारा. अ, क.

मनोतेत्यवधारणं नोपपद्यते। तद्विकृतावूहेन अनाग्नेय्या मनोतायाः प्राप्तौ तन्निवारणाय, प्रकृतौ तु ऊहाभावेनानाग्नेय्याः प्राप्त्यभावादनर्थकमवधारणं स्यादिति शङ्क्यम्। प्रकृतावाग्नेयी मनोता कार्यैव न तूत्कृष्टव्येत्येवमवधारणसम्भवात्। न चैवमपि प्रकृतावसमवेतार्थाया एवाग्नेय्या वचनान्निवेशे सत्यदृष्टार्थतैव स्यात्। तथा च विकृतौ कथमूहसिद्धिरिति वाच्यम्। लक्षणया आग्नेय्या एव मनोतायाः प्रकृतौ समवायसम्भवात्। प्रकृतौ हि देवतात्वमग्नीषोमीययोर्व्यासज्यवृत्ति। अतोऽग्निशब्दोऽसावग्निद्वारा लक्षणया देवताभूतावग्नीषोमौ शक्नोति प्रकाशयितुम्। अतो वायव्यादिषु मनोतासूक्ते भवत्येव यथायथमूहः। यथा "धान्यमसि धिनुहि" इति मन्त्रे धान्यप्रकृतिकतण्डुले लक्षणया प्रकृतौ धान्यशब्दस्य समवेतार्थत्वात्तरसमयपुरोडाशे भवत्यूह इति तृतीयान्त्ये स्थितम्, तद्वदिति प्राप्ते, सिद्धान्तयति—

## मनोतायान्तु वचनादविकारस्स्यात् ॥ ४१ ॥

मनोताशब्दयोगान्मनोता। तुर्वैषम्ये। अस्तु याज्यापुरोनुवाक्ययोः प्राकृतयोर्विकृतौ बाधः, याज्यापुरोनुवाक्यान्तरागमश्च। इह तु मनोतासूक्तेऽग्निशब्दस्य वायव्यादिपशुषु बाधः। तत्स्थाने वाय्वादिपद[प्र]क्षेपात्मक ऊहश्चेत्येवं विकारो न स्यात्, किन्त्वग्निशब्द एव प्रयोक्तव्यः। कुतः? वचनात्–"यद्यप्यन्यदेवत्यः पशुराग्नेय्येव मनोता कार्या" इत्यवधारणेन विकृतावग्निशब्दादन्यस्योहप्राप्तस्य निषेधविधानात्। न चेदं वचनमुत्कर्षनिषेधपरमित्युक्तमिति वाच्यम्, उत्कर्षस्यैवाप्रसक्तत्वेन तन्निषेधायोगात्। प्रकृतावत्यन्तासमर्थस्यैव हि उत्कर्षः। मनोतासूक्तस्य त्वाग्नेयस्य नास्ति प्रकृतावग्नीषोमदेवताकायामत्यन्तासामर्थ्यम्, उक्तरीत्या लक्षणया तत्राग्निशब्दस्याग्नीषोमपरत्वसम्भवात्। न चैवं पूषानुमन्त्रणमन्त्रस्यापि लक्षणया प्राकृतदेवताभिधानसमर्थत्वादुत्कर्षो न स्यादिति वाच्यम्, वैषम्यात्। पूष्णः प्राकृतदेवताग्न्यादेश्च सम्बन्धस्याक्लृप्तत्वाल्लक्षणापि न सम्भवति। इह त्वग्नीषोमयोरत्यन्तसहचरिततया सम्बन्धस्य क्लृप्तत्वाल्लक्षणा सम्भवतीति। किञ्च यत्र मन्त्रस्य विकृतिषु सामान्यसम्बन्धस्सिद्धः, तत्रैव लिङ्गबलादुत्कर्षः, लिङ्गस्याभिधेयार्थशेषत्वबोधनमात्रक्षमतया क्रतुशेषत्वबोधनेऽसामर्थ्येन तदर्थलिङ्गप्रवृत्तेस्सामान्यसम्बन्धपूर्वकतायास्तृतीये 'लिङ्गक्रमसमाख्यानात्' इत्यत्रोक्तत्वात्। इह सामान्यतो विकृतिसम्बन्धाभावान्नोत्कर्षः। पूषानुमन्त्रणमन्त्रस्य त्वनुमन्त्रण-

त्वसमाख्यानादेव सामान्यसम्बन्धस्सिद्ध इति वैषम्यम्। ततश्चोत्कर्षस्यात्राप्रसक्तत्वान्न तन्निवृत्यर्थं "यद्यपि" इत्यादिवचनमिति युक्तम्। अतो विकृतिपशुषु यथादेवतमूहे प्राप्ते तन्निवृत्यर्थं "यद्यपि" इत्यादिवचनमिति न तत्रोह इत्यग्निशब्दस्य न बाधः॥

इति त्रयोविंशं मनोताधिकरणम्॥ २३ ॥

२४

वैश्यस्तोमे श्रूयते-"कण्वरथन्तरं पृष्ठं भवति" इति। प्रकृतौ तु रथन्तरं बृहद्वा पृष्ठम्। तत्र रथन्तरं तावत् "अभि त्वा शूर" इत्यृच्युत्पन्नम्। बृहत्तु "त्वामिद्धि" इत्यचि। तदुभयस्थानापन्नमिदं कण्वरथन्तरमिति नवमस्य द्वितीये स्थितम् 'अप्राकृते तद्विकाराद्विरोधाद्व्यवतिष्ठेरन्' इत्यत्र। तदिदं कण्वरथन्तरं साम किं रथन्तरयोनौ बृहद्योनौ वा गेयम्? उत रथन्तरयोनौ? अथवा स्वयोनौ "पुनानस्सोमधारया" इत्यस्यामृचि? इति संशयः। प्रकृतितस्तावद् रथन्तरं बृहच्च सयोनिकमेव वैश्यस्तोमे प्राप्तम्। तदुभयोस्साम्नोर्गीतिविशेषात्मकयोः स्थाने कण्वरथन्तराख्यं साम गीत्यात्मकं विधीयते। ततश्च प्राकृतं रथन्तरं बृहच्च निवर्तते। तदुभययोन्योः ऋचोः "अभि त्वा शूर" "त्वामिद्धि" इत्यनयोश्चोदकप्राप्तयोर्न किञ्चिन्निवर्तकमस्ति। अतस्तयोरन्यतरस्यामृचि कण्वरथन्तरगानम्। ननु प्रकृतौ रथन्तरबृहत्सामविधिबलादेव () सिंहपञ्जरन्यायादर्थादेव तदुभययोन्योः प्राप्तिः। तयोश्चार्थिकत्वान्न विकृतावतिदेशसम्भवः। ततश्च तुल्यन्यायतया कण्वरथन्तरविधावप्यर्थादेव स्वयोनिरेव प्राप्नुयादिति चेन्न; प्रकृतौ हि रथन्तरबृहद्योनी क्रमप्रकरणाभ्यामङ्गत्वेनावगते न त्वार्थिके, धेनुतुल्यन्यायतया () कण्वरथन्तरेऽपि स्वयोनिरेवार्थात् प्राप्नुयात्। अतश्चोदकप्राप्तयोः रथन्तरबृहद्योन्योरेव कण्वरथन्तरगानमित्युत्सूत्रः प्रथमः पक्षः॥

तमिमं निराकुर्वन् द्वितीयपक्षयति—

**पृष्ठार्थेऽन्यद्रथन्तरात्तद्योनिः पूर्ववत्वात् स्यादृचां प्रविभक्तत्वात्॥ ४२ ॥**

पृष्ठकार्ये रथन्तरादन्यद् यत्-कण्वरथन्तरं साम विहितं तत्, तद्योनिस्स्यात्-सा प्राकृती ',अभि त्वा शूर' इति] ऋग्योनिः यस्य तथाविधं भवितुमर्हति। कुतः?

पूर्ववत्त्वात्–वैश्यस्तोमस्य ज्योतिष्टोमपूर्वकत्वात्। ज्योतिष्टोमे च रथन्तरयोनेस्सत्वेन तस्या इह चोदकतः प्राप्तेः। ननु प्रकृतितो बृहद्योनिरपि कुतो न स्यादित्यत आह—ऋचामिति। कण्वरथन्तरमिति रथन्तरशब्दो न रथन्तरयोनिभूताया एव ऋचः, प्रविभक्तत्वात्–अवगमितत्वात्। कण्वस्य रथन्तरमिति यौगिको ह्ययं शब्दः। रथन्तरशब्दश्च यूपशब्दवद्धर्मनिमित्तकः केवलवैदिकः। अतो रथन्तरधर्मस्य ऋचोऽपि योनिभूताया इह प्राप्तिः। न च कण्वरथन्तरशब्दोऽश्वकर्णादिशब्दवत् केवलरूढ इति शङ्क्यम्, सम्भवति यौगिकत्वे रूढिकल्पनाया अनुचितत्वात्। सूत्रे ऋचामिति बहुवचनन्तु अवयवाभिप्रायम्, प्रयोगाभिप्रायं वा॥

अथ सिद्धान्तयति—

## स्वयोनौ वा सर्वाख्यत्वात्॥ ४३॥

कण्वरथन्तरं [स्व]योनावेव गेयम्, न तु रथन्तरादियोनौ। कुतः? सर्वाख्यत्वात्–योनीनामुत्तरासाञ्चेति सर्वासामृचामाख्या पाठः यस्मिन्नुत्तराग्रन्थे स-सर्वाख्यः। "एकं साम तृचे क्रियते स्तोत्रियम्" "यद्योन्यां तदुत्तरयोर्गायति" इति वचनार्थानुष्ठानाय ऋग्विशेषापेक्षायां तद्विवेचनाय तत्तत्क्रतुक्रमेण सर्वेषाम[पि स्तोत्रिय]साम्नामेकैकस्य साम्न एकैका योनिर्द्वे द्वे उत्तरे इत्येवं योनय उत्तराश्च ऋच उत्तराग्रन्थे पठिताः, कण्वरथन्तरयोनिरपि तत्र पठिता। सा च यत्र क्रतौ कण्वरथन्तरं तदङ्गत्वेन विज्ञायते, पाठबलेन तथा विध्युन्नयात्। एतेनोत्तराग्रन्थे पाठमात्रम् न विधिः, चोदकस्तु विधिरूपत्वात् प्रबल इति चोदकप्राप्तरथन्तरादियोनावेव कण्वरथन्तरमिति प्रत्युक्तम्; क्रत्वर्थपाठानर्थक्यपरिहाराय तद्विधेरावश्यकत्वेन चोदकप्राबल्यासम्भवात्। तस्मात् कण्वरथन्तरं स्वयोनावेव गेयम्॥

अथ यूपशब्दसाधर्म्यमाशङ्क्य निराचष्टे—

## यूपवदिति चेन्न कर्मसंयोगात्॥ ४४॥

कण्वरथन्तरशब्दे रथन्तरशब्दाद् यूपशब्दवद् धर्मनिचयप्रवृत्तिनिमित्तकाद् रथन्तरधर्मस्य तद्योनेरपि प्राप्तिरिति चेन्न; कुतः? कर्मसंयोगात्–यूपशब्दस्य कर्मणा तक्षणाष्टाश्रीकरणादिसंस्कारनिचयेन प्रवृत्तिनिमित्तेनैव वेदे वाचकतया संयोगावगमात्। रथन्तरशब्दस्य च गीतिविशेषमात्रे आर्षेयब्राह्मणे सङ्केतावगमात्।

न चारथन्तरे रथन्तरशब्दस्तद्धर्मलक्षक इति वाच्यम् । न हि कण्वस्य रथन्तरमिति यौगिकोऽयं शब्दः, अस्य सामविशेषस्य कण्वसम्बन्धे प्रमाणाभावेन तदनुवादेन रथन्तरधर्मविध्यसम्भवात्, तत्सम्बन्धस्यापि विधौ वाक्यभेदापत्तेः । तस्मात् स्वयोनावेव कण्वरथन्तरमिति । एवञ्च समाम्नायसिद्धाया ऋचो न परित्यागः, नाप्यृगन्तरसञ्चारः, अन्यथा तदुभयमपि कल्पनीयं स्यात् ॥

इति चतुर्विंशं कण्वरथन्तरस्य स्वयोनौ गानानुष्ठानाधिकरणम् ॥२४॥

२५

कण्वरथन्तरं स्वयोनौ गेयम्, न तु प्राकृत्यां रथन्तरयोनाविति स्थितम् । तत्रैव कण्वरथन्तरे "एकं साम तृचे क्रियते" "यद्योन्यां तदुत्तरयोर्गायति" इत्युत्तरयोर्गाने संशयः, किं रथन्तरोत्तरयोर्बृहदुत्तरयोर्वा प्राकृत्योर्गानम् ? उतोत्तराग्रन्थपठितयोरेव स्वयोन्युत्तरयोः ? इति । तत्र पूर्वपक्षयति—

## कार्यत्वात्तूत्तरयोर्यथाप्रकृति ॥४५॥

तुर्वैषम्ये । कण्वरथन्तरस्य योनिगानं स्वयोनावेव भवतु, उत्तरागानन्तु यथाप्रकृति रथन्तरबृहदन्यतरस्योत्तरयोस्स्यात्, चोदकानुग्रहात् । ननु पूर्वाधिकरणन्यायेनोऽत्तराग्रन्थपठितयोः स्वोत्तरयोरेव गानं युक्तमित्यत आह—कार्यत्वादिति । उत्तराग्रन्थपठितयोरपि स्वोत्तरयोः क्रियमाणस्य कण्वरथन्तरगानस्य साससमाम्नायसिद्धत्वाभावेन पुरुषकृतिसाध्यतया सामसमाम्नायसिद्धाया ऋचः परित्यागः ऋगन्तरसञ्चारश्चापरिहार्यः, तद्वरं चोदकादरणे प्राकृत्योरेव रथन्तरबृहदन्यतरस्योत्तरयोर्गानमिति ॥

अथ सिद्धान्तयति—

## समानदेवते वा तृचस्याविभागात् ॥४६॥

वाशब्दोऽवधारणे । स्वोत्तरयोरेव कण्वरथन्तरम्, न तु प्राकृत्योः । कुतः ? समानदेवते तृचस्याविभागात्—देवतेति छन्दसोऽप्युपलक्षणम् । समानदेवताच्छन्दस्के ऋक्त्रये "एकं साम तृचे क्रियते" इति तृचशब्दस्य नियमात् । यथा चैतत्तथा नवमस्य द्वितीये निरूपितम् 'तदभ्यासस्समासु स्यात्' इत्यत्र । कण्वरथन्तरस्य च स्वयोनौ "पुनानस्सोम धारया" इत्यृचि बृहद्रथन्तरान्यतरस्योत्तरयोश्च

समावेशे सति तृचस्य समानच्छन्दोदेवतत्वनियमो विरुध्येत। तस्मात् स्वोत्तरयोरेवोत्तरयोर्गानं कण्वरथन्तरस्य ॥

इति पञ्चविंशं कण्वरथन्तरस्य स्वयोन्युत्तरयोर्गानाधिकरणम् ॥२५॥

२६

अग्निष्टुन्नाम कश्चिदेकाहो विकृतिसोमक्रतुः। तत्र "आग्नेया ग्रहा भवन्ति" इति श्रुतम्। तत्र सोमयागप्रचारस्सर्वोऽप्याग्नेय एव। इन्द्रादिदेवताः प्रकृतिप्राप्तास्तत्र निवर्तन्ते। तत्र च प्रकृतितः स्तोत्रशस्त्राणि प्राप्तानि। तानि च प्रकृताविन्द्रादिनानादेवत्यानि। इह च तानि किमविकारेण कर्तव्यानि? उताग्नेयान्येव कार्याणि? इति संशयः। आग्नेयान्येवेति ब्रमः। प्रकृतौ हि स्तुतशस्त्राणीन्द्रादिशब्दयुक्तानि। इह चेन्द्रादिशब्दा न सोमयागीयाग्निप्रकाशने समर्थाः। ऊहश्च न सम्भवति, "पूयति वा एतदृचोऽक्षरं यदेनदूहति तस्मादृचं नोहेत्" इति निषेधात्। ततश्च प्राकृतीनामृचां निवृत्तावग्निप्रकाशनसमर्थाः काश्चित् ऋच ऋक्समाम्नायादानीय स्तुतशस्त्राणि कार्याणीति प्राप्ते, सिद्धान्तयति—

**ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारस्स्यात् ॥४७॥**

"आग्नेया ग्रहा भवन्ति" इति सोमयागप्रचाराणां देवताभेदेऽवगते सति उक्तरीत्या ऋगन्तरागमनरूपो विकारो न स्यात्, यथाप्रकृत्येव नानादेवत्यास्वृक्षु स्तोत्रशस्त्राणि कर्तव्यानि। कुतः? कर्मत्वात्—द्वितीयाद्यपादे स्तुतशस्त्राधिकरणे स्तुतशस्त्राणां सोमयागीयदेवताप्रकाशनद्वारा संस्कारकर्मत्वं निराकृत्यादृष्टार्थकर्मत्वव्यवस्थापनात्। ननु छान्दोग्यब्राह्मणे "आग्नेयीषु स्तुवते" इति प्रक्रम्य "अग्न आयूंषि पवसे इति प्रतिपत्" इत्यादिना प्रतिस्तोत्रम् आग्नेया एव ऋच ऋक्समाम्नायात् प्रत्यक्षमेवावगमिताः। बह्वृचब्राह्मणे च क्वचित् "आग्नेयीः शंसति" इति प्रक्रम्याग्नेया ऋचस्समाम्नाताः। तथा च शाखान्तरविषयमधिकरणम्, न ह्यकस्मात् प्रमाणभूत आचार्यो ब्रवीति। आश्वलायनसूत्रे 'तिष्ठा हरी यो जात एवेति मध्यन्दिने' इत्येतावन्मात्रविकारेण यथाप्रकृत्येव शस्त्रसन्निवेशस्योक्तत्वाच्च। यद्यपि स्तुतशस्त्राधिकरणे तयोरदृष्टार्थत्वं व्यवस्थापितमेव, प्रयोजनञ्चाभिहितमेव, तथापि प्रयोजनान्तरपरमिति न पुनरुक्तिः ॥

इति षड्विंशमग्निष्टुति स्तुतशस्त्राणामविकाराधिकरणम् ॥२६॥

२७

चातुर्मास्येषु श्रूयते-"पृषदाज्यं गृह्णाति" इति, "द्वयं वा इदं सर्पिश्च दधि च" इति, "पृषदाज्येनानूयाजान् यजति" इति च। प्रकृतावाज्यं केवलं आनूयाजिकद्रव्यम्, इह तु पृषदाज्यमिति स्थितिः। प्रकृतौ तावदावाहनादिनिगदेषु "देवां आज्यपां आवह" इत्यादि पठितम्। आज्यं पिबन्तीत्याज्यपाः प्रयाजानुयाजदेवताः। "यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्, यदुपभृति प्रयाजानूयाजेभ्यस्तत्" इति तेषामाज्यहविष्ट्वात्। यद्यप्याज्यभागावप्याज्यहविष्कौ, तथापि तद्देवतयोः "अग्निमग्न आवह सोममावह" इत्येवं पृथगनुक्रान्तत्वादाज्यपशब्देन तदभिधानं न भवति। 'देवां आज्यपां आवहेति तत् प्रयाजानुयाजदेवता आह" इति वाक्यशेषाच्च। तदिह पशौ प्रकृतितः प्राप्तेषु निगदेषु 'देवानाज्यदधिपानावह स्वाहा देवां आज्यदधिपान्' इत्येवं प्रयोक्तव्यम्? उत दधिपानित्येव? यद्वा पृषदाज्यपान्? इति, अथवा आज्यपानित्यविकारेणैव? इति। तत्र प्रथमपक्षयति—

**उभयपानात् पृषदाज्ये दध्नोऽपि स्यादुपलक्षणं निगदेषु पातव्यस्योपलक्षणत्वात् ॥४८॥**

निगदेषु-आवाहनादिनिगदेषु पृषदाज्ये-पृषदाज्यद्रव्यकदेवतानिर्देशाय आज्यदधिपानित्येवमाज्यस्य दध्नोऽप्युपलक्षणं स्यात्-तदीयशब्दद्वयप्रयोगस्स्यात्। कुतः? पातव्यस्योपलक्षणत्वात्-प्रकृतौ हि प्रयाजानुयाजदेवतानां न स्वरूपेण निर्देशः, किन्त्वाज्यपत्वरूपेण। आज्यपशब्दश्चाज्यपानक्रियानिमित्तकः। तत्र चाज्यशब्दांशेन पातव्यस्याज्यस्याभिधानं द्रष्टव्यम्। तथा च पशौ दध्नाप्यभिधानमावश्यकम्। कुतः? उभयपानात्-इह ह्याज्यं प्रयाजद्रव्यं पृषदाज्यन्त्वनुयाजद्रव्यम्। तच्चाज्यं दधि चेत्युभयरूपम्। तच्चात्र प्रयाजानुयाजदेवतानां पातव्यम्। तस्मादावाहनादि निगमेषु दध्नोऽपि निर्देश इति॥

अत्र सिद्धान्ती प्रत्यवतिष्ठते—

**न वा परार्थत्वाद्यज्ञपतिवत् ॥ ४९ ॥**

वा शब्दः प्रत्यवस्थाने। न दध्न उपलक्षणं युक्तम्। कुतः? परार्थत्वात्-प्रकृतौ ह्याज्यपशब्दः प्रयाजानुयाजदेवतानां प्रकाशनार्थः। ताश्च तत्राज्यपशब्देन प्रकाशिताः। इह च प्रयाजानां केवलमाज्यं द्रव्यम्, अनुयाजानान्त्वाज्यं दधि

च। तत्र चैकेनाज्यपशब्देनैव चोदकानुगृहीतेन प्रयाजानुयाजदेवताप्रकाशनस्योपपत्तेर्न दध्न उपलक्षणे प्रयोजनमस्ति, यज्ञपतिवत्। यथा "दैव्या अध्वर्यव उपहूता उपहूता मनुष्या य इमं यज्ञमवान् यज्ञपतिं वर्द्धान्" इति मनुष्याध्वर्यव विशेषणमुखेन इडाप्रशंसार्थं प्रकृतौ सङ्कीर्त्यते यज्ञपतिमिति। बहुयजमानकेऽपि सत्रे एकमेव यज्ञपतिमादाय तत्प्रशंसा सम्भवतीति यज्ञपतिमित्येकवचनान्त एव शब्दः प्रयुज्यते, न तु बहुवचनान्ततयोह्यते, तद्वत्॥

अथ प्रथमपक्षी परिहरति—

**स्याद्वावाहनस्य तादर्थ्यात्॥ ५०॥**

वाशब्दोऽवधारणे। स्यादेव दध्नश्चोपलक्षणं निगमेषु। कुतः? आवाहनादिनिगमगतस्याज्यपशब्दस्य प्रकृतौ प्रयाजानुयाजीयद्रव्यदेवताप्रकाशनार्थत्वात्। यज्ञपतिशब्दस्योक्तरीत्या परार्थतया सत्रेऽविकारेऽपि प्रकृतौ प्रयाजानुयाजदेवतावत्तदीयद्रव्यस्याप्यनुष्ठेयतया यज्ञपतिशब्देन प्रकाशितत्वादिहापि पशौ तदुभयद्रव्यप्रकाशनमावश्यकमिति भावः॥

पुनस्सिद्धान्ती प्रत्यवतिष्ठते—

**न वा संस्कारशब्दत्वात्॥ ५१॥**

एवशब्दः प्रत्यवस्थाने। न दध्न उपलक्षणं युक्तम्। कुतः? संस्कारशब्दत्वात्-पृषच्छब्दस्य दधिमिश्रणप्रयुक्तचित्रत्वनिमित्तकत्वात्। प्राकृतानुयाजानुवादेन न ह्यत्र पृषदाज्यद्रव्यविधिः। तत्र चाज्यस्य प्राप्तत्वात्तत्र चित्रत्वगुणविधिः पर्यवस्यति। एवञ्च दध्नः प्राकृताज्यगुणत्वात्तत्स्थानापत्त्यभावादाज्यपानित्येव प्रयोक्तव्यम्, न त्वाज्यदधिपानिति॥

अथ प्रथमपक्षी परिहरति—

**स्याद्वा द्रव्याभिधानात्॥ ५२॥**

वा शब्दोऽवधारणे। स्यादेव दध्नोऽप्युपलक्षणम्। कुतः? द्रव्याभिधानात्—"द्वयं वा इदं सर्पिश्च दधि च" इति वाक्यशेषेणाज्यस्य दध्नश्च द्रव्यस्य तुल्यतयैवानुक्रमणात्। तस्मादाज्यदधिपानावहेत्येवं निगदेषु दध्नोऽप्युपलक्षणमिति प्रथमः पक्षः॥

अथ चतुर्थपक्षेण सिद्धान्तयति—

**दध्नस्तु गुणभूतत्वादाज्यपा निगमास्स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात् ॥ ५३ ॥**

तुरवधारणे। आवाहनादिनिगदेषु आज्यपाः-आज्यपशब्दा एव, निगमाः—निगमयितव्याः उपलक्षयितव्यास्स्युः, न तु दधिशब्दोऽपि। कुतः? दध्नो गुणभूतत्वात्। तत्र कुतः? गुणत्वं श्रुतेः-पृषदाज्येनेति तृतीयाश्रुत्यानुयाजेषु पृषदाज्यविधिः। तत्राज्यस्य प्रकृतित एव प्राप्तत्वात् पृषत्त्वगुणमात्रमनुयाजेषु विधीयते, न त्वाज्ये पृषत्ताविधिः, पृषदाज्यपदस्यैकप्रसरतया तत्र विध्यनुवादयोरनुपपत्तेः। ततश्चानुयाजेष्वेव पृषत्तागुणो विधीयमानस्तदङ्गे आज्ये पर्यवस्यति। ततश्च पृषत्तागुणस्यानुयाजाङ्गत्वं श्रुत्यावगतम्। पृषत्त्वं नाम चित्रत्वम्। तत्तावद्दधिमिश्रणेन भवति। ततश्च चित्रत्वगुणसम्पादनार्थत्वाद्दधि आज्यस्य गुणभूतम्, न त्वाज्यवत् प्रधानं भवितुमर्हति। अनुयाजीयप्रधानद्रव्यस्यैवाज्यपशब्देनाभिधानं प्रकृतौ स्थितमिति नात्र दध्न उपलक्षणम्। ननु दध्नो हविष्ट्वाभावे कथं हविस्संस्कारके ग्रहणे "द्वयं वा इदं सर्पिश्च दधि च" इति प्राधान्यमित्यत आह—आज्यप्रधानत्वादिति। "पृषदाज्यं गृह्णाति द्वयं वा इदं सर्पिश्च दधि च" इति ग्रहणं श्रुतम्। तच्चानुयाजीयद्रव्यसंस्कारः। अतो ग्रहणेऽप्याज्यमेव प्रधानम्, पृषत्ता तु तस्य गुणः। तत्सम्पादनार्थमेव दधिग्रहणम्, न तु यागार्थहविष्ट्वेन। न चाभिषवसंयुक्तपूतीकवद् ग्रहणसंस्कारान्वयबलादेव हविष्ट्वेनोपयोग इति वाच्यम्, तृतीयाश्रुत्यनुगृहीतेन पृषत्त्वगुणकाज्येनावरुद्धतया कल्पनानुपपत्तेः। एवञ्च दध्नो ग्रहणे तुल्यवन्निर्देशोऽर्थवादमात्रम्। तस्मादाज्यपशब्देनैवाभिधानम्, न तु दधिपशब्देनापि ॥

अथ द्वितीयपक्षी प्रत्यवतिष्ठते—

**दधि वा स्यात् प्रधानमाज्ये प्रथमान्त्यसंयोगात् ॥ ५४ ॥**

वा शब्दः प्रत्यवस्थाने। अनुयाजेषु दधि प्रधानं द्रव्यम्, आज्यन्तु तद्गुणभूतम्। कुतः? आज्ये प्रथमान्त्यसंयोगात्—आज्ये विषये प्रथमान्त्याभ्यां संयोगाभ्यां प्रथमशब्देन दधि ग्रहणतः प्राक् कर्तव्यमुपस्तरणमुच्यते। दधिग्रहणोत्तरकालीनमभिघारणमन्त्यशब्देन विवक्षितम्। एवं हि श्रूयते "द्विराज्यस्योपस्तृणाति

सकृद्दधि गृह्णाति सकृदाज्यस्याभिघारयति" इत्यादि । ग्रहीष्यमाणस्य हविषः अधिकरणसंस्कारे उपस्तृणातिर्वर्त्तते, गृहीतस्य हविषः उपरिसंस्कारेऽभिघारयतिर्वर्त्तते । अतो दधिसंस्कारार्थमाज्यम्, दध्येव तु हविरिति तस्यैव निगमेषूपलक्षणं दधिपानावहेत्यादि । पृषदाज्यशब्दस्तु पृषत् चित्रम् आज्यं यस्येति बहुव्रीहिणा दधिपर एव भविष्यति ॥

अथ सिद्धान्ती निराचष्टे—

**अपि वाज्यप्रधानत्वाद् गुणार्थे व्यपदेशे भक्त्या संस्कारशब्दस्स्यात् ॥ ५५ ॥**

अपिवेति नार्थे । न दधि हविः । कुतः? आज्यप्रधानत्वात्–पृषच्च तदाज्यञ्चेति कर्मधारयसमासाश्रयणेनाज्यस्यैव प्राधान्यावगमात् । बहुव्रीह्याश्रयणे च गौरवात् । उक्तरीत्या पृषदाज्येनेति तृतीयाश्रुत्या पृषत्ताया गुणत्वेन आज्यस्य प्रधानत्वेन चावगमाच्च । तत्र चाज्यस्य ग्रहणं प्रकृतितः प्राप्तमुपस्तृणात्यभिघारयतिभ्यामनूद्य द्विस्सकृदिति विधीयते । ततश्च द्विस्सकृदिति गुणविधानार्थे व्यपदेशे–अनुवादे संस्कारविशेषनिमित्तक उपस्तृणातिरभिघारयतिश्चागत्या स्यात् । लक्षणया ग्रहणमात्रे वर्तितुमर्हति, अनुवादे लक्षणाया अदोषत्वात् । तथा च द्विरुपस्तृणाति द्विर्गृह्णातीत्यर्थः । सकृदभिघारयति गृह्णातीत्यर्थः । मध्यतो दधनि गृह्यमाणे पूर्वग्रहणमुपस्तरणमिव पश्चाद् ग्रहणमभिघारणमिव [1]भाति, पौर्वापर्यसाम्यात् ॥

अथ तृतीयपक्षी प्रत्यवतिष्ठते—

**अपि वाख्याविकारत्वात्तेन स्यादुपलक्षणम् ॥ ५६ ॥**

अपि वेति प्रत्यवस्थाने । दध्याज्ययोः परस्परसंसर्गात् पृषदाज्यं नाम द्रव्यान्तरमुत्पद्यते । यथा धान्यविशेषकरणानां प्रभूतजलमिश्रणे सति आरनालम्, यथा ताम्रसीसयोर्मिश्रणे कांस्यम्, यथा वा त्रपुताम्रयोर्मिश्रणे सति पित्तलमित्यादि । एवञ्च द्रव्यान्तरस्य पृषदाज्यशब्द आख्याविकारः संज्ञाविशेषः । समुदायशक्त्या रूढ इति यावत् । प्रकृतौ चानूयाजद्रव्यस्याज्यपशब्देनाभिधानं दृष्टम् । इह च तस्य द्रव्यान्तरस्य तेनाभिधानासम्भवात् पृषदाज्यपानावहत्येवं पृषदाज्यपशब्देनैवाभिधानमुचितम् ॥

---

१. भवति. अ, क.

अथ सिद्धान्ती निराचष्टे--

न वा स्याद् गुणशास्त्रत्वात् ॥ ५७ ॥

वा शब्दोऽवधारणे। नैव पृषदाज्यपशब्दस्योपलक्षणं युज्यते। कुतः? गुणशास्त्रत्वात्-"पृषदाज्येनानूयाजान् यजति" इत्यस्योक्तरीत्या अनुयाजेषु आज्यद्वारा पृषत्तागुणविधायकत्वादित्यर्थः। न हि संसर्गमात्रेण द्रव्यान्तरत्वम्, किन्तु रसवर्णाद्यन्यत्वेन। न चात्र रसवर्णादिभेदोऽस्ति। अतो द्रव्यान्तराभावान्न समुदायशक्तिकल्पनावकाशः। न चैवमपि चित्रत्वगुणविशिष्टाज्याभिधानार्थं पृषदाज्यपशब्दप्रयोग आवश्यक इति वाच्यम्। प्रकृतौ हि चतुर्गृहीतत्वादिगुणेषु सत्स्वपि आज्यपशब्देनैवोपलक्षणं दृष्टम्। इहापि पृषत्त्वगुणानादरेणाज्यपशब्दस्यैव प्रयोग इत्यनवद्यम् ॥

इति सप्तविंशं पृषदाज्याधिकरणम् ॥ २७ ॥

इति श्रीमत्सन्ततसन्तन्यमानश्येन-कूर्म-षोडशार-रथचक्राकाराद्यनेकगुणविराजमान-
महाग्निविलसित प्रौढापरिमितमहाध्वरस्य श्रीशाहजि-शरभजि-तुक्कोजि
भोजखलचोलमहीमहेन्द्रामात्यधुरन्धरस्य श्रीमत आनन्दरायविद्व-
त्सार्वभौमस्य पञ्चपुरुषीपोष्येण बाल्य एव तद्दयानिर्वर्तितापरि-
मितमहाग्निबिजृम्भितसर्वपृष्ठाप्तोर्यामवाजपेयादिप्रमुख-
सोममखसन्तर्पितशतमुखप्रमुखबर्हिर्मुखेन श्रीमहा-
देववाजपेययाजिसुतेनान्नपूर्णागर्भजातेना-
पारपदवाक्यप्रमाणपारावारपारीणाग्र-
जन्मविश्वेश्वरवाजपेययाजितो लब्ध-
विद्यावैशद्येन श्रीवासुदेवदीक्षित-
विदुषा विरचितायामध्वर-
मीमांसाकौतुहलवृत्तौ

**दशमस्याध्यायस्य चतुर्थः पादः ॥**

---

श्रीः

## अध्वरमीमांसाकुतूहलवृत्तेस्तृतीयभागस्य

# सूत्रसूची

सूत्रसूची समाप्ता

